बलाहकास्तु केशाः स्युः सन्ध्ये ते वाससी विभोः ॥ ३२ ॥

राजश्रीजगदम्बायाश्चन्द्रमास्तु मनः स्मृतः ।

विज्ञानशक्तिस्तु हरी रुद्रोऽन्तःकरणं स्मृतम् ॥ ३३ ॥

अश्वादि जातयः सर्वाः श्रोणिदेशे स्थिता विभोः ।

अतलादिमहालोकाः कट्यधोभागतां गताः ॥ ३४ ॥

एतादृशं महारूपं ददृशुः सुरपुङ्गवाः । ज्वालामालासहस्राढ्यं लेलिहानं च जिह्वया दंष्ट्राकटकटारावं वमन्तं वह्निमक्षिभिः । नानायुधधरं वीरं ब्रह्मक्षत्रौदनं च यत् सहस्रशीर्षनयनं सहस्रचरणं तथा । कोटिसूर्यप्रतीकाशं विद्युत्कोटिसमप्रभम् भयङ्करं महाघोरं हृदक्ष्णोस्त्रासकारकम् । ददृशुस्ते सुराः सर्वे हाहाकारं च चक्रिरे विकम्पमानहृदयामूर्च्छामापुर्दुरत्ययाम् । स्मरणं च गतं तेषां जगदम्बेयमित्यपि अथ तेयेस्थितावेदाश्चतुर्दिक्षुमहाविभोः । बोधयामासुरत्युग्रंमूर्छातोमूर्च्छितान्सुरान् अथ ते धैर्यमालम्ब्य लब्ध्वा च श्रुतिमुत्तमाम् । प्रेमाश्रुपूर्णनयनारुद्धकण्ठास्तुनिर्जराः

बाष्पगद्गदया वाचा स्तोतुं समुपचक्रिरे ।

देवाऊचुः

अपराधं क्षमस्वाऽम्ब! पाहि दीनांस्त्वदुद्भवान् ॥ ४२ ॥

कोपं संहर देवेशि! सभयारूपदर्शनात् । का ते स्तुतिः प्रकर्तव्या पामरैर्निर्जरैरिह

स्वस्याऽप्यज्ञेय एवाऽसौ यावान्यश्च स्वविक्रमः ।

तदर्वाग्जायमानानां कथं स विषयो भवेत् ॥ ४४ ॥

नमस्ते भुवनेशानि! नमस्ते प्रणवात्मिके !।

सर्ववेदान्तसंसिद्धे! नमो ह्रीङ्कारमूर्तये ॥ ४५ ॥

यस्मादग्निः समुत्पन्नो यस्मात्सूर्यश्च चन्द्रमाः ।

यस्मादोषधयः सर्वास्तस्मै सर्वात्मने नमः ॥ ४६ ॥

यस्माच्च देवाः सम्भूताःसाध्याःपक्षिणएवच । पशवश्चमनुष्याश्चतस्मैसर्वात्मनेनमः प्राणापानौ व्रीहियवौ तपः श्रद्धाऋतं तथा । ब्रह्मचर्यंविधिश्चैवयस्मात्तस्मैनमोनमः

सप्त प्राणार्चिषोयस्मात्समिधःसप्तएवच । होमाःसप्ततथालोकास्तस्मैसर्वात्मनेनमः
यस्मात्समुद्रागिरयः सिन्धवःप्रचरन्तिच । यस्माद्दोषधयः सर्वारसास्तस्मैनमोनमः
यस्माद्यज्ञःसमुद्भूतोदीक्षायूपश्च दक्षिणाः । ऋचोयजूंषिसामानितस्मैसर्वात्मनेनमः
नमः पुरस्तात्पृष्ठे च नमस्ते पार्श्वयोर्द्वयोः । अध ऊर्ध्वंचतुर्दिक्षुमातर्भूयोनमोनमः
उपसंहर देवेशि! रूपमेतदलौकिकम् । तदेव दर्शयाऽस्माकं रूपं सुन्दरसुन्दरम् ॥५२

व्यास उवाच

इति भीतान्सुरान्दृष्ट्वा जगदम्बा कृपार्णवा । संहृत्य रूपं घोरं तद्दर्शयामास सुन्दरम्
पाशाङ्कुशवराभीतिधरं सर्वाङ्गकोमलम् । करुणापूर्णनयनं मन्दस्मितमुखाम्बुजम् ॥
दृष्ट्वा तत्सुन्दरं रूपं तदा भीतिविवर्जिता । शान्तचित्ताः प्रणेमुस्ते हर्षगद्गदनिःस्वनाः

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां सप्तमस्कन्धे
श्रीदेवीविराड्रूपदर्शनसहितदेवकृतस्तववर्णनंनाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

# चतुस्त्रिंशोऽध्यायः

## भगवत्यादेवान्प्रतिस्वरूपसाक्षात्कारोपाययोगप्रतिपादनपुरःसर समुपदेशवर्णनम्

श्रीदेव्युवाच

क यूयं मन्दभाग्या वै क्वेदं रूपं महाद्भुतम् । तथापि भक्तवात्सल्यादीदृशं दर्शितंमया
न वेदाध्ययनैर्योगैर्न दानैस्तपसेज्यया । रूपं द्रष्टुमिदं शक्यं केवलं मत्कृपां विना
प्रकृतंशृणुराजेन्द्र! परमात्माऽत्रजीवताम् । उपाधियोगात्सम्प्राप्तःकर्तृत्वादिकमप्युत
क्रियाः करोति विविधा धर्माधर्मैकहेतवः । नानायोनीस्ततःप्राप्यसुखदुःखैश्चयुज्यते
पुनस्तत्संस्कृतिवशान्नानाकर्मरतः सदा । नानादेहान्समाप्नोति सुखदुःखैश्च युज्यते ॥
घटीयन्त्रवदेतस्य न विरामः कदाऽपि हि । अज्ञानमेव मूलं स्यात्ततःकामःक्रियास्ततः

तस्मादज्ञाननाशाय यतेत नियतं नरः । एतद्धि जन्मसाफल्यं यदज्ञानस्य नाशनम् ॥

पुरुषार्थसमाप्तिश्च जीवन्मुक्तदशाऽपि च । अज्ञाननाशने शक्ता विद्यैव तु पटीयसी॥८

न कर्म तज्जंनोपास्तिर्विरोधाभावतोगिरे । प्रत्युताशा ज्ञाननाशेकर्मणानैवभाव्यताम्

अनर्थदानि कर्माणि पुनः पुनरुशन्ति हि । ततोरागस्ततोद्वेषस्ततोऽनर्थोमहान्भवेत्

तस्मात्सर्वप्रयत्नेन ज्ञानं सम्पादयेन्नरः । कुर्वन्नेवेह कर्माणीत्यतः कर्माऽप्यवश्यकम्

ज्ञानादेव हि कैवल्यमतः स्यात्तत्समुच्चयः । सहायतां व्रजेत्कर्म ज्ञानस्य हितकारि च

इति केचिद्वदन्त्यत्र तद्विरोधान्न सम्भवेत् ।

ज्ञानाद्धृद् ग्रन्थिभेदः स्याद्धृद्ग्रन्थौ कर्मसम्भवः ॥ १३ ॥

यौगपद्यं न सम्भाव्यं विरोधात्तु ततस्तयोः । तमःप्रकाशयोर्यद्वद्यौगपद्यंनसम्भवि

तस्मात्सर्वाणि कर्माणि वैदिकानि महामते ।

चित्तशुद्ध्यन्तमेव स्युस्तानि कुर्यात्प्रयत्नतः ॥ १५ ॥

शमो दमस्तितिक्षा च वैराग्यंसत्त्वसम्भवः । तावत्पर्यन्तमेव स्युःकर्माणिनततःपरम्

तदन्ते चैव संन्यस्यसंश्रयेद्गुरुमात्मवान् । श्रोत्रियंब्रह्मनिष्ठंचभक्तयानिर्व्याजयापुनः

वेदान्तश्रवणं कुर्यान्नित्यमेवमतन्द्रितः । तत्त्वमस्यादिवाक्यस्य नित्यमर्थं विचारयेत्

तत्त्वमस्यादिवाक्यं तु जीवब्रह्मैक्यबोधकम् । ऐक्येज्ञातेनिर्भयस्तुमद्रूपोहिप्रजायते

पदार्थावगतिः पूर्वं वाक्यार्थावगतिस्ततः । तत्पदस्य चवाच्यर्थोगिरेऽहंपरिकीर्तितः

त्वम्पदस्य च वाच्यार्थो जीव एव न संशयः । उभयोरैक्यमसिना पदेनप्रोच्यतेबुधैः

वाच्यार्थयोर्विरुद्धत्वादैक्यंनैव घटेत ह । लक्षणाऽतःप्रकर्तव्यातत्त्वमोःश्रुतिसंस्थयोः

चिन्मात्रं तु तयोर्लक्ष्यं तयोरैक्यस्य सम्भवः ।

तयोरैक्यं तथा ज्ञात्वा स्वाभेदेनाऽद्वयो भवेत् ॥ २३ ॥

देवदत्तः स एवायमितिवल्लक्षणा स्मृता । स्थूलादिदेहरहितो ब्रह्म सम्पद्यते नरः ॥

पञ्चीकृतमहाभूतसम्भूतः स्थूलदेहकः । भोगालयो जराव्याधिसंयुतः सर्वकर्मणाम्

मिथ्याभूतोऽयमाभाति स्फुटं मायामयत्वतः ।

सोऽयं स्थूल उपाधिः स्यादात्मनो मे नगेश्वर !॥ २६ ॥

ज्ञानकर्मेन्द्रिययुतं प्राणपञ्चकसंयुतम् । मनोबुद्धियुतं चैतत्सूक्ष्मं तत्कवयो विदुः
अपञ्चीकृतभूतोत्थंसूक्ष्मदेहोऽयमात्मनः । द्वितीयोऽयमुपाधिःस्यात्सुखादेरवबोधकः
अनाद्यनिर्वाच्यमिदमज्ञानं तु तृतीयकः । देहोऽयमात्मनोभातिकारणात्मा नगेश्वर !
उपाधिविलये जाते केवलात्माऽवशिष्यते । देहत्रयेपञ्चकोशाअन्तःस्थाःसन्तिसर्वदा
पञ्चकोशपरित्यागे ब्रह्म पुच्छं हि लभ्यते । नेति नेतीत्यादिवाक्यैर्मम रूपं यदुच्यते

न जायते म्रियते तत्कदाचिन्नाऽयं भूत्वा न बभूव कश्चित् ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ ३२ ॥

हन्तं चेन्मन्यते हन्तुं हतश्चेन्मन्यतेहतम् । उभौ तौनविजानीतो नाऽयं हन्तिनहन्यते

अणोरणीयान्महतो महीयानात्माऽस्य जन्तोर्निहितो गुहायाम् ।
तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमस्य ॥ ३४ ॥

आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च
इन्द्रियाणिहयानाहुर्विषयास्तेषुगोचरान् । आत्मेन्द्रियमनोयुक्तंभोक्तेत्याहुर्मनीषिणः

यस्त्वविद्वान्भवति चाऽमनस्कश्च सदाऽशुचिः ।
न तत्पदमवाप्नोति संसारं चाऽधिगच्छति ॥ ३७ ॥

यस्तु विज्ञानवान्भवति समनस्कः सदा शुचिः ।
स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥ ३८ ॥

विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति मदीयं यत्परं पदम्

इत्थं श्रुत्या च मत्या च निश्चित्याऽऽत्मानमात्मना ।
भावयेन्मामात्मरूपां निदिध्यासनतोऽपि च ॥ ४० ॥

योगवृत्तेः पुरास्वस्मिन्भावयेदक्षरत्रयम् । देवीप्रणवसञ्ज्ञस्यध्यानार्थंमन्त्रवाच्ययोः

हकारः स्थूलदेहः स्याद्रकारः सूक्ष्मदेहकः ।
ईकारः कारणात्माऽसौ ह्रींकारोऽहं तुरीयकम् ॥ ४२ ॥

एवं समष्टिदेहेऽपि ज्ञात्वा बीजत्रयं क्रमात् । समष्टिव्यष्ट्योरेकत्वंभावयेन्मतिमान्नरः

समाधिकालात्पूर्वं तु भावयित्वैवमादृतः ।

ततो ध्यायेन्निलीनाक्षोदेवीमां जगदीश्वरीम् ॥ ४४ ॥
प्राणापानौ समौ कृत्वा नासाऽभ्यन्तरचारिणौ ।
निवृत्तविषयाकाङ्क्षो वीतदोषो विमत्सरः ॥ ४५ ॥
भक्त्या निर्व्याजया युक्तो गुहायां निःस्वने स्थले ।
हकारं विश्वमात्मानं रकारे प्रविलापयेत् ॥ ४६ ॥
रकारं तैजसं देवमीकारे प्रविलापयेत् । ईकारं प्राज्ञमात्मानं ह्रीङ्कारे प्रविलापयेत् ४७
वाच्यवाचकताहीनं द्वैतभावविवर्जितम् । अखण्डं सच्चिदानन्दं भावयेत्च्छिखान्तरे
इति ध्यानेन मां राजन्साक्षात्कृत्य नरोत्तमः । मद्रूप एव भवति द्वयोरप्येकता यतः
योगयुक्तयाऽनया दृष्ट्वा मामात्मानं परात्परम् ।
अज्ञानस्य सकार्यस्य तत्क्षणे नाशको भवेत् ॥ ५० ॥
इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यांसंहितायांसप्तमस्कन्धे
देवीगीतायांज्ञानस्यमोक्षार्थत्ववर्णनंनाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

## पञ्चत्रिंशोऽध्यायः

### श्रीदेव्याहिमालयकृतेमन्त्रसिद्धिसाधनवर्णनम्

**हिमालय उवाच**

योगं वद महेशानि! साङ्गं सम्वित्प्रदायकम् । कृतेन येन योग्योऽहं भवेयं तत्त्वदर्शने

**श्रीदेव्युवाच**

न योगो नभसः पृष्ठे न भूमौ न रसातले । ऐक्यं जीवात्मनोराहुर्योगंयोगविशारदाः
तत्प्रत्यूहाः षडाख्यातायोगविघ्नकरानघ !। कामक्रोधौलोभमोहौमदमात्सर्यसञ्ज्ञकौ
योगाङ्गैरेव भित्त्वातान्योगिनो योगमाप्नुयुः । यमं नियममासनप्राणायामौततःपरम्
प्रत्याहारं धारणाख्यं ध्यानंसार्धंसमाधिना । अष्टाङ्गान्याहुरेतानियोगिनांयोगसाधने

अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयाऽऽर्जवम् । क्षमाधृतिर्मिताहारः शौचंचेतियमादश तपः सन्तोष आस्तिक्यं दानंदेवस्यपूजनम् । सिद्धान्तश्रवणंचैवह्रीर्मतिश्चजपोहुतम् दशैते नियमाः प्रोक्ता मया पर्वतनायक ! । पद्मासनं स्वस्तिकं च भद्रं वज्रासनं तथा वीरासनमिति प्रोक्तं क्रमादासनपञ्चकम् । ऊर्वोरुपरि विन्यस्य सम्यक्पादतले शुभे अङ्गुष्ठौचनिबध्नीयाद्धस्ताभ्यांव्युत्क्रमात्ततः । पद्मासनमितिप्रोक्तंयोगिनांहृदयङ्गमम् जानूर्वोरन्तरे सम्यक्कृत्वा पादतले शुभे । ऋजुकायोविशेद्योगीस्वस्तिकंतत्प्रचक्षते

सीवन्याः पार्श्वयोर्न्यस्य गुल्फयुग्मं सुनिश्चितम् ।
वृषणाऽधः पादपार्ष्णी पाणिभ्या परिबन्धयेत् ॥ १२ ॥
भद्रासनमिति प्रोक्तं योगिभिः परिपूजितम् ।
उर्वोः पादौ क्रमान्न्यस्य जान्वोः प्रत्यङ्मुखाङ्गुली ॥ १३ ॥

करौ विदध्यादाख्यातं वज्रासनमनुत्तमम् । एकं पादमधःकृत्वा विन्यस्योरुं तथोत्तरे ऋजुकायो विशेद्योगी वीरासनमितीरितम् । इडयाऽऽकर्षयेद्वायुंबाह्यं षोडशमात्रया धारयेत्पूरितं योगी चतुःषष्ट्या तु मात्रया । सुषुम्नामध्यगंसम्यग्द्वात्रिंशन्मात्रयाशनैः नाड्या पिङ्गलया चैव रेचयेद्योगवित्तमः । प्राणायाममिमं प्राहुर्योगशास्त्रविशारदाः भूयोभूयः क्रमात्तस्यबाह्यमेवं समाचरेत् । मात्रावृद्धिः क्रमेणैव सम्यग्द्वादश षोडश जपध्यानादिभिः सार्धं सगर्भं तं विदुर्बुधाः । तदपेतं विगर्भं च प्राणायामंपरेविदुः

क्रमादभ्यस्यतः पुंसो देहस्वेदोद्गमोऽधमः ।
मध्यमः कम्पसंयुक्तो भूमित्यागः परो मतः ॥२० ॥

उत्तमस्यगुणावाप्तिर्यावच्छीलनमिष्यते । इन्द्रियाणां विचरतांविषयेषु निरर्गलम् बलादाहरणं तेभ्यः प्रत्याहारोऽभिधीयते । अङ्गुष्ठगुल्फजानूरुमूलाधारलिङ्गनाभिषु ॥ हृद्ग्रीवाकण्ठदेशेषु लम्बिकायांततोनसि । भ्रूमध्येमस्तकेमूर्ध्निद्वादशान्तेयथाविधि धारणं प्राणमरुतो धारणेति निगद्यते । समाहितेन मनसा चैतन्यान्तरवर्तिना ॥ २४ आत्मन्यभीष्टदेवानांध्यानंध्यानमिहोच्यते । समत्वभावनानित्यंजीवात्मपरमात्मनोः समाधिमाहुर्मुनयः प्रोक्तमष्टाङ्गलक्षणम् । इदानीं कथये तेऽहं मन्त्रयोगमनुत्तमम् ॥

विश्वं शरीरमित्युक्तं पञ्चभूतात्मकं नग !। चन्द्रसूर्याग्नितेजोभिर्जीवब्रह्मैक्यरूपकम्

तिस्रः कोट्यस्तदर्धेन शरीरे नाड्यो मताः।

तासु मुख्या दश प्रोक्तास्ताभ्यस्तिस्रो व्यवस्थिताः॥ २८॥

प्रधानामेरुदण्डेऽत्रचन्द्रसूर्याग्निरूपिणी। इडा वामे स्थितानाडीशुभ्रातुचन्द्ररूपिणी

शक्तिरूपा तु सा नाडी साक्षादमृतविग्रहा। दक्षिणेयापिङ्गलाख्या पुंरूपासूर्यविग्रहा

सर्वतेजोमयी सा तु सुषुम्ना वह्निरूपिणी।

तस्यामध्ये विचित्राख्ये इच्छाज्ञानक्रियात्मकम्॥ ३१॥

मध्ये स्वयम्भूलिङ्गंतु कोटिसूर्यसमप्रभम्। तदूर्ध्वं मायाबीजं तुहरात्माबिन्दुनादकम्

तदूर्ध्वं तु शिखाकाराकुण्डलीरक्तविग्रहा। देव्यात्मिकातुसाप्रोक्तामदभिन्नानगाधिप

तद्बाह्ये हेमरूपाभं वादिसान्तचतुर्दलम्। द्रुतहेमसमप्रख्यं पद्मं तत्र विचिन्तयेत् ३४

तदूर्ध्वं त्वनलप्रख्यं षड्दलं हीरकप्रभम्। बादिलान्तषड्वर्णेन स्वाधिष्ठानमनुत्तमम्॥

मूलमाधारषट्कोणं मूलाधारं ततो विदुः। स्वशब्देन परंलिङ्गंस्वाधिष्ठानंततोविदुः

तदूर्ध्वं नाभिदेशे तु मणिपूरंमहाप्रभम्।

मेघाभं विद्युदाभं च बहुतेजोमयं ततः॥ ३७॥

मणिवद्भिन्नं तत्पद्मं मणिपद्मंतथोच्यते। दशभिश्च दलैर्युक्तं डादिफान्ताक्षरान्वितम

विष्णुनाऽधिष्ठितं पद्मं विष्ण्वालोकनकारणम्।

तदूर्ध्वेऽनाहतं पद्ममुद्यदादित्यसन्निभम्॥ ३६॥

कादिठान्तदलैरर्कपत्रैश्च समधिष्ठितम्। तन्मध्ये बाणलिङ्गं तु सूर्यायुतसमप्रभम्॥

शब्दब्रह्ममयं शब्दानाहतं तत्र दृश्यते। अनाहताख्यं तत्पद्मं मुनिभिः परिकीर्तितम्

आनन्दसदनं तत्तु पुरुषाधिष्ठितं परम्। तदूर्ध्वं तु विशुद्धाख्यं दलं षोडशपङ्कजम्॥

स्वरैः षोडशभिर्युक्तं धूम्रवर्णंमहाप्रभम्। विशुद्धं तनुतेयस्माज्जीवस्यहंसलोकनात्

विशुद्धं पद्ममाख्यातमाकाशाख्यं महाद्भुतम्। आज्ञाचक्रंतदूर्ध्वेतुआत्मनाऽधिष्ठितंपरम्

आज्ञासङ्क्रमणं तत्र तेनाज्ञेति प्रकीर्तितम्। द्विदलं हक्षसंयुक्तं पद्मं तत्सुमनोहरम्॥

कैलासाख्यं तदूर्ध्वं तु रोधिनी तु तदूर्ध्वतः। एवंत्वाधारचक्राणिप्रोक्तानितवसुव्रत

सहस्रारयुतं बिन्दुस्थानं तदूर्ध्वमीरितम् ।
इत्येतत्कथितं सर्वं योगमार्गमनुत्तमम् ॥ ४७ ॥

आदौ पूरकयोगेनाऽप्याधारे योजयेन्मनः । गुदमेढ्रान्तरे शक्तिस्तामाकुञ्च्य प्रबोधयेत् लिङ्गभेदक्रमेणैव बिन्दुचक्रं च प्रापयेत् । शम्भुना तां परां शक्तिमेकीभूतां विचिन्तयेत्

तत्रोत्थितामृतं यत्तु द्रुतलाक्षारसोपमम् ।
पाययित्वा तु तां शक्तिं मायाख्यां योगसिद्धिदाम् ॥ ५० ॥
षट्चक्रदेवतास्तत्र सन्तर्प्यामृतधारया ।
आनयेत्तेन मार्गेण मूलाधारं ततः सुधीः ॥ ५१ ॥
एवमभ्यस्यमानस्याऽप्यहन्यहनि निश्चितम् ।
पूर्वोक्तदूषिता मन्त्राः सर्वे सिध्यन्ति नाऽन्यथा ॥ ५२ ॥

जरामरणदुःखाद्यैर्मुच्यते भवबन्धनात् । ये गुणाः सन्ति देव्या मे जगन्मातुर्यथा तथा ते गुणाः साधकवरे भवन्त्येव न चान्यथा । इत्येवं कथितं तात ! वायुधारणमुत्तमम्

इदानीं धारणाख्यं तु शृणुष्वाऽवहितो मम ।
दिक्कालाद्यनवच्छिन्नदेव्यां चेतो विधाय च ॥ ५३ ॥

तन्मयो भवति क्षिप्रं जीवब्रह्मैक्ययोजनात् । अथवा समलं चेतो यदि क्षिप्रं न सिद्ध्यति तदाऽवयवयोगेन योगी योगान्समभ्यसेत् । मदीयहस्तपादादावङ्गे तु मधुरे नग !

चित्तं संस्थापयेन्मन्त्री स्थानस्थानजयात्पुनः ।
विशुद्धचित्तः सर्वस्मिन्रूपे संस्थापयेन्मनः ॥ ५८ ॥

यावन्मनो लयं याति देव्यां संविदि पर्वत । तावदिष्टमनुं मन्त्री जपहोमैः समभ्यसेत्

मन्त्राभ्यासेन योगेन ज्ञेयज्ञानाय कल्पते ।
न योगेन विना मन्त्रो न मन्त्रेण विना हि सः ॥ ६० ॥

द्वयोरभ्यासयोगो हि ब्रह्मसंसिद्धिकारणम् । तमःपरिवृते गेहे घटो दीपेन दृश्यते

एवं माया वृतो ह्यात्मा मनुना गोचरीकृतः ।
इति योगविधिः कृत्स्नः साङ्गः प्रोक्तो मयाऽधुना ॥ ६२ ॥

गुरूपदेशतो ज्ञेयो नान्यथा शास्त्रकोटिभिः ।

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां सप्तमस्कन्धे देवीगीतायांमन्त्रसिद्धिसाधनवर्णनंनामपञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

# षट्त्रिंशोऽध्यायः

## श्रीदेव्या ब्रह्मतत्त्वोपदेशवर्णनम्

### देव्युवाच

इत्यादियोगयुक्तात्मा ध्यायेन्मां ब्रह्मरूपिणीम् ।
भक्त्या निर्व्याजया राजन्नासने समुपस्थितः ॥ १ ॥

आविः सन्निहितं गुहाचरं नाममहत्पदम् । अत्रैतत्सर्वमर्पितमेजत्प्राणन्निमिषच्चयत्

एतज्जानथ सदसद्वरेण्यं परं विज्ञानाद्यद्वरिष्ठं प्रजानाम् ।
यदर्चिमद्यदणुभ्योऽणु च यस्मिँल्लोका निहिता लोकिनश्च ॥ ३ ॥

तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः । तदेतत्सत्यममृतं तद्वेद्धव्यं सौम्य विद्धि

धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं सन्धयीत ।
आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाऽक्षरं सौम्य! विद्धि ॥ ५ ॥

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयोभवेत्

यस्मिन्द्यौश्च पृथिवी चाऽन्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः ।
तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः ॥ ७ ॥

अरा इव रथनाभौ संहता यत्र नाड्यः । स एषोऽन्तश्चरते बहुधा जायमानः ॥ ८ ॥

ओमित्येवं ध्यायथाऽऽत्मानं स्वस्ति वः पाराय तमसः परस्तात् ।
दिव्ये ब्रह्मपुरे व्योम्नि आत्मा सम्प्रतिष्ठितः ॥ ९ ॥

मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय ।

तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति ॥ १० ॥
भिद्यतेहृदयग्रन्थिश्छिद्यन्तेसर्वसंशयाः । क्षीयन्तेचाऽस्य कर्माणि तस्मिन्दृष्टेपरावरे
हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् ।
तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥ १२ ॥
न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ १३ ॥
ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्दक्षिणतश्चोत्तरेण ।
अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वं वरिष्ठम् ॥ १४ ॥
एतादृगनुभवो यस्य स कृतार्थो नरोत्तमः । ब्रह्मभूतःप्रसन्नात्मानशोचतिनकाङ्क्षति
द्वितीयाद्वैभयंराजंस्तदभावाद्विभेतिन । तत्तद्वियोगोमेऽप्यस्तिमद्वियोगोऽपितस्यन
अहमेव स सोऽहं वै निश्चितंविद्धि पर्वत । मद्दर्शनं तु तत्र स्याद्यत्र ज्ञानीस्थितोमम
नाहं तीर्थे न कैलासेवैकुण्ठेवानकर्हिचित । वसामिकिन्तुमज्ज्ञानिहृदयाम्भोजमध्यमे
मत्पूजाकोटिफलदं सकृन्मज्ज्ञानिनोऽर्चनम् । कुलंपवित्रंतस्यास्तिजननीकृतकृत्यका
विश्वम्भरा पुण्यवती चिल्लयो यस्य चेतसः । ब्रह्मज्ञानं तु यत्पृष्टं त्वया पर्वतसत्तम
कथितं तन्मयासर्वंनाऽतो वक्तव्यमस्ति हि । इदंज्येष्ठायपुत्रायभक्तियुक्तायशीलिने
शिष्याय च यथोक्ताय वक्तव्यं नाऽन्यथा क्वचित् ।
यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥ २२ ॥
तस्यैते कथिताः ह्यर्थाः प्रकाशन्ते महात्मनः । येनोपदिष्टा विद्येयं स एव परमेश्वरः
यस्याऽयं सुकृतं कर्तुमसमर्थस्ततो ऋणी । पित्रोरप्यधिकःप्रोक्तोब्रह्मजन्मप्रदायकः
पितृजातं जन्म नष्टं नेत्थं जातं कदाचन । तस्मै न द्रुह्येदित्यादिनिगमोऽप्यवदन्नग
तस्माच्छास्त्रस्य सिद्धान्तो ब्रह्मदाता गुरुः परः । शिवे रुष्टे गुरुस्त्राता गुरौरुष्टेनशङ्करः
तस्मात्सर्वप्रयत्नेन श्रीगुरुं तोषयेन्नग । कायेन मनसा वाचा सर्वदा तत्परो भवेत् ॥
अन्यथा तु कृतघ्नः स्यात्कृतघ्ने नाऽस्ति निष्कृतिः ।
इन्द्रेणाथर्वणायोक्ता शिरश्छेदप्रतिज्ञया ॥ २८ ॥

अश्विभ्यां कथने तस्यशिरश्छिन्नंचवज्रिणा । अश्वीयंतच्छिरोनष्टंदृष्ट्वावैद्यौसुरोत्तमौ

पुनः संयोजितं स्वीयं ताभ्यांमुनिशिरस्तदा । इतिसङ्कटसम्पाद्याब्रह्मविद्यानगाधिप

लब्धा येन स धन्यः स्यात्कृतकृत्यश्च भूधर !॥ ३० ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां सप्तमस्कन्धे

देवीगीतायांब्रह्मविद्योपदेशवर्णनंनाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

# सप्तत्रिंशोऽध्यायः

## श्रीदेव्याहिमालयकृतस्वकीयात्रैविध्यभक्तिमहिमवर्णनम्

हिमालय उवाच

स्वीयांभक्तिंवदम्वाऽम्वयेनज्ञानंसुखेनहि । जायेतमनुजस्यास्यमध्यमस्याविरागिणः

देव्युवाच

मार्गास्त्रयो मे विख्यातामोक्षप्राप्तौनगाधिप !। कर्मयोगोज्ञानयोगोभक्तियोगश्चसत्तम

त्रयाणामप्ययं योग्यः कर्तुं शक्योऽस्ति सर्वथा ।

सुलभत्वान्मानसत्वात्कायचित्ताद्यपीडनात् ॥ ३ ॥

गुणभेदान्मनुष्याणां सा भक्तिस्त्रिविधामता । परपीडांसमुद्दिश्यदम्भंकृत्वापुरःसरम्

मात्सर्यक्रोधयुक्तो यस्तस्यभक्तिस्तुतामसी । परपीडादिरहितःस्वकल्याणार्थमेवच

नित्यं सकामो हृदयं यशोऽर्थी भोगलोलुपः ।

तत्तत्फलसमावाप्त्यै मामुपास्तेऽतिभक्तितः ॥ ६ ॥

भेदबुद्ध्या तु मां स्वस्मादन्यां जानाति पामरः ।

तस्य भक्तिः समाख्याता नगाधिप! तु राजसी ॥ ७ ॥

परमेशार्पणं कर्म पापसङ्क्षालनाय च । वेदोक्तत्वादवश्यं तत्कर्तव्यं तु मयाऽनिशम्

इति निश्चितबुद्धिस्तु भेदबुद्धिमुपाश्रितः । करोति प्रीतयेकर्मभक्तिःसानगसात्त्विकी

परभक्तेः प्रापिकेयं भेदबुद्ध्यवलम्बनात् । पूर्वप्रोक्ते ह्युभे भक्ती न पराप्रापिके मते ॥
अधुना परभक्तिं तु प्रोच्यमानां निबोध मे । मद्गुणश्रवणं नित्यं ममनामानुकीर्तनम्
कल्याणगुणरत्नानामाकरायां मयि स्थिरम् । चेतसोवर्तनंचैवतैलधारासमं सदा ॥
हेतुस्तु तत्रकोवाऽपिनकदाचिद्भवेदपि । सामीप्यसार्ष्टिसायुज्यसालोक्यानांनचैषणा
मत्सेवातोऽधिकं किञ्चिन्नैव जानाति कर्हिचित् ।
सेव्यसेवकताभावात्तत्र मोक्षं न वाञ्छति ॥ १४ ॥
परानुरक्त्या मामेव चिन्तयेद्यो ह्यतन्द्रितः । स्वाभेदेनैव मां नित्यंजानातिनविभेदतः
मद्रूपत्वेन जीवानां चिन्तनं कुरुतेतु यः । यथास्वस्यात्मनिप्रीतिस्तथैवचपरात्मनि
चैतन्यस्य समानत्वान्न भेदंकुरुते तु यः । सर्वत्रवर्तमानानां सर्वरूपां च सर्वदा ॥
नमते यजते चैवाऽप्याचाण्डालान्तमीश्वर । न कुत्राऽपि द्रोहबुद्धिंकुरुतेभेदवर्जनात्
मत्स्थानदर्शने श्रद्धा मद्भक्तदर्शने तथा । मच्छास्त्रश्रवणे श्रद्धा मन्त्रतन्त्रादिषु प्रभो !
मयिप्रेमाकुलमती रोमाञ्चिततनुः सदा । प्रेमाश्रुजलपूर्णाक्षः कण्ठगद्गदनिःस्वनः ॥
अनन्येनैव भावेन पूजयेद्यो नगाधिप !। मामीश्वरीं जगद्योनिं सर्वकारणकारणम्!
व्रतानि मम दिव्यानि नित्यनैमित्तिकान्यपि ।
नित्यं यः कुरुते भक्त्या वित्तशाठ्यविवर्जितः ॥ २० ॥
मदुत्सवदिदृक्षा च मदुत्सवकृतिस्तथा । जायते यस्य नियतं स्वभावादेव भूधर !
उच्चैर्गायंश्च नामानि ममैव खलु नृत्यति । अहङ्कारादिरहितो देहतादात्म्यवर्जितः
प्रारब्धेन यथा यच्च क्रियते तत्तथा भवेत् । नमेचिन्ताऽस्तितत्राऽपिदेहसंरक्षणादिषु
इति भक्तिस्तु या प्रोक्ता परभक्तिस्तु सा स्मृता ।
यस्यां देव्यतिरिक्तं तु न किञ्चिदपि भाव्यते ॥ २६ ॥
इत्थं जाता पराभक्तिर्यस्य भूधर! तत्त्वतः । तदैव तस्यचिन्मात्रेमद्रूपे विलयोभवेत्
भक्तेस्तु या पराकाष्ठासैवज्ञानं प्रकीर्तितम् । वैराग्यस्य च सीमासाज्ञानेतदुभयंयतः
भक्तौकृतायांयस्यापि प्रारब्धवशतो नग !। न जायते ममज्ञानंमणिद्वीपं स गच्छति
तत्र गत्वाऽखिलान्भोगाननिच्छन्नपि वच्छति ।

तदन्ते मम चिद्रूपज्ञानं सम्यग्भवेन्नग !॥ ३० ॥
तेनमुक्तः सदैवस्याज्ज्ञानान्मुक्तिर्नचाऽन्यथा । इहैवयस्यज्ञानंस्याद्‌हृद्गतप्रत्यगात्मनः
मम संवित्परतनोस्तस्यप्राणा व्रजन्ति न । ब्रह्मैव संस्तदाप्नोति ब्रह्मैव ब्रह्मवेदयः
कण्ठचामीकरसममज्ञानात्तु तिरोहितम् । ज्ञानादज्ञाननाशेन लब्धमेव हि लभ्यते
विदिताविदितादन्यन्नगोत्तम वपुर्मम ।
यथाऽऽदर्शे तथाऽऽत्मनि यथा जले तथा पितृलोके ॥ ३४ ॥
छायातपौ यथा स्वच्छौ विविक्तौतद्वदेव हि । ममलोकेभवेज्ज्ञानंद्वैतभावविवर्जितम्
यस्तु वैराग्यवानेव ज्ञानहीनो म्रियेत चेत् । ब्रह्मलोकेवसेन्नित्यं यावत्कल्पंततःपरम्
शुचीनां श्रीमतां गेहे भवेत्तस्य जनिः पुनः । करोति साधनं पश्चात्ततोज्ञानंहिजायते
अनेकजन्मभी राजञ्ज्ञानं स्यान्नैकजन्मना । ततः सर्वप्रयत्नेन ज्ञानार्थं यत्नमाश्रयेत् ॥
नोचेन्महान्विनाशः स्याज्जन्मैतद् दुर्लभं पुनः । तत्राऽपि प्रथमे वर्णे वेदप्राप्तिश्चदुर्लभा
शमादिषट्कसम्पत्तिर्योगसिद्धिस्तथैव च । तथोत्तमगुरुप्राप्तिः सर्वमेवाऽत्र दुर्लभम्
तथेन्द्रियाणां पटुता संस्कृतत्वंमनोस्तथा । अनेकजन्मपुण्यैस्तुमोक्षेच्छाजायतेततः
साधने सफलेऽप्येवं जायमानेऽपि यो नरः । ज्ञानार्थं नैव यतते तस्यजन्मनिरर्थकम्
तस्माद्राजन्यथाशक्त्याज्ञानार्थंयत्नमाश्रयेत् । पदेपदेऽश्वमेधस्यफलमाप्नोतिनिश्चितम्
घृतमिव पयसि निगूढं भूते भूते च वसति विज्ञानम् ।
सततं मन्थयितव्यं मनसा मन्थानभूतेन ॥ ४४ ॥
ज्ञानं लब्ध्वा कृतार्थः स्यादिति वेदान्तडिण्डिमः ।
सर्वमुक्तं समासेन किं भूयः श्रोतुमिच्छसि ॥ ४५ ॥
इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यांसंहितायांसप्तमस्कन्धे
देवीगीतायांभक्तिमहिमवर्णनंनाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

———

# अष्टत्रिंशोऽध्यायः

## श्रीदेव्यामहोत्सवव्रतस्थानानांवर्णनम्

### हिमालय उवाच

कति स्थानानि देवेशि द्रष्टव्यानि महीतले । मुख्यानिचपवित्राणिदेवीप्रियतमानिच

व्रतान्यपि तथा यानि तुष्टिदान्युत्सवा अपि । तत्सर्वं वद मे मातःकृतकृत्योयतोनरः

### श्रीदेव्युवाच

सर्वं दृश्यं मम स्थानं सर्वकालाव्रतात्मकाः । उत्सवाःसर्वकालेषुयतोऽहंसर्वरूपिणी

तथाऽपिभक्तवात्सल्यात्किंचित्किंचिदथोच्यते।शृणुष्वावहितोभूत्वानगराजवचोमम

कोलापुरं महास्थानं यत्र लक्ष्मीः सदा स्थिता ।
मातुः पुरं द्वितीयं च रेणुकाधिष्ठितं परम् ॥ ५ ॥

तुलजापुरं तृतीयं स्यात्सप्तशृङ्गंतथैवच । हिङ्गुलायामहास्थानंज्वालामुख्यास्तथैवच

शाकम्भर्याः परं स्थानं भ्रामर्याः स्थानमुत्तमम् ।
श्रीरक्तदन्तिकास्थानं दुर्गास्थानं तथैव च ॥ ७ ॥

विन्ध्याचलनिवासिन्याः स्थानं सर्वोत्तमोत्तमम् ।
अन्नपूर्णामहास्थानं काञ्चीपुरमनुत्तमम् ॥ ८ ॥

भीमादेव्याः परं स्थानं विमलास्थानमेव च ।
श्रीचन्द्रलामहास्थानं कौशिकीस्थानमेव च ॥ ९ ॥

नीलाम्बायाः परं स्थानं नीलपर्वतमस्तके । जाम्बूनदेश्वरीस्थानं तथा श्रीनगरंशुभम्

गुह्यकाल्यामहास्थानंनेपाले यत्प्रतिष्ठितम् । मीनाक्ष्याः परमस्थानंयच्चप्रोक्तंचिदम्बरे

वेदारण्यंमहास्थानंसुन्दर्याःसमधिष्ठितम् । एकाम्बरंमहास्थानं परशक्त्याप्रतिष्ठितम्

महालसापरं स्थानं योगेश्वर्यास्तथैव च । तथानीलसरस्वत्याःस्थानंचीनेषुविश्रुतम्

वैद्यनाथे तु बगलास्थानं सर्वोत्तमं मतम् । श्रीमच्छ्रीभुवनेश्वर्यामणिद्वीपंममस्मृतम्

श्रीमत्त्रिपुरभैरव्याः कामाख्यायोनिमण्डलम् ।
भूमण्डले क्षेत्ररत्नं महामायाऽधिवासितम् ॥ १५ ॥

नाऽतः परतरं स्थानं क्वचिदस्ति धरातले । प्रतिमासं भवेद्देवी यत्रसाक्षाद्रजस्वला
तत्रत्या देवताः सर्वाः पर्वतात्मकतां गताः । पर्वतेषु वसन्त्येव महत्यो देवता अपि

तत्रत्या पृथिवी सर्वा देवीरूपा स्मृता बुधैः ।
नातः परतरं स्थानं कामाख्यायोनिमण्डलात् ॥ १८ ॥

गायत्र्याश्चपरं स्थानंश्रीमत्पुष्करमीरितम् । अमरेशेचण्डिकास्यात्प्रभासेपुष्करेक्षिणी
नैमिषे तु महास्थाने देवी सा लिङ्गधारिणी । पुरुहूता पुष्कराक्षेआषाढौचरतिस्तथा
चण्डमुण्डी महास्थाने दण्डिनी परमेश्वरी । भारभूतौभवेद्भूतिर्नाकुले नकुलेश्वरी
चन्द्रिकातुहरिश्चन्द्रेश्रीगिरौशाङ्करीस्मृता । जप्येश्वरेत्रिशूलास्यात्सूक्ष्माचाम्रातकेश्वरे
शाङ्करीतुमहाकाले शर्वाणीमध्यमाभिधे । केदाराख्ये महाक्षेत्रे देवी सा मार्गदायिनी

भैरवाख्ये भैरवी सा गयायां मङ्गला स्मृता ।
स्थाणुप्रिया कुरुक्षेत्रे स्वायम्भुव्यपि नाकुले ॥ २४ ॥

कनखले भवेदुग्रा विश्वेशा विमलेश्वरे । अट्टहासे महानन्दा महेन्द्रे तु महान्तका ॥
भीमेभीमेश्वरी प्रोक्ता स्थानेवस्त्रापथेपुनः । भवानीशाङ्करीप्रोक्ता रुद्राणीत्वर्धकोटिके
अविमुक्ते विशालाक्षी महाभागा महालये । गोकर्णेभद्रकर्णीस्याद्भद्रा स्याद्भद्रकर्णके

उत्पलाक्षी सुवर्णाक्षे स्थाण्वी शास्थाणुसञ्ज्ञके ।
कमलालये तु कमला प्रचण्डा छगलण्डके ॥ २८ ॥
कुरण्डले त्रिसन्ध्या स्यान्माकोटे मुकुटेश्वरी ।
मण्डलेशे शाण्डकी स्यात्काली कालञ्जरे पुनः ॥ २६ ॥
शङ्कुकर्णे ध्वनिः प्रोक्तास्थूलास्यात्स्थूलकेश्वरे ।
ज्ञानिनां हृदयाम्भोजे हृल्लेखा परमेश्वरी ॥ ३० ॥

प्रोक्तानीमानिस्थानानिदेव्याःप्रियतमानिच । तत्तत्क्षेत्रस्यमाहात्म्यंश्रुत्वापूर्वंनगोत्तम
तदुक्तेन विधानेन पश्चाद्देवीं प्रपूजयेत् । अथवा सर्वक्षेत्राणि काश्यां सन्ति नगोत्तम

तत्र नित्यंवसेत्भिन्यंदेवीभक्तिपरायणः । तानि स्थानानिसम्पश्यञ्जपन्देवींनिरन्तरम्
ध्यायंस्तच्चरणाम्भोजं मुक्तो भवति बन्धनात् ।
इमानि देवीनामानि प्रातरुत्थाय यः पठेत् ॥ ३५ ॥
भस्मीभवन्ति पापानितत्क्षणान्नग! सत्वरम् । श्राद्धकालेपठेदेतान्यमलानि द्विजाग्रतः
मुक्तास्तत्पितरः सर्वे प्रयान्ति परमां गतिम् ।
अधुना कथयिष्यामि व्रतानि तव सुव्रत !॥ ३६ ॥
नारीभिश्च नरैश्चैव कर्तव्यानि प्रयत्नतः । व्रतमनन्ततृतीयाख्यं रसकल्याणिनीव्रतम्
आर्द्रानन्दकरं नाम्ना तृतीयाया व्रतं च यत् । शुक्रवारव्रतं चैव तथा कृष्णचतुर्दशी ॥
भौमवारव्रतं चैव प्रदोषव्रतमेव च । यत्र देवो महादेवो देवीं संस्थाप्य विष्टरे ॥ ३६
नृत्यं करोति पुरतः सार्धं देवैर्निशामुखे । तत्रोपोष्य रजन्यादौ प्रदोषेपूजयेच्छिवाम्
प्रतिपक्षं विशेषेण तद्देवीप्रीतिकारकम् । सोमवारव्रतं चैव ममातिप्रियकृन्नग !॥४०॥
तत्रापि देवीं सम्पूज्य रात्रौ भोजनमाचरेत् । नवरात्रद्वयं चैव व्रतं प्रीतिकरं मम ॥
एवमन्यान्यपि विभो नित्यनैमित्तिकानि च । व्रतानिकुरुतेयोवैमत्प्रीत्यर्थंविमत्सरः
प्राप्नोति मम सायुज्यं स मे भक्तः स मे प्रियः ।
उत्सवानपि कुर्वीत दोलोत्सवमुखान्विभो !॥ ४२ ॥
शयनोत्सवं यथा कुर्यात्तथा जागरणोत्सवम् । रथोत्सवं च मेकुर्याद्दमनोत्सवमेवच
पवित्रोत्सवमेवापि श्रावणे प्रीतिकारकम् । ममःभक्तःसदाकुर्यादेवमन्यान्महोत्सवान्
मद्भक्तान्भोजयेत्प्रीत्या तथा चैव सुवासिनीः ।
कुमारीर्बटुकांश्चापि मद्बुद्ध्या तद्गतान्तरः ॥ ४४ ॥
वित्तशाठ्येन रहितो यजेदेतान्सुमादिभिः । य एवं कुरुते भक्त्या प्रतिवर्षमतन्द्रितः
स धन्यः कृतकृत्योऽसौ मत्प्रीतेः पात्रमञ्जसा । सर्वमुक्तं समासेनममप्रीतिप्रदायकम्
नाऽशिष्याय प्रदातव्यं नाऽभक्ताय कदाचन ॥ ४६ ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्या संहितायां सप्तमस्कन्धे देवीगीतायांश्रीदेव्यामहोत्सवव्रतस्थानवर्णनंनामाष्टत्रिंशोऽध्यायः ॥ ३८ ॥

# एकोनचत्वारिंशोऽध्यायः

## श्रीदेव्याःपूजाविधिवर्णनम्

### हिमालय उवाच

देवदेवि! महेशानि! करुणासागरेऽम्बिके । ब्रूहि पूजाविधिंसम्यग्यथावदधुना निजम्

### श्रीदेव्युवाच

वक्ष्ये पूजाविधिं राजन्नम्बिकाया यथा प्रियम् । अत्यन्तश्रद्धया सार्धं शृणुपर्वतपुङ्गव

द्विविधा मम पूजा स्याद् बाह्या चाभ्यन्तराऽपि च ।
बाह्याऽपि द्विविधा प्रोक्ता वैदिकी तान्त्रिकी तथा ॥ ३ ॥

वैदिक्यर्चाऽपि द्विविधा मूर्तिभेदेन भूधर !। वैदिकी वैदिकैःकार्यावेददीक्षासमन्वितैः
तन्त्रोक्तदीक्षावद्भिस्तुतान्त्रिकीसंश्रिताभवेत् । इत्थंपूजारहस्यंचनज्ञात्वाविपरीतकम्
करोति यो नरो मूढः स पतत्येव सर्वथा । तत्रयावैदिकीप्रोक्ताप्रथमातांवदाम्यहम्
यन्मे साक्षात्परं रूपं दृष्टवानसि भूधर !। अनन्तशीर्षनयनमनन्तचरणं महत् ॥ ७ ॥
सर्वशक्तिसमायुक्तं प्रेरकं यत्परात्परम् । तदेव पूजयेन्नित्यं नमेद्ध्यायेत्स्मरेदपि ॥
इत्येतत्प्रथमार्चायाः स्वरूपं कथितं नग !। शान्तः समाहितमना दम्भाऽहङ्कारवर्जितः
तत्परो भव तद्याजी तदेव शरणं व्रज । तदेव चेतसा पश्य जप ध्यायस्व सर्वदा ॥
अनन्यया प्रेमयुक्तभक्त्या मद्भावमाश्रितः । यज्ञैर्यज तपोदानैर्मामेव परितोषय ॥११॥
इत्थं ममाऽनुग्रहतोमोक्ष्यसे भवबन्धनात् । मत्परा ये मदासक्तचित्ताभक्तवरामताः
प्रतिजाने भवादस्मादुद्धराम्यचिरेण तु । ध्यानेन कर्मयुक्तेन भक्तिज्ञानेन वा पुनः
प्राप्याऽहं सर्वथा राजन्न तु केवलकर्मभिः । धर्मात्सञ्जायतेभक्तिर्भक्त्यासञ्जायतेपरम्

श्रुतिस्मृतिभ्यामुदितं यत्स धर्मः प्रकीर्तितः ।
अन्यशास्त्रेण यः प्रोक्तो धर्माभासः स उच्यते ॥ १५ ॥

सर्वज्ञात्सर्वशक्तेश्च मत्तो वेदः समुत्थितः । अज्ञानस्य ममाभावादप्रमाणानवश्रुतिः

स्मृतयश्च श्रुतेरर्थं गृहीत्वैव च निर्गताः । मन्वादीनां श्रुतीनांचततःप्रामाण्यमिष्यते

क्वचित्कदाचित्तन्त्रार्थकटाक्षेण परोदितम् ।

धर्मं वदन्ति सोंऽशस्तु नैव ग्राह्योऽस्ति वैदिकैः ॥ १८ ॥

अन्येषां शास्त्रकर्तॄणामज्ञानप्रभवत्वतः । अज्ञानदोषदुष्टत्वात्तदुक्तेर्न प्रमाणता ॥१९॥

तस्मान्मुमुक्षुर्धर्मार्थं सर्वथा वेदमाश्रयेत् ।

राजाज्ञा च यथा लोके हन्यते न कदाचन ॥ २० ॥

सर्वेशान्या ममाज्ञासा श्रुतिस्त्याज्या कथंनृभिः । मदाज्ञारक्षणार्थंतुब्रह्मक्षत्रियजातयः

मया सृष्टास्ततो ज्ञेयं रहस्यं मे श्रुतेर्वचः । यदा यदा हि धर्मस्य ग्लानिर्भवतिभूधर

अभ्युत्थानमधर्मस्य तदा वेषान्बिभर्म्यहम् ।

देवदैत्यविभागश्चाऽप्यत एवाऽभवन्नृप ॥ २३ ॥

ये न कुर्वन्ति तद्धर्मंतच्छिक्षार्थंमयासदा । सम्पादितास्तुनरकास्त्रासोयच्छ्रवणाद्भवेत्

योवेदधर्ममुज्झित्य धर्ममन्यं समाश्रयेत् । राजा प्रवासयेद्देशान्निजादेतानधर्मिणः ॥

ब्राह्मणैर्न च सम्भाष्याः पङ्क्तिग्राह्या न च द्विजैः ।

अन्यानि यानि शास्त्राणि लोकेऽस्मिन्विविधानि च ॥ २६ ॥

श्रुतिस्मृतिविरुद्धानि तामसान्येव सर्वशः । वामं कापालकं चैव कौलकं भैरवागमः

शिवेन मोहनार्थाय प्रणीतो नान्यहेतुकः । दक्षशापाद् भृगोः शापाद्दधीचस्यचशापतः

दग्धा ये ब्राह्मणवरा वेदमार्गबहिष्कृताः । तेषामुद्धरणार्थाय सोपानक्रमतः सदा ॥

शैवाश्च वैष्णवाश्चैव सौराः शाक्तास्तथैवच । गाणपत्याआगमाश्चप्रणीताःशङ्करेणतु

तत्र वेदाविरुद्धोंऽशोऽप्युक्त एव क्वचित्क्वचित् ।

वैदिकैस्तद्ग्रहे दोषो न भवत्येव कर्हिचित् ॥ ३१ ॥

सर्वथावेदभिन्नार्थे नाऽधिकारी द्विजोभवेत् । वेदाधिकारहीनस्तुभवेत्तत्राधिकारवान्

तस्मात्सर्वप्रयत्नेन वैदिको वेदमाश्रयेत् । धर्मेण सहितं ज्ञानं परं ब्रह्म प्रकाशयेत् ॥

सर्वैषणाः परित्यज्य मामेव शरणं गताः । सर्वभूतदयावन्तो मानाऽहङ्कारवर्जिताः

मच्चित्ता मद्गतप्राणा मत्स्थानकथने रताः । संन्यासिनोवनस्थाश्चगृहस्थाब्रह्मचारिणः

उपासते सदा भक्त्या योगमैश्वरसंज्ञितम् । तेषां नित्याभियुक्तानामहमज्ञानजं तमः ज्ञानसूर्यप्रकाशेन नाशयामि न संशयः । इत्थं वैदिकपूजायाः प्रथमाया नगाधिप! ३७

स्वरूपमुक्तं संक्षेपाद् द्वितीयाया अथो ब्रुवे ।
मूर्तौ वा स्थण्डिले वाऽपि तथा सूर्येन्दुमण्डले ॥ ३८ ॥
जलेऽथ वा बाणलिङ्गे यन्त्रे वाऽपि महापटे ।
तथा श्रीहृदयाम्भोजे ध्यात्वा देवीं परात्पराम् ॥ ३९ ॥

सगुणां करुणापूर्णां तरुणीमरुणारुणाम् । सौन्दर्यसारसीमां तां सर्वावयवसुन्दराम्

शृङ्गाररससम्पूर्णां सदा भक्ताऽऽर्तिकातराम् ।
प्रसादसुमुखीमम्बां चन्द्रखण्डशिखण्डिनीम् ॥ ४१ ॥

पाशाङ्कुशवराभीतिधरामानन्दरूपिणीम् । पूजयेदुपचारैश्च यथावित्तानुसारतः ४२
यावदान्तरपूजायामधिकारो भवेन्न हि । तावद् बाह्यामिमां पूजां श्रयेज्जातेतुतांत्यजेत्
आभ्यन्तरा तु या पूजा सा तु सम्विल्लयः स्मृतः । सम्विदेव परं रूपमुपाधिरहितंमम

अतः सम्विदि मद्रूपे चेतः स्थाप्यं निराश्रयम् ।
सम्विद्रूपातिरिक्तं तु मिथ्या मायामयं जगत् ॥ ४५ ॥

अतः संसारनाशाय साक्षिणीमात्मरूपिणीम् । भावयेन्निर्मनस्केनयोगयुक्तेन चेतसा
अतः परं बाह्यपूजाविस्तारः कथ्यते मया । सावधानेन मनसा शृणु पर्वतसत्तम!

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां सप्तमस्कन्धे
श्रीदेव्यापूजाविधिवर्णनंनामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

# चत्वारिंशोऽध्यायः

## देव्याबाह्यपूजाविधिवर्णनम्

### श्रीदेव्युवाच

प्रातरुत्थाय शिरसि संस्मरेत्पद्ममुज्ज्वलम् । कर्पूराभं स्मरेत्तत्रश्रीगुरुंनिजरूपिणम्

सुप्रसन्नं लसद्भूषाभूषितं शक्तिसंयुतम् । नमस्कृत्य ततो देवींकुण्डलींसंस्मरेद्बुधः

प्रकाशमानां प्रथमे प्रयाणे प्रतिप्रयाणेऽप्यमृतायमानाम् ।

अन्तः पदव्यामनुसञ्चरन्तीमानन्दरूपामबलां प्रपद्ये ॥ ३ ॥

ध्यात्वैवं तच्छिखामध्ये सच्चिदानन्दरूपिणीम् ।

मां ध्यायेदथ शौचादिक्रियाः सर्वाःसमापयेत ॥ ४ ॥

अग्निहोत्रं ततो हुत्वा मत्प्रीत्यर्थं द्विजोत्तमः ।

होमान्ते स्वासने स्थित्वा पूजासङ्कल्पमाचरेत् ॥ ५ ॥

भूतशुद्धिं पुरा कृत्वा मातृकान्यासमेव च । हृल्लेखामातृकान्यासं नित्यमेव समाचरेत्

मूलाधारे हकारं च हृदये च रकारकम् । भ्रूमध्ये तद्वदीकारं ह्रीङ्कारं मस्तके न्यसेत्

तत्तन्मन्त्रोदितानन्यान्न्यासान्सर्वान्समाचरेत् । कल्पयेत्स्वात्मनोदेहेपीठंधर्मादिभिःपुनः

ततो ध्यायेन्महादेवीं प्राणायामैर्विजृम्भिते । हृदम्भोजे मम स्थाने पञ्चप्रेतासने बुधः

ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः । एते पञ्च महाप्रेताः पादमूले मम स्थिताः

पञ्चभूतात्मका ह्येते पञ्चावस्थात्मकाअपि । अहंत्वव्यक्तचिद्रूपातदतीताऽस्मिसर्वथा

ततो विष्टरतां याताः शक्तितन्त्रेषु सर्वदा । ध्यात्वैवं मानसैर्भोगैः पूजयेन्माजपेदपि

जपं समर्प्य श्रीदेव्यै ततोऽर्घ्यस्थापनं चरेत् ।

पात्रासादनकं कृत्वा पूजाद्रव्याणि शोधयेत् ॥ १३ ॥

जलेन तेन मनुनाचाऽस्त्रमन्त्रेणदेशिकाः । दिग्बन्धं च पुरा कृत्वा गुरून्नत्वाततःपरम्

तदनुज्ञां समादाय बाह्यपीठे ततः परम् । हृदिस्थांभावितांमूर्तिममदिव्यांमनोहराम्

आवाहयेत्ततः पीठे प्राणस्थापनविद्यया। आसनावाहने चार्घ्यं पाद्याद्याचमनं तथा
स्नानं वासोद्वयं चैव भूषणानि च सर्वशः। गन्धपुष्पंयथायोग्यंदत्त्वादेव्यैस्वभक्तितः
यन्त्रस्थानामावृतीनां पूजनं सम्यगाचरेत्। प्रतिवारमशक्तानां शुक्रवारो नियम्यते॥
मूलदेवीप्रभारूपाः स्मर्तव्या अङ्गदेवताः। तत्प्रभापटलव्याप्तं त्रैलोक्यञ्च विचिन्तयेत्
पुनरावृत्तिसहितां मूलदेवीं च पूजयेत्। गन्धादिभिःसुगन्धैस्तुतथापुष्पैःसुवासितैः
नैवेद्यैस्तर्पणैश्चैव ताम्बूलैर्दक्षिणादिभिः। तोषयेन्मां त्वत्कृतेन नाम्नां साहस्रकेण च
कवचेन च सूक्तेनाऽहं रुद्रेभिरिति प्रभो!। देव्यथर्वशिरोमन्त्रैर्हृल्लेखोपनिषद्भवैः २२
महाविद्यामहामन्त्रैस्तोषयेन्मां मुहुर्मुहुः। क्षमापयेज्जगद्धात्रीं प्रेमार्द्रहृदयो नरः॥२३
पुलकाङ्कितसर्वाङ्गैर्बाष्परुद्धाक्षिनिःस्वनः। नृत्यगीतादिघोषेण तोषयेन्मां मुहुर्मुहुः
वेदपारायणैश्चैव पुराणैः सकलैरपि। प्रतिपाद्या यतोऽहं वै तस्मात्तैस्तोषयेच्च माम्

निजं सर्वस्वमपि मे सदेहं नित्यशोऽर्पयेत्।
नित्यहोमं ततः कुर्याद्‌ ब्राह्मणांश्च सुवासिनीः॥ २६॥

बटुकान्पामरानन्यान्देवीबुद्ध्यातु भोजयेत्। नत्वापुनःस्वहृदयेव्युत्क्रमेणविसर्जयेत्
सर्वं हृल्लेखया कुर्यात्पूजनं मम सुव्रत!। हृल्लेखा सर्वमन्त्राणां नायिकापरमास्मृता
हृल्लेखादर्पणे नित्यमहं तत्प्रतिबिम्बिता। तस्माद्धृल्लेखया दत्तंसर्वमन्त्रैःसमर्पितम्
गुरुं सम्पूज्य भूषाद्यैः कृतकृत्यत्वमावहेत्। य एवं पूजयेद्देवीं श्रीमद्भुवनसुन्दरीम्
न तस्य दुर्लभं किञ्चित्कदाचित्क्वचिदस्तिहि। देहान्तेतुमणिद्वीपंममयात्येवसर्वथा

ज्ञेयो देवीस्वरूपोऽसौ देवा नित्यं नमन्ति तम्।
इति ते कथितं राजन्महादेव्याः प्रपूजनम्॥ ३२॥

विमृश्यंतदशेषेणाऽप्यधिकारानुरूपतः। कुरु मे पूजनं तेन कृतार्थस्त्वं भविष्यसि
इदं तु गीताशास्त्रं मे नाऽशिष्यायवदेत्क्वचित्। नाऽभक्ताय प्रदातव्यंन धूर्तायचदुर्हृदे
एतत्प्रकाशनं मातुरुद्घाटनमुरोजयोः। तस्मादवश्यं यत्नेन गोपनीयमिदं सदा॥३५॥
देयं भक्ताय शिष्याय ज्येष्ठपुत्राय चैव हि। सुशीलाय सुवेषाय देवीभक्तियुताय च
श्राद्धकाले पठेदेतद्ब्राह्मणानां समीपतः। तृप्तास्तत्पितरः सर्वे प्रयान्ति परमं पदम्

व्यास उवाच

इत्युक्त्वा सा भगवती तत्रैवाऽन्तरधीयत । देवाश्च मुदिताः सर्वे देवीदर्शनतोऽभवन्

व्यास उवाच

ततो हिमालये जज्ञे देवी हैमवती तु सा । यागौरीतिप्रसिद्धाऽसीद्दत्तासाशङ्कराय च
ततः स्कन्दः समुद्भूतस्तारकस्तेन पातितः । समुद्रमन्थने पूर्वं रत्नान्यासुर्नराधिप
तत्र देवैः स्तुता देवी लक्ष्मीप्राप्त्यर्थमादरात् । तेषामनुग्रहार्थाय निर्गता तु रमाततः
वैकुण्ठाय सुरैर्दत्ता तेन तस्य शमोऽभवत । इतितेकथितंराजन्देवीमाहात्म्यमुत्तमम्
गौरीलक्ष्म्योः समुत्पत्तिविषयं सर्वकामदम् ।
न वाच्यं त्वेतदन्यस्मै रहस्यं कथितं यतः ॥ ४३ ॥
गीता रहस्यभूतेयं गोपनीया प्रयत्नतः । सर्वमुक्तं समासेनयत्पृष्टं तत्त्वयाऽनघ ॥४४
पवित्रं पावनं दिव्यं किं भूयः श्रोतुमिच्छसि ।

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्त्र्यां संहितायां सप्तमस्कन्धे
देवीगीतायां बाह्यपूजाविधिवर्णनंनामचत्वारिंशोऽध्यायः ॥ ४० ॥
खशाग्ययश्वि ( २३५० ) पद्यैस्तु द्वैपायनमुखच्युतैः ।
श्रीमद्भागवतस्याऽस्य सप्तमःस्कन्ध ईरितः ॥ १ ॥

:०: —

॥ श्रीगणेशायनमः ॥

* श्रीमङ्गलायैनमः *

# देवीभागवतपुराणम्

## अष्टमस्कन्धः

### प्रथमोऽध्यायः

व्यासजनमेजयसम्वादे भुवनकोषवर्णनप्रसङ्गे मनुनादेवीसमाराधनवर्णनम्

जनमेजय उवाच

सूर्यचन्द्रान्वयोत्थानां नृपाणांसत्कथाश्रितम् । चरितंभवताप्रोक्तंश्रुतंतदमृतास्पदम्

अधुना श्रोतुमिच्छामि सा देवी जगदम्बिका । मन्वन्तरेषु सर्वेषु यद्यद्रूपेण पूज्यते

यस्मिन्यस्मिश्च वै स्थाने येन येन च कर्मणा ।

"शरीरेण च देवेशी पूजनीया फलप्रदा । येनैव मन्त्रबीजेन यत्र यत्र च पूज्यते ॥"

देव्या विराट्स्वरूपस्य वर्णनं च यथातथम् ॥ ३ ॥

येन ध्यानेन तत्सूक्ष्मे स्वरूपेस्यान्मतेर्गतिः । तत्सर्वंवदविप्रर्षेयेनश्रेयोऽहमाप्नुयाम्

व्यास उवाच

शृणु राजन्प्रवक्ष्यामि देव्याराधनमुत्तमम् । यत्कृतेन श्रुतेनापि नरः श्रेयोऽत्र विन्दते

एवमेतन्नारदेन पृष्टो नारायणः पुरा । तस्मै यदुक्तवान्देवो योगचर्याप्रवर्तकः ॥ ६ ॥
एकदा नारदः श्रीमान्पर्यटन्पृथिवीमिमाम् । नारायणाश्रमं प्राप्तोगतखेदश्चतस्थिवान्
तस्मै योगात्मने नत्वा ब्रह्मदेवतनूद्भवः । पर्यपृच्छदिमं स्वाऽर्थं यत्पृष्टो भवताऽनघ!

नारद उवाच

देवदेव! महादेव! पुराण पुरुषोत्तम !। जगदाधार! सर्वज्ञ! श्लाघनीयोरुसद्गुण !॥९॥

जगतस्तत्त्वमाद्यं यत्तन्मे वद यथेप्सितम् ।
जायते कुत एवेदं कुतश्चेदं प्रतिष्ठितम् ॥ १० ॥

कुतोऽन्तं प्राप्नुयात्काले कुत्र सर्वफलोदयः । केन ज्ञातेनमायैषामोहभूर्नाशमाप्नुयात्
कयाऽर्चयाकिञ्जपेर्नाकिन्ध्यानेनाऽऽत्महृत्कजे । प्रकाशो जायते देवतमस्यर्कोदयोयथा
एतत्प्रश्नोत्तरं देव! ब्रूहि सर्वमशेषत. । यथा लोकस्यतरेदन्धतममं त्वञ्जसैव हि॥१३

व्यास उवाच

एवं देवर्षिणा पृष्टः प्राचीनो मुनिसत्तमः । नारायणो महायोगीप्रतिनन्द्यवचोऽब्रवीत्

नारायण उवाच

शृणु देवर्षिवर्याऽत्र जगतस्तत्त्वमुत्तमम् । येन ज्ञातेनमर्त्यो हि जायते न जगद्भ्रमे

जगतस्तत्त्वमित्येव देवी प्रोक्तामयाऽपि हि ।
ऋषिभिर्देवगन्धर्वैरन्यैश्चाऽपि मनीषिभिः ॥ १६ ॥

सा जगत्सृजते देवी तया च प्रतिपाल्यते । तया च नाश्यतेसर्वमितिप्रोक्तंगुणत्रयात्
तस्याःस्वरूपंवक्ष्यामिदेव्याःसिद्धर्षिपूजितम् । स्मरतासर्वपापघ्नं कामदंमोक्षदंतथा

मनुः स्वायम्भुवस्त्वाद्यः पद्मपुत्रः प्रतापवान् ।
शतरूपापतिः श्रीमान्सर्वमन्वन्तराधिपः ॥ १६ ॥

स मनुः पितरं देवं प्रजापतिमकल्मषम् । भक्त्या पर्यचरत्पूर्वं तमुवाचात्मभूः सुतम्
पुत्र पुत्र! त्वयाकार्यं देव्याराधनमुत्तमम् । तत्प्रसादेन ते तात प्रजासर्गःप्रसिद्ध्यति
एवमुक्तः प्रजास्रष्ट्रा मनुः स्वायम्भुवोविराट् । जगद्योनिं तदादेवींतपसाऽतर्पयद्विभुः
तुष्टाव देवीं देवेशीं समाहितमतिः किल । आद्यांमायां सर्वशक्तिंसर्वकारणकारणाम्

मनुरुवाच

नमो नमस्ते देवेशि ! जगत्कारणकारणे !। शङ्खचक्रगदाहस्ते ! नारायणहृदाश्रिते !
वेदमूर्ते ! जगन्मातः! कारणस्थानरूपिणि !। वेदत्रयप्रमाणज्ञे ! सर्वदेवनुते ! शिवे !
माहेश्वरि! महाभागे ! महामाये ! महोदये !। महादेवप्रियावासे! महादेवप्रियङ्करि !

गोपेन्द्रस्य प्रिये! ज्येष्ठे! महानन्दे! महोत्सवे !।
महामारीभयहरे ! नमो देवादिपूजिते ! ॥ २७ ॥
सर्वमङ्गलमाङ्गल्ये ! शिवे ! सर्वार्थसाधिके !।
शरण्ये! त्र्यम्बके! गौरि ! नारायणि नमोऽस्तुते !॥ २८ ॥

यतश्चेदं यया विश्वमोतं प्रोतञ्च सर्वदा । चैतन्यमेवमाद्यन्तरहितं तेजसां निधिम् ॥
ब्रह्मा यदीक्षणात्सर्वं करोति चहरिःसदा । पालयत्यपि विश्वेशः संहर्ता यदनुग्रहात्
मधुकैटभसम्भूतभयार्तः पद्मसम्भवः । यस्याः स्तवेन मुमुचे घोरदैन्यभवाम्बुधेः ॥

त्वं ह्रीः कीर्तिः स्मृतिः कान्तिः कमला गिरिजा सती ।
दाक्षायणी वेदगर्भा बुद्धिदात्री सदाऽभया ॥ ३२ ॥
स्तोष्ये त्वां च नमस्यामि पूजयामि जपामि च ।
ध्यायामि भावये वीक्षे श्रोष्ये देवि! प्रसीद मे ॥ ३३ ॥
ब्रह्मा वेदनिधिः कृष्णो लक्ष्म्यावासः पुरन्दरः ।
त्रिलोकाधिपतिः पाशी यादसाम्पतिरुत्तमः ॥ ३४ ॥

कुबेरोनिधिनाथोऽभूद्यमोजातः परेतराट् । नैर्ऋतो रक्षसांनाथःसोमोजातोह्यपोमयः

त्रिलोकवन्द्यो लोकेशि ! महामाङ्गल्यरूपिणि !।
नमस्तेऽस्तु पुनर्भूयो जगन्मातर्नमोनमः ॥ ३६ ॥

नारायण उवाच

एवंस्तुता भगवती दुर्गा नारायणी परा । प्रसन्ना प्राह देवर्षे! ब्रह्मपुत्रमिदम्वचः ॥३७

श्रीदेव्युवाच

वरम्वरय राजेन्द्र! ब्रह्मपुत्र! यदिच्छसि । प्रसन्नाऽहंस्तवेनाऽत्रभक्त्याचाऽऽराधनेन च

मनुरुवाच

यदि देवि! प्रसन्नाऽसि भक्त्या कारुणिकोत्तमे !।
तदा निर्विघ्नतःसृष्टिः प्रजायाः स्यात्तवाऽऽज्ञया ॥ ३९ ॥

श्रीदेव्युवाच

प्रजासर्गः प्रभवतु ममाऽनुग्रहतः किल । निर्विघ्नेन नराजेन्द्र! वृद्धिश्चाऽप्युत्तरोत्तरम्
यः कश्चित्पठेत्स्तोत्रं मद्भक्त्या त्वत्कृतं सदा ।
तेषां विद्याप्रजासिद्धिः कीर्तिः कान्त्युदयः खलु ॥ ४१ ॥
जायन्ते धनधान्यानि शक्तिरप्रहता नृणाम् । सर्वत्र विजयो राजन्सुखं शत्रुपरिक्षयः

नारायण उवाच

एवं दत्त्वा वरान्देवी मनवे ब्रह्मसूनवे । अन्तर्धानं गताचाऽऽसीत्पश्यतस्तस्य धीमतः
अथ लब्धवरो राजा ब्रह्मपुत्रः प्रतापवान् । ब्रह्माणमब्रवीत्तात! स्थानं मे दीयतां हरः
यत्राऽहं समधिष्ठाय प्रजाः स्रक्ष्यामि पुष्कलाः ।
यक्ष्यामि यज्ञैर्देवेशं तत्समादिशमा चिरम् ॥ ४५ ॥
इति पुत्रवचः श्रुत्वा प्रजापतिपतिर्विभुः । चिन्तयामास सुचिरं कथंकार्यं भवेदिदम्
सृजतो मे गतः कालो विपुलोऽनन्तसङ्ख्यकः ।
धरा वार्भिः प्लुता मग्ना रसां याताऽखिलाश्रया ॥ ४७ ॥
इदं मच्चिन्तितं कार्यं भगवानादिपूरुषः । करिष्यति सहायो मे यदादेशेऽहमाश्रितः

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामष्टमस्कन्धे
भुवनकोशप्रसङ्गे देव्या मनवे वरदानवर्णनंनाम प्रथमोऽध्यायः ॥ १ ॥

# द्वितीयोऽध्यायः

## भगवताधरण्युद्धारवर्णनम्

नारायण उवाच

एवं मीमांसतस्तस्य पद्मयोनेः परन्तप ! । मन्वादिभिर्मुनिवरैर्मरीच्याद्यैः समन्ततः

ध्यायतस्तस्यनासाग्राद्विरञ्चेः सहसाऽनघ । वाराहपोतो निरगादेकाङ्गुलप्रमाणतः ॥

तस्यैव पश्यतः खस्थः क्षणेन किलनारद ! । करिमात्रं प्रववृधे तदद्भुततमं ह्यभूत् ॥

मरीचिमुख्यैर्विप्रेन्द्रैः सनकाद्यैश्च नारद ! । तद्दृष्ट्वा सौकरं रूपं तर्कयामास पद्मभूः॥

किमेतत्सौकरव्याजं दिव्यं सत्त्वमवस्थितम् ।

अत्याश्चर्यमिदञ्जातं नासिकाया विनिःसृतम् ॥ ५ ॥

दृष्टोऽङ्गुष्ठशिरोमात्रःक्षणाच्छैलेन्द्रसन्निभः । आहोस्विद्भगवान्किम्वायज्ञोमेखेदयन्मनः

इति तर्कयतस्तस्य ब्रह्मणः परमात्मनः । वराहरूपो भगवाञ्जगर्जाऽचलसन्निभः ॥७

विरञ्चिं हर्षयामास संहतांश्च द्विजोत्तमान् ।

स्वगर्जशब्दमात्रेण दिक्प्रान्तमनुनादयन् ॥ ८ ॥

तेनिशम्यस्वखेदस्यक्षयिष्णुं घुघुं रस्वनम् । जनस्तपःसत्यलोकवासिनोऽमरवर्यकाः

छन्दोमयैः स्तोत्रवरैर्ऋक्सामाथर्वसम्भवैः ।

वचोभिः पुरुषं त्वाद्यं द्विजेन्द्राः पर्यवाकिरन् ॥ १० ॥

तेषां स्तोत्रं निशम्याऽद्यो भगवान्हरिरीश्वरः ।

कृपावलोकमात्रेणाऽनुगृहीत्वाऽऽपआविशत् ॥ ११ ॥

तस्याऽन्तर्विशतः क्रूरसटाघातप्रपीडितः । समुद्रोऽथाब्रवीद्देव रक्ष मां शरणार्तिहन्॥

इत्याकर्ण्य समुद्रोक्तं वचनं हरिरीश्वरः । विदारयञ्जलचराञ्जगामाऽन्तर्जले विभुः॥१३

इतस्ततोऽभिधावन्सन्विचिन्वन्पृथिवीं धराम् ।

आघ्रायाऽऽघ्राय सर्वशो धरामासादयच्छनैः ॥ १४ ॥

अन्तर्जलगतां भूमिं सर्वसत्त्वाश्रया तदा । भूमिं स देवदेवेशो दंष्ट्रयोदाजहार ताम्
तां समुद्धृत्य दंष्ट्राग्रे यज्ञेशो यज्ञपूरुषः । शुशुभे दिग्गजोयद्वदुद्धृत्याथसुपद्मिनीम्
तं दृष्ट्वा देवदेवेशो विरञ्चिःस्वमनुःस्वराट् । तुष्टाव वाग्भिर्देवेशं दंष्ट्रोद्धृतवसुन्धरम्

ब्रह्मोवाच

जितन्ते! पुण्डरीकाक्ष! भक्तानामार्तिनाशन !। खर्वीकृतसुराधार! सर्वकामफलप्रद !॥
इयं च धरणी देव शोभते वसुधा तव । पद्मिनीव सुपत्राढ्या मतङ्गजकरोद्धृता॥१९

इदं च ते शरीरं वै शोभते भूमिसङ्गमात् ।
उद्गृताम्बुजशुण्डाग्रकरीन्द्रतनुसन्निभम् ॥ २० ॥

नमो नमस्ते देवेश सृष्टिसंहारकारकः । दानवानां विनाशाय कृतनानाकृते प्रभो ॥
अग्रतश्च नमस्तेऽस्तु पृष्ठतश्च नमो नमः । सर्वामराधारभूत ! बृहद्धाम नमोऽस्तु ते

त्वयाऽहञ्च प्रजासर्गे नियुक्तः शक्तिबृंहितः ।
त्वदाज्ञावशतः सर्गं करोमि विकरोमि च ॥ २३ ॥

त्वत्सहायेन देवेशा अमराश्च पुरा हरे !। सुधां विभेजिरे सर्वंयथाकालंयथाबलम्॥
इन्द्रस्त्रिलोकीसाम्राज्यंलब्धवांस्त्वन्निदेशतः ।भुनक्तिलक्ष्मींबहुलां सुरसङ्घप्रपूजितः
वह्निः पावकता लब्ध्वा जाठरादिविभेदतः । देवासुरमनुष्याणां करोत्याप्यायनं तथा

धर्मराजोऽथ पितॄणामधिपः सर्वकर्मदृक् ।
कर्मणां फलदाताऽसौ त्वन्नियोगाद्धरीश्वरः ॥ २७ ॥

नैरृतो रक्षसामीशो यक्षोविघ्नविनाशनः । सर्वदा प्राणिनांकर्मसाक्षीत्वत्तःप्रजायते
वरुणोयादसामीशो लोकपालोजलाधिपः । त्वदाज्ञाबलमाश्रित्य लोकपालत्वमागतः
वायुर्गन्धवहः सर्वभूतप्राणनकारणम् । जातस्तव निदेशेन लोकपालो जगद्गुरुः ॥
कुबेरः किन्नरादीनां यक्षाणां जीवनाश्रयः । त्वदाज्ञानुगतः सर्वलोकपेषु च मान्यभूः

ईशानः सर्वरुद्राणामीश्वरान्तकरः प्रभुः ।
जातो लोकेशवन्द्योऽसौ सर्वदेवाऽधिपालकः ॥ ३२ ॥

नमस्तुभ्यं भगवते! जगदीशायकुर्महे । यस्यांऽशभागाः सर्वेहिजाता देवाः सहस्रशः

नारद उवाच

एवं स्तुतो विश्वसृजा भगवानादिपूरुषः । लीलाऽवलोकमात्रेणाऽप्यनुग्रहमथासृजत्

तत्रैवाऽभ्यागतं दैत्यं हिरण्याक्षं महासुरम् ।

रुन्धानमध्वनो भीमं गदयाऽताडयद्धरिः ॥ ३५ ॥

तद्रक्तपङ्कदिग्धाङ्गो भगवानादिपूरुषः । उद्धृत्य धरिणीं देवो दंष्ट्रयालीलयाऽप्लुताम्

निवेश्य लोकनाथेशो जगाम स्थानमात्मनः । एतद्भगवतश्चित्रं धरण्युद्धरणं परम् ॥

शृणुयाद्यः पुमान्याऽश्च पठेच्चरितमुत्तमम् ।

सर्वपापविनिर्मुक्तो वैष्णवीं गति माप्नुयात् ॥ ३८ ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामष्टमस्कन्धे

धरण्युद्धारवर्णनंनाम द्वितीयोऽध्यायः ॥ २ ॥

---

# तृतीयोऽध्यायः

## स्वायम्भुवमनुवंशकीर्त्तनम्

नारायण उवाच

महीं देवः प्रतिष्ठाप्य यथास्थाने च नारद !। वैकुण्ठलोकमगमद्ब्रह्मोवाचस्वमात्मजम्

स्वायम्भुव! महाबाहो! पुत्रतेस्विनाम्वर !। स्थानेमहींमयेतिष्ठप्रजाः सृजयथोचितम्

देशकालविभागेन यज्ञेशं पुरुषं यज। उच्चावचपदार्थैश्च यज्ञसाधनकैर्विभो !॥ ३ ॥

धर्ममाचर शास्त्रोक्तं वर्णाश्रमनिबन्धनम् । एतेन क्रमयोगेन प्रजावृद्धिर्भविष्यति ॥४॥

पुत्रानुत्पाद्य गुणतः कीर्त्या कान्त्याऽऽत्मरूपिणः ।

विद्याविनयसम्पन्नान्सदाचारवतां वरान् ॥ ५ ॥

कन्याश्च दत्त्वा गुणवद्यशोवद्भ्यः समाहितः । मनः सम्यक्समाधाय प्रधानपुरुषे परे

भक्तिसाधनयोगेन भगवत्परिचर्यया । गतिमिष्टां सदा वन्द्यां योगिनांगमिताभवान्

इत्यभ्यास्यतु मनुं पुत्रं पद्मयोनिः प्रजापतिः । प्रजासर्गे नियम्यामुंस्वधामप्रत्यपद्यत
प्रजाः सृजत पुत्रेति पितुराज्ञां समादधत् । स्वायम्भुवःप्रजासर्गमकरोत्पृथिवीपतिः

प्रियव्रतोत्तानपादौ मनुपुत्रौ महौजसौ ।
कन्यास्तिस्रः प्रसूताश्च तासां नामानि मे शृणु ॥ १० ॥

आकूतिः प्रथमाकन्या द्वितीयादेवहूतिका । तृतीया च प्रसूतिर्हि विख्यातालोकपावनी
आकूतिंरुचये प्रादात्कर्दमायचमध्यमाम् । दक्षायाऽदात्प्रसूतिं चयासांलोकइमाःप्रजाः
रुचेःप्रजज्ञे भगवान्यज्ञोनामाऽऽदिपुरुषः । आकूत्यादेवहूत्यांचकपिलोऽसौचकर्दमात्

साङ्ख्याचार्यः सर्वलोके विख्यातः कपिलो विभुः ।
दक्षात्प्रसूत्यां कन्याश्च बहुशो जज्ञिरे प्रजाः ॥ १४ ॥

यासां सन्तानसम्भूतादेवतिर्यङ्नरादयः । प्रसूतालोकविख्याताः सर्वे सर्गप्रवर्तकाः
यज्ञश्च भगवान्स्वायम्भुवमन्वन्तरे विभुः । मनुं ररक्ष रक्षोभ्योयामैर्देवगणैर्वृतः ॥

कपिलोऽपि महायोगी भगवान्स्वाऽऽश्रमे स्थितः ।
देवहूत्यै परं ज्ञानं सर्वाविद्यानिवर्तकम् ॥ १७ ॥
सविशेषं ध्यानयोगमध्यात्मज्ञाननिश्चयम् ।
कापिलं शास्त्रमाख्यातं सर्वाज्ञानविनाशनम् ॥ १८ ॥

उपदिश्यमहायोगीसययौपुलहाश्रमम् । अद्याऽपि वर्तते देवःसाङ्ख्याचार्योमहाशयः
यन्नामस्मरणेनाऽपिसाङ्ख्ययोगश्चसिद्ध्यति । तंवन्देकपिलंयोगाचार्यसर्ववरप्रदम्
एवमुक्तं मनोः कन्यावंशवर्णनमुत्तमम् । पठतां शृण्वतां चाऽपि सर्वपापविनाशनम्
अतः परं प्रवक्ष्यामि मनुपुत्रान्वयं शुभम् । यदाकर्णनमात्रेण परं पदमवाप्नुयात् ॥
द्वीपवर्षसमुद्रादिव्यवस्था यत्सुतैः कृता । व्यवहारप्रसिद्ध्यर्थं सर्वभूतसुखाप्तये॥२३

इति श्रीदेवीभागवतेमहापुराणेऽष्टादशसाहस्र्या संहितायामष्टमस्कन्धे
भुवनकोशविस्तारेस्वायम्भुवमनुवंशकीर्तनंनाम
तृतीयोऽध्यायः ॥ ३ ॥

# चतुर्थोऽध्यायः

## प्रियव्रतवंशवर्णनम्

### नारायण उवाच

मनोःस्वायम्भुवस्यासीज्ज्येष्ठःपुत्रः प्रियव्रतः । पितुःसेवापरोनित्यंसत्यधर्मपरायणः

प्रजापतेर्दुहितरं सुरूपां विश्वकर्मणः । बर्हिष्मतीं चोपयेमे समानां शीलकर्मभिः ॥

तस्यां पुत्रान्दश गुणैरन्वितान्भावितात्मनः ।

जनयामास कन्यां चोर्जस्वतीं च यवीयसीम् ॥३ ॥

आग्नीध्रश्चेध्मजिह्वश्च यज्ञबाहुस्तृतीयकः । महावीरश्चतुर्थस्तु पञ्चमो रुक्मशुक्रकः ॥

घृतपृष्ठश्च सवनो मेधातिथिरथाऽष्टमः । वीतिहोत्रःकविश्चेति दशैतेवह्निनामकाः ॥

एतेषां दशपुत्राणां त्रयोऽप्यासन्विरागिणः ।

कविश्च सवनश्चैव महावीर इति त्रयः ॥ ६ ॥

आत्मविद्यापरिष्णाताः सर्वेते ह्यूर्ध्वरेतसः । आश्रमेपरहंसाख्येनिःस्पृहाह्यभवन्मुदा

अपरस्या च जायायां त्रयः पुत्राश्च जज्ञिरे । उत्तमस्तामसश्चैव रैवतश्चेतिविश्रुताः

मन्वन्तराधिपतय एते पुत्रा महौजसः । प्रियव्रतः स राजेन्द्रो बुभुजे जगतीमिमाम्

एकादशार्बुदाब्दानामव्याहतबलेन्द्रियः । यदा सूर्यः पृथिव्याश्च विभागे प्रथमेऽतपत्

भागेद्वितीयेतत्राऽऽसीदन्धकारोदयःकिल । एवंव्यतिकरंराजाविलोक्यमनसाचिरम्

प्रशास्ति मयि भूम्यां च तमःप्रादुर्भवेत्कथम् । एवंनिवारयिष्यामिभूमौयोगबलेन च

एवं व्यवसितो राजा पुत्रः स्वायम्भुवस्य सः ।

रथेनाऽऽदित्यवर्णेन सप्तकृत्वः प्रकाशयन् ॥ १२ ॥

तस्याऽपि गच्छतो राज्ञो भूमौयद्रथनेमयः । पतितास्तेसमुद्राख्यांभेजिरे लोकहेतवे

जाताः प्रदेशास्ते सप्तद्वीपाभूमौविभागशः । रथनेमिसमुत्थास्तेपरिखाःसप्तसिन्धवः

यतआसंस्ततःसप्तभुवोद्वीपाहितेस्मृताः । जम्बुद्वीपःप्लक्षद्वीपःशाल्मलीद्वीपसञ्ज्ञकः

कुशद्वीपः क्रौञ्चद्वीपः शाकद्वीपश्च पुष्करः । तेषां च परिमाणंतुद्विगुणंचोत्तरोत्तरम्
समन्ततश्चोपकल्पं बहिर्भागक्रमेणच । क्षारोदेक्षुरसोदौ च सुरोदश्च घृतोदकः ॥

क्षीरोदो दधिमण्डोदः शुद्धोदश्चेति ते स्मृताः ।
सप्तैते प्रतिविख्याताः पृथिव्यां सिन्धवस्तदा ॥ १९ ॥

प्रथमो जम्बुद्वीपाख्यो यः क्षारोदेनवेष्टितः । तत्पतिर्विदधेराजा पुत्रमाग्नीध्रसञ्ज्ञकम्

प्लक्षद्वीपे द्वितीयेऽस्मिन्द्वीपेक्षुरससंप्लुते ।
आत्मजंदधिपः प्रियव्रत इध्मादिजिह्वकः ॥ २१ ॥
शाल्मलीद्वीप एतस्मिन्सुरोदधिपरिप्लुते ।
यज्ञबाहुं तदधिपं करोति स्म प्रियव्रतः ॥ २२ ॥

कुशद्वीपेऽतिरम्ये च घृतोदेनोपवेष्टिते । हिरण्यरेता राजाऽभूत्प्रियव्रततनूजनिः ॥२३
क्रौञ्चद्वीपे पञ्चमे तु क्षीरोदपरिसम्प्लुते । प्रियव्रतो घृतपृष्ठः पतिरासीन्महाबलः ॥
शाकद्वीपे चान्तरे दधिमण्डोदसङ्कुले । मेधातिथिरभूद्राजा प्रियव्रतसुतो वरः ॥२५
पुष्करद्वीपके शुद्धोदकसिन्धुसमाकुले । वीतिहोत्रो बभूवाऽसौ राजा जनकसम्मतः ॥

कन्यामूर्जस्वतीं नाम्नीं ददावुशनसे विभुः ।
आसीत्तस्या देवयानी कन्या काव्यस्य विश्रुता ॥ २७ ॥

एवं विभज्य पुत्रेभ्यःसप्तद्वीपान्प्रियव्रतः । विवेकवशगोभूत्वायोगमार्गाश्रितोऽभवत्

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामष्टमस्कन्धे
भुवनकोशविषयेप्रियव्रतवंशवर्णनंनाम चतुर्थोऽध्यायः ॥ ४ ॥

---

# पञ्चमोऽध्यायः

## सविस्तरंद्वीपवर्षविभेदवर्णनम्

### श्रीनारायण उवाच

देवर्षे! शृणु विस्तारं द्वीपवर्षविभेदतः । भूमण्डलस्य सर्वस्य यथा दैवप्रकल्पितम् समासात्सम्प्रवक्ष्यामिनाऽलंविस्तरतःक्वचित् ॥ जम्बुद्वीपःप्रथमतःप्रमाणेलक्षयोजनः विशालो वर्तुलाकारो यथाऽब्जस्यचकर्णिका । नववर्षाणियस्मिंश्चनवसाहस्रयोजनैः आयामैः परिसंख्यानि गिरिभिः परितःश्रितैः । अष्टाभिर्दीर्घरूपैश्चसुविभक्तानिसर्वतः धनुर्वत्संस्थिते ज्ञेये द्वे वर्षे दक्षिणोत्तरे । दीर्घाणि तत्र चत्वारि चतुरस्रमिलावृतम् इलावृतं मध्यवर्षं यन्नाभ्यां सुप्रतिष्ठितः । सौवर्णोगिरिराजोऽयंलक्षयोजनमुच्छ्रितः कर्णिकारूप एवाऽयं भूगोलकमलस्य च । मूर्ध्निद्वात्रिंशत्सहस्रयोजनैर्विततस्त्वयम् मूले षोडशसाहस्रस्तावताऽन्तर्गतःक्षितौ । इलावृतस्योत्तरतोनीलःश्वेतश्चशृङ्गवान् त्रयो वै गिरयः प्रोक्ता मर्यादावधयस्त्रिषु । रम्यकाख्ये तथावर्षे द्वितीये च हिरण्मये कुरुवर्षे तृतीये तु मर्यादां व्यञ्जयन्ति ते । प्रागायता उभयतः क्षारोदावधयस्तथा ॥ द्विसहस्रपृथुतरास्ता एकैकशः क्रमात् । पूर्वात्पूर्वाच्चोत्तरस्या दशांशादधिकांशतः दैर्घ्य एव ह्रसन्तीमे नानानदनदीयुताः । इलावृताद्दक्षिणतो निषधो हेमकूटकः ॥१२

त्रयो हिमालयश्चेति प्राग्विस्तीर्णाः सुशोभनाः ।
अयुतोत्सेधभाजस्ते योजनैः परिकीर्तिताः ॥ १३ ॥

हरिवर्षं किम्पुरुषं भारतं च यथातथतम् । विभागात्कथयन्त्येते मर्यादागिरयस्त्रयः इलावृतात्पश्चिमतो माल्यवान्नाम पर्वतः । पूर्वेण च ततः श्रीमान्गन्धमादनपर्वतः१५ आनीलनिषधं त्वेतौ चायतौ द्विसहस्रतः । योजनैः पृथुतांयातौमर्यादाकारकौगिरी केतुमालाख्यभद्राश्ववर्षयोः प्रथितौ च तौ । मन्दरश्च तथा मेरुमन्दरश्च सुपार्श्वकः कुमुदश्चेति विख्याता गिरयो मेरुपादकाः । योजनायुतविस्तारोन्नाहा मेरोश्चतुर्दिशम्

अथाङ्कुम्भकरान्ते तु सर्वतोऽभिविराजिताः । एतेषु गिरिषु प्रायाः पादपाश्चूतजम्बुना
कदम्बन्यग्रोध इति चत्वारः पर्वताः स्थिताः । केतवोगिरिराजेषुएकादशशतोच्छ्रयाः
तावच्छिद्रपविस्ताराः शताख्यपरिणाहिनः । चत्वारश्च ह्रदास्तेषुपयोमध्विक्षुसज्जलाः

यदुपस्पर्शिनो देवा योगैश्वर्याणि विन्दते ।
देवोद्यानानि चत्वारि भवन्ति ललनासुखाः ॥ २२ ॥

नन्दनं चैत्ररथकं वैभ्राजं सर्वभद्रकम् । येषु स्थित्वाऽमरगणा ललनायूथसंयुताः ॥
उपदेवगणैर्गीतमहिमानो महाशयाः । विहरन्ति स्वतन्त्रास्ते यथाकामं यथासुखम्

मन्दरोत्सङ्गसंस्थस्य देवचूतस्य मस्तकात् ।
एकादशशतोच्छ्रायात्फलान्यमृतभाञ्जि च ॥ २५ ॥

गिरिकूटप्रमाणानि सुस्वादूनि मृदूनि च । तेषां विशीर्यमाणानां फलानांसुरसेन च
अरुणोदसवर्णेन अरुणोदा प्रवर्तते । नदी रम्यजला देवदैत्यगजप्रपूजिता ॥ २७ ॥
अरुणाख्या महाराज! वर्तते पापहारिणी । पूजयन्ति च तां देवीं सर्वकामफलप्रदाम्
नानोपहारबलिभिः कल्मषघ्न्यभयप्रदाम् । तस्याः कृपावलोकेन क्षेमारोग्यंव्रजन्तिते

आद्या माया तुलाऽनन्ता पुष्टिरीश्वरमालिनी ।
दुष्टनाशकरी कान्तिदायिनीति स्मृता भुवि ॥ ३० ॥
अस्याः पूजाप्रभावेण जाम्बूनदमुदावहन् ।

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामष्टमस्कन्धे
भुवनलोकवर्णने द्वीपवर्षविभेदवर्णनंनाम पञ्चमोऽध्यायः ॥ ५ ॥

—

इत्येते नारका नाम यातनाभूमयः पराः। कर्मभिश्चापि भूतानां गम्याः पद्मजसम्भव!
इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामष्टमस्कन्धे
नरकस्वरूपवर्णनंनामैकविंशोऽध्यायः ॥ २१ ॥

---

# द्वाविंशोऽध्यायः

## नरकप्रदपातकवर्णनम्

नारद उवाच

कर्मभेदाः कतिविधाः सनातनमुने! मम। श्रोतव्याः सर्वथैवेते यातनाप्राप्तिभूमयः ॥

श्रीनारायण उवाच

यो वै परस्य वित्तानि दारापत्यानि चैव हि। हरते स हि दुष्टात्मा यमानुचरगोचरः
कालपाशेन सम्बद्धो याम्यैरतिभयानकैः। तामिस्रनामनरके पात्यते यातनास्पदे ॥
ताडनं दण्डनञ्चैव सन्तर्जनमतः परम्।
याम्याः कुर्वन्ति पाशाढ्याः कश्मलं याति चैव हि ॥ ४ ॥
मूर्च्छामायाति विवशो नारकी पद्मभूसुत!। यः पतिं वञ्चयित्वातु दारादीनुपभुञ्जति
अन्धतामिस्रनरके पात्यते यमकिङ्करैः। पात्यमानो यत्र जन्तुर्वेदनापरवान्भवेत् ॥ ६
नष्टदृष्टिर्नष्टमतिर्भवत्येवाऽविलम्बतः। वनस्पतिर्भज्यमानमूलो यद्वद्भवेदिह ॥ ७ ॥
तस्मादप्यन्धतामिस्रनाम्ना प्रोक्तः पुरातनैः। एतन्ममाहमिति यो भूतद्रोहेण केवलम्
पुष्णाति प्रत्यहं स्वीयकुटुम्बं कार्यलम्पटः। एतद्विहाय चाऽत्रैव स्वाऽशुभेनपतेदिह
रौरवे नाम नरके सर्वसत्त्वभयावहे। इह लोकेऽमुना ये तु हिंसिता जन्तवः पुरा ॥
त एव रुरवो भूत्वा परत्र पीडयन्ति तम्। तस्माद्रौरवमित्याहुःपुराणज्ञमनीषिणः
रुरुः सर्पादतिक्रूरो जन्तुरुक्तः पुरातनैः। एवं महारौरवाख्यो नरको यत्र पूरुषः ॥१२
यातनां प्राप्यमाणो हि यः परं देहसम्भवः। क्रव्यादा नाम रुरवस्तंक्रव्येघातयन्तिच

य उग्रः पुरुषः क्रूरः पशुपक्षिगणानपि । उपरन्धयते मूढो याम्यास्तं रन्धयन्ति च ॥
कुम्भीपाके तप्ततैले उपर्यपि च नारद !। यावन्ति पशुरोमाणि तावद्वर्षसहस्रकम्॥१५
पितृविप्रब्राह्मणध्रुक्कालसूत्रे स नारके । अग्न्यर्काभ्यां तप्यमाने नारकी विनिवेशितः
क्षुत्पिपासादह्यमानोऽन्तःशरीरस्तथा बहिः । आस्तेशेतेचेष्टतेचाऽवतिष्ठतिचधावति
निजवेदपथाद्यो वै पाखण्डं चोपयाति च । अनापद्यपि देवर्षे! तं पापं पुरुषं भटाः ॥
असिपत्रवनं नाम नरकं वेशयन्ति च । कशया प्रहरन्त्येव नारकी तद्गतस्तदा ॥१६॥
इतस्ततो धावमान उत्तालमतिवेगतः । असिपत्रैश्छिद्यमान उभयत्र च धारभिः ॥२०
सञ्छिमानसर्वाङ्गो हा हतोऽस्मीति मूर्छितः । वेदनां परमा प्राप्तः पतत्येव पदेपदे ॥
स्वधर्मानुगतं भुङ्क्ते पाखण्डफलमल्पधीः । यो राजा राजपुरुषो दण्डयेद्वं स्वधर्मतः
द्विजे शरीरदण्डं च पापीयान्नारकी च सः । नरके सूकरमुखे पात्यते यमकिङ्करैः २३
विनिष्पिष्टावयवको बलवद्भिस्तथेक्षुवत् । आर्तस्वरेण स्वनयन्मूर्छितः कश्मलं गतः

सम्पीड्यमानो बहुधा वेदनां यात्यतीव हि ।
विविक्तपरपीडो योऽप्यविविक्तपरव्यथाम् ॥ २५ ॥

ईश्वराङ्कितवृत्तीनांव्यथामाचरते स्वयम् । स चाऽन्धकूपे पतति तदभिद्रोहयन्त्रिते

तत्राऽसौ जन्तुभिः क्रूरैः पशुभिर्मृगपक्षिभिः ।
सरीसृपैश्चमशकैर्यूकामत्कुणजातिभिः ॥ २७ ॥

मक्षिकाभिश्च तमसि दण्डशूकैश्च पीड्यते । परिक्रामतिचैवाऽत्र कुशरीरेच जन्तुवत्
यस्तुसम्विहितैःपञ्चयज्ञैःकाकैश्चसंस्तुतः । अश्नातिचासम्विभज्ययत्किञ्चिदुपपद्यते
स पापपुरुषः क्रूरैर्याम्यैश्च कृमिभोजने । नरकाधमके दुष्टकर्मणा परिपात्यते ॥३०॥
लक्षयोजनविस्तीर्णे कृमिकुण्डे भयङ्करे । कृमिरूपं समासाद्यभक्ष्यमाणश्चतैः स्वयम्
अप्रत्ताप्रहुतादो यः पातमाप्नोति तत्र वै । यस्तु स्तेयेन च बलाद्धिरण्यं रत्नमेव च
ब्राह्मणस्याऽपहरति अन्यस्याऽपिचकस्यचित् । अनापदिच देवर्षे तममुत्र यमानुगाः
अयस्मयैरग्निपिण्डैः सदृशैर्निष्कुषन्ति च । योऽगम्यांयोषितंगच्छेदगम्यं पुरुषश्चया

तावमुत्राऽपि कशया ताडयन्तो यमानुगाः ।

तिग्मया लोहमय्या च सूर्म्याऽप्यालिङ्गयन्ति तम् ॥ ३५ ॥

तांचापियोषितंसूर्म्याऽऽलिंगयन्तियमानुगाः । यस्तुसर्वाभिगमनः पुरुषः पायसश्चयी

निरयेऽमुत्र तं याम्याः शाल्मलीं रोपयन्ति तम् ।

वज्रकण्टकसंयुक्तां शाल्मलीं तामयस्मयीम् ॥ ३७ ॥

राजन्या राजपुरुषा ये वा पाखण्डवर्तिनः । धर्मसेतुं विभिन्दन्ति ते परेत्य गता नराः

वैतरण्यां पतन्त्येव भिन्नमर्यादपातकाः । नद्यां निरयदुर्गस्य परिखायां च नारद !॥

यादोगणैःसमन्तात्तुभक्ष्यमाणाइतस्ततः । नात्मनावियुजन्त्येवनाऽसुभिश्चापि नारद!

स्वीयेन कर्मपाकेनोपतपन्ति च सर्वतः । विण्मूत्रपूयरक्तैश्च केशास्थिनखमांसकैः ॥

मेदोवसासंयुतायां नद्यामुपपतन्ति ते । वृषली पतयो ये च नष्टशौचा गतत्रपाः ॥

आचारनियमैस्त्यक्ताः पशुचर्यापरायणाः । तेऽत्रानुकष्टगतयो विण्मूत्रश्लेष्मरक्तकैः

श्लेष्ममलसमापूर्णे निपतन्ति दुराग्रहाः । तदेव खादयन्त्येतान्यमानुचरवर्गकाः ॥४३

ये श्वानगर्दभादीनां पतयोवै द्विजातयः । मृगयारम्भिका नित्यमतीर्थे मृगघातकाः

परेतांस्तान्यमभटालक्ष्यीभूतान्नराधमान् । इषुभिश्चविभिन्दन्तितांस्तान्दुर्नयमागतान्

ये दम्भा दम्भयज्ञेषु पशून्घ्नन्ति नराधमाः । तानमुष्मिन्यमभटा नरके वैशसे तदा

निपात्य पीडयन्त्येवकशाघातैर्दुरासदैः । यो भार्यां च सवर्णाम्वैद्विजोमदनमोहितः

रेतः पाययते मूढोऽमुत्र तंयमकिङ्कराः । रेतः कुण्डेपातयन्ति रेतःसम्पाययन्ति च

ये दस्यवोऽग्निदाश्चैव गरदाः सार्थघातकाः ।

ग्रामान्सार्थान्विलुम्पन्ति राजानो राजपूरुषाः ॥ ५० ॥

तान्परेतान्यमभटा नयन्ति श्वानकादनम् । विंशत्यधिकसंख्याताः सारमेयामहाद्भुताः

सप्तशत्या समाख्याता रभसं खादयन्ति ते । सारमेयादनं नाम नरकं दारुणं मुने !॥

अतः परं प्रवक्ष्यामि अवीचिप्रमुखान्मुने !॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामष्टमस्कन्धे

नरकप्रदपातकवर्णनंनाम द्वाविंशोऽध्यायः ॥ २२ ॥

---

# त्रयोविंशोऽध्यायः

## अवशिष्टनरकवर्णनम्

### श्रीनारायण उवाच

ये नराः सर्वदा साक्ष्ये अनृतं भाषयन्ति च। दाने विनिमयेऽर्थस्य देवर्षे! पापबुद्धयः
तेप्रेत्याऽमुत्रनरकेअवीच्याख्येऽतिदारुणे। योजनानाशतोच्छ्रायाद्गिरिमूर्ध्नःपतन्तिहि
अनाकाशेऽधःशिरसस्तदवीचीतिनामके। यत्र स्थलं दृश्यते च जलवद्वीचिसंयुतम्
अवीचिमत्ततस्तत्र तिलशश्छिन्नविग्रहः। म्रियते नैव देवर्षे! पुनरेवाऽवरोप्यते ॥ ४

यो वा द्विजो वा राजन्यो वैश्यो वा ब्रह्मसम्भव!।
सोमपीथस्तत्कलत्रं सुरां वा पिबतीव हि ॥ ५ ॥

प्रमादतस्तु तेषां वै निरये परिपातनम्। कुर्वन्तियमदूतास्ते पानं कार्ष्णायसो मुने!
वह्निना द्रवमाणस्य नितरां ब्रह्मसम्भव!। सम्भावनेन स्वस्यैवयोऽधमोऽपिनराधमः
विद्याजन्मतपोवर्णाश्रमाचारवतो नरान्। वरीयसोऽपि न बहु मन्यते पुरुषाधमः ॥८
स नीयते यमभटैः क्षारकर्दमनामके। निरयेऽर्वाक्शिरा घोरां दुरन्तयातनाश्नुते ॥६
ये वै नरा यजन्त्यन्यं नरमेधेन मोहिताः। स्त्रियोऽपि वा नरपशुं खादन्त्यत्र महामुने
पशवो निहतास्ते तु यमसद्मनि सङ्गताः। सौनिका इव ते सर्वे विदार्य सितधारया
असृक्पिबन्ति नृत्यन्ति गायन्तिबहुधा मुने!। यथेह मांसभोक्तारःपुरुषादादुरासदाः
अनागसोऽपि येऽरण्ये ग्रामे वाब्रह्मपुत्रक!। वैश्रम्भकैरुपसृतान्विश्रम्भय्यजिजीविषून्
शूलसूत्रादिषु प्रोतान्क्रीडनोत्कारकानिव। पातयन्ति च ते प्रेत्य शूलपातेपतन्त्विहि

शूलादिषु प्रोतदेहाः क्षुत्तृड्भ्यां चाऽतिपीडिताः।
तिग्मतुण्डैः कङ्कबकैरितश्चेतश्च ताडिताः ॥ १५ ॥

पीडिता आत्मशमलं बहुधा संस्मरन्ति हि। ये भूतानुद्वेजयन्ति नरा उल्वणवृत्तयः
यथा सर्पादिकास्तेऽपि नरके निपतन्तिहि। दन्दशूकाभिधानेचयत्रोत्तिष्ठन्तिसर्वतः

पञ्चाननाः सप्तमुखा ग्रसन्ति नरकागतान् । यथा बिलेशया विप्रक्रूरबुद्धिसमन्विताः
येऽवटेषु कुसूलादिगुहादिषु निरुन्धते ।
तानमुत्रोद्यतकराः कीनाशपरिसेवकाः ॥ १६ ॥
तेष्वेवोपविशित्वा च वह्निना सगरेण च । धूमेन च निरुन्धन्ति पापकर्मरतान्नरान्
योऽतिथीन्समयप्राप्तान्दिधक्षुरिवचक्षुषा । पापेनेहाऽऽलोकयेच्च स्वयं गृहपतिर्द्विजः
तस्याऽपिपापदृष्टेर्हि निरये यमकिङ्कराः । अक्षिणी वज्रतुण्डा ये कङ्काःकाकवटादयः
गृध्राः क्रूरतराश्चापि प्रसह्योत्पाटयन्ति हि ।
य आढ्याभिमतिर्याति अहङ्कृत्याऽतिगर्वितः ॥ २२ ॥
तिर्यक्प्रेक्षणएवात्राऽभिविशङ्कीनराधमः । चिन्तयाऽर्थस्य सर्वत्रायतिव्ययस्वरूपया
शुष्यद्धृदयवक्त्रश्च निर्वृतिं नैव गच्छति । ग्रहवद्रक्षते चाऽर्थं स प्रेतो यमकिङ्करैः
सूचीमुखे च नरके पात्यते निजकर्मणा । वित्तग्रहं च पुरुषं वायका इव याम्यकाः ॥
किङ्कराः सर्वतोऽङ्गेषु सूत्रैः परिवयन्ति हि । एते बहुविधाविप्रनरकाः पापकर्मणाम्
नराणां शतशः सन्ति यातनास्थानभूमयः । सहस्रशोऽपिदेवर्षेउक्तानुक्तांस्तथाऽपिहि
विशन्तिनरकानेतान्यातनाबहुलान्मुने । तथाधर्मपराश्चाऽपिलोकान्यान्तिसुखोद्गतान्
स्वधर्मो बहुधा गीतो यथा तव महामुने ।। देवीपूजनरूपो हि देव्याराधनलक्षणः ॥
येनाऽनुष्ठितमात्रेण नरो न नरकं व्रजेत् । सा देवी भवपाथोधेरुद्धर्त्री पूजिता नृणाम्

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामष्टमस्कन्धे
अवशिष्टनरकवर्णनंनाम त्रयविंशोऽध्यायः ॥ २३ ॥

# चतुर्विंशोऽध्यायः

## समाराधनविधानेतिथ्यादिक्रमेणदेवीपूजननिरूपणम्

### नारद उवाच

धर्मश्च कीदृशस्तात देव्याराधनलक्षणः । कथमाराधिता देवी सा ददाति परं पदम्
आराधनविधिः को वा कथमाराधिता कदा । केन सा दुर्गनरकाद्दुर्गात्राणप्रदाभवेत्

### श्रीनारायण उवाच

देवर्षे! शृणु चित्तैकाग्र्येण मे विदुषाम्वर!। यथाप्रसीदतेदेवी धर्माराधनतः स्वयम्
स्वधर्मो यादृशः प्रोक्तस्तं च मेशृणु नारद । अनादाविहसंसारेदेवीसम्पूजितास्वयम्
परिपालयते घोरसङ्कटादिषु सा मुने!। सादेवी पूज्यते लोकेयथावत्तद्विधि शृणु ॥
प्रतिपत्तिथिमासाद्य देवीमाज्येन पूजयेत् । घृतं दद्याद्ब्राह्मणाय रोगहीनो भवेत्सदा
द्वितीयायां शर्करया पूजयेज्जगदम्बिकाम् । शर्करां प्रददेद्विप्रे दीर्घायुर्जायते नरः ॥७
तृतीयादिवसे देव्यै दुग्धंपूजनकर्मणि । क्षीरंदत्त्वाद्विजाग्र्याय सर्वदुःखातिगोभवेत्
चतुर्थ्यां पूजनेऽपूपा देया देव्यै द्विजाय च । अपूपा एव दातव्या नविघ्नैरभिभूयते
पञ्चम्यां कदलीजातं फलं देव्यै निवेदयेत् । तदेव ब्राह्मणे देयं मेधावान्पुरुषो भवेत्

षष्ठीतिथौ मधुप्रोक्तं देवीपूजनकर्मणि ।
ब्राह्मणाय च दातव्यं मधुकान्तिर्यतो भवेत् ॥ ११ ॥

सप्तम्यां गुडनैवेद्यं देव्यै दत्त्वाद्विजाय च । गुडं दत्त्वा शोकहीनो जायते द्विजसत्तम
नारिकेलमथाष्टम्यां देव्यै नैवेद्यमर्पयेत् । ब्राह्मणायप्रदातव्यं तापहीनो भवेन्नरः ॥ १३
नवम्यांलाजमम्बायैचाऽर्पयित्वा द्विजाय च । दत्त्वासुखाधिकोभूयादिहलोकेपरत्रच
दशम्यामर्पयित्वा तु देव्यै कृष्णतिलान्मुने । ब्राह्मणाय प्रदत्त्वा तुयमलोकाद्भयंन हि
एकादश्यां दधि तथादेव्यै चार्पयते तु यः । ददाति ब्राह्मणायैतद्देवीप्रियतमोभवेत्
द्वादश्यां पृथुकान्देव्यै दत्त्वाऽऽचार्याययोद्ददेत् । तानेवचमुनिश्रेष्ठसदेवीप्रियतांव्रजेत्

त्रयोदश्यां च दुर्गायै चणकान्प्रददाति च । तानेवदत्त्वाविप्रायप्रजासन्ततिमान्भवेत
चतुर्दश्यां च देवर्षे! देव्यै सक्तून्प्रयच्छति । तानेव दद्याद्विप्रायशिवस्य दयितोभवेत्

पायसं पूर्णिमातिथ्यामपर्णायै प्रयच्छति ।

ददाति च द्विजाग्र्याय पितृनुद्धरतेऽखिलान् ॥ २० ॥

तत्तिथौ हवनं प्रोक्तं देवीप्रीत्यै महामुने !। तत्तत्तिथ्युक्तवस्तूनामशेषारिष्टनाशनम् ॥
रविवारे पायसं च नैवेद्यं परिकीर्तितम् । सोमवारे पयः प्रोक्तं भौमे च कदलीफलम्
बुधवारे च सम्प्रोक्तं नवनीतं नवं द्विजः । गुरुवारे शर्करां च सितां भार्गववासरे ॥
शनिवारे घृतं गव्यं नैवेद्यं परिकीर्तितम् । सप्तविंशतिनक्षत्रनैवेद्यं श्रूयतां मुने !॥ २४
घृतं तिलंशर्करांचदधिदुग्धंकिलाटकम् । दधिकूर्चीं मोदकं चफेणिकां घृतमण्डकम्
कंसारं वटपत्रं च घृतपूरमतः परम् । वटकं कोकरसकं पूरणं मधु सूरणम् ॥ २६ ॥
गुडं पृथुकद्राक्षे च खर्जूरं चैव चारकम् । अपूपं नवनीतं च मुद्गं मोदक एव च ॥
मातुलिङ्गमिति प्रोक्तं भनैवेद्यं च नारद !। विष्कम्भादिषुयोगेषुप्रवक्ष्यामिनिवेदनम्
पदार्थानां कृतेष्वेषु प्रीणाति जगदम्बिका । गुडं मधु घृतं दुग्धं दधि तक्रंत्वपूपकम्

नवनीतं कर्कटीं च कूष्माण्डं चाऽपि मोदकम् ।

पनसं कदलं जम्बुफलमाम्रफलं तिलम् ॥ ३० ॥

नारङ्गं दाडिमञ्चैवं बदरीफलमेव च । धात्रीफलं पायसञ्च पृथुकं चणकं तथा ॥ ३१
नारिकेलं जम्भफलं कसेरुं सूरणं तथा । एतानि क्रमशो विप्र! नैवेद्यानि शुभानि च॥
विष्कम्भादिषु योगेषु निर्णीतानिमनीषिभिः ।अथनैवेद्यमाख्यास्येकरणानांपृथङ्मुने
कंसारं मण्डकं फेणी मोदकं वटपत्रकम् । लड्डुकं घृतपूरं च तिलं दधि घृतं मधु॥
करणानामिदंप्रोक्तंदेवीनैवेद्यमादरात् । अथाऽन्यत्सम्प्रवक्ष्यामि देवीप्रीतिकरं परम्
विधानं नारद मुने शृणु तत्सर्वमादृतः । चैत्रशुक्लतृतीयायां नरो मधुकवृक्षकम् ॥३६
पूजयेत्पञ्च खाद्यं च नैवेद्यमुपकल्पयेत् । एवं द्वादशमासेषु तृतीयातिथिषु क्रमात् ॥
शुक्लपक्षे विधानेन नैवेद्यमभिदध्महे । वैशाखमासे नैवेद्यं गुडयुक्तं च नारद !॥ ३८ ॥
ज्येष्ठमासे मधु प्रोक्तं देवीप्रीत्यर्थमेव तु । आषाढे नवनीतञ्च मधुकस्य निवेदनम् ॥

श्रावणे दधि नैवेद्यं भाद्रमासे च शर्करा ।
आश्विने पायसं प्रोक्तं कार्तिके पय उत्तमम् ॥ ४० ॥
मार्गे फेण्युत्तमा प्रोक्ता पौषे च दधिकूर्चिका । माघे मासिचनैवेद्यंघृतंगव्यंसमाहरेत् ।
नारिकेलं च नैवेद्यं फाल्गुने परिकीर्तितम् । एवं द्वादशनैवेद्यैर्मासे च क्रमतोऽर्चयेत्
मङ्गलावैष्णवी माया कालरात्रिर्दुरत्यया । महामाया मतङ्गीच काली कमलवासिनी ॥
शिवा सहस्रचरणा सर्वमङ्गलरूपिणी । एभिर्नामपदैर्देवीं मण्डके परिपूजयेत् ॥ ४४ ॥
ततः स्तुवीत देवेशीं मण्डकस्थां महेश्वरीम् । सर्वकामसमृद्ध्यर्थं व्रतपूर्णत्वसिद्धये
नमः पुष्करनेत्रायै जगद्धात्र्यै नमोऽस्तुते । माहेश्वर्यै महादेव्यै महामङ्गलमूर्तये ॥ ४६
परमा पापहन्त्री च परमार्गप्रदायिनी । परमेश्वरी प्रजोत्पत्तिः परब्रह्मस्वरूपिणी ॥
मददात्री मदोन्मत्ता मानगम्या महोन्नता । मनस्विनी मुनिध्येयामार्तण्डसहचारिणी
जयलोकेश्वरि! प्राज्ञे! प्रलयाबुदसन्निभे !। महामोहविनाशार्थं पूजितासि सुरासुरैः॥
यमलोकाभावकर्त्रीयमपूज्या यमाग्रजा । यमनिग्रहरूपा च यजनीये! नमोनमः ॥ ५०॥
समस्वभावा सर्वेशी सर्वसङ्गविवर्जिता । सङ्गनाशकरीकाम्यरूपा कारुण्यविग्रहा ॥
कङ्कालक्रूरा कामाक्षी मीनाक्षी मर्मभेदिनी । माधुर्यरूपशीला च मधुरस्वरपूजिता ॥
महामन्त्रवती मन्त्रगम्या मन्त्रप्रियङ्करी । मनुष्यमानसगमा मन्मथारि प्रियङ्करी ॥
अश्वत्थवटनिम्बाम्रकपित्थबदरीगते !। पनसार्ककरीरादिक्षीरवृक्षस्वरूपिणि !॥ ५४॥
दुग्धवल्लीनिवासार्हे दयनीये दयाधिके । दाक्षिण्यकरुणारूपे जयसर्वज्ञवल्लभे ॥ ५५ ॥
एवं स्तवेन देवेशीं पूजनान्ते स्तुवीत ताम् । व्रतस्य सकलं पुण्यं लभते सर्वदा नरः
नित्यं यः पठतेस्तोत्रंदेवीप्रीतिकरंनरः । आधिव्याधिभयंनास्तिरिपुभीतिर्नतस्यहि
अर्थार्थी चाऽर्थमाप्नोति धर्मार्थी धर्ममाप्नुयात् ।
कामानवाप्नुयात्कामी मोक्षार्थी मोक्षमाप्नुयात् ॥ ५८ ॥
ब्राह्मणोवेदसम्पन्नोविजयीक्षत्रियोभवेत् । वैश्यश्चधनधान्याढ्योभवेच्छूद्रःसुखाधिपः
स्तोत्रमेतच्छ्राद्धकाले यः पठेत्प्रयतो नरः । पितृणामक्षया तृप्तिर्जायते कल्पवर्तिनी ॥
एवमाराधनं देव्याः समुक्तं सुरपूजितम् । यः करोति नरोभक्त्यासदेवीलोकभाग्भवेत्

देवीपूजनतो विप्रसर्वे कामा भवन्तिहि। सर्वपापहतिः शुद्धा मतिरन्ते प्रजायते॥
यत्र तत्र भवेत्पूज्यो मान्यो मानधनेषु च। जायते जगदम्बायाः प्रसादेन विरञ्चिज!

नरकाणां न तस्याऽस्ति भयं स्वप्नेऽपि कुत्रचित्।

महामायाप्रसादेन पुत्रपौत्रादिवर्धनः॥ ६४॥

देवीभक्तोभवत्येव नाऽत्रकार्या विचारणा। इत्येवं तेसमाख्यातं नरकोद्धारलक्षणम्
पूजनं हि महादेव्याः सर्वमङ्गलकारकम्। मधूकपूजनं तद्वन्मासानां क्रमतो मुने!॥६६
सर्वं समाचारेद्यस्तु पूजनं मधुकाह्वयम्। न तस्य रोगबाधादि भयमुद्भवतेऽनघ!॥
अथाऽन्यदपि वक्ष्यामि प्रकृतेःपञ्चकं परम्। नाम्ना रूपेणचोत्पत्त्याजगदानन्ददायकम्
साख्यानं च समाहात्म्यं प्रकृतेःपञ्चकं मुने!। कुतूहलकरं चैव शृणु मुक्तिविधायकम्

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां
वैयासिक्यामष्टमस्कन्धेसमाराधनविधानेदेवीपूजननिरूपणं नाम
चतुर्विंशोऽध्यायः॥ २४॥

स्कन्धश्चाऽयं समाप्तः॥

नन्दाग्निवसुभिः ( ८३९ ) पद्यैर्द्वैपायनमुखच्युतैः।
देवीभागवतस्याऽस्याऽष्टमः स्कन्ध उदीरितः॥ १॥

——:o:——

॥ श्रीगणेशायनमः ॥

* श्रीमहालक्ष्म्यैनमः *

# देवीभागवतपुराणम्

## नवमःस्कन्धः

### प्रथमोऽध्यायः

नारायणनारदसम्वादेप्रकृतिचरित्रवर्णनम्

श्रीनारायण उवाच

गणेशजननी दुर्गाराधालक्ष्मीः सरस्वती । सावित्रीचसृष्टिविधौप्रकृतिःपञ्चधास्मृता

नारद उवाच

आविर्बभूव सा केन का वा साज्ञानिनाम्वर !। किंवातल्लक्षणंसाधोबभूवपञ्चधाकथम्

सर्वासां चरितं पूजाविधानंगुणईप्सितः । अवतारःकुत्रकस्यास्तन्मेव्याख्यातुमर्हसि

श्रीनारायण उवाच

प्रकृतेर्लक्षणं वत्स ! को वा वक्तुं क्षमो भवेत् ।

किञ्चित्तथाऽपि वक्ष्यामि यच्छ्रुतं धर्मवक्त्रतः ॥ ४ ॥

प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः । सृष्टौ प्रकृष्टा या देवी प्रकृतिःसाप्रकीर्तिता
गुणे सत्त्वे प्रकृष्टे च प्रशब्दो वर्तते श्रुतः । मध्यमे रजसि कृश्चतिशब्दस्तमसिस्मृतः

त्रिगुणात्मस्वरूपा या सा च शक्तिसमन्विता ।
प्रधाना सृष्टिकरणे प्रकृतिस्तेन कथ्यते ॥ ७ ॥

प्रथमे वर्तते प्रश्च कृतिश्च सृष्टिवाचकः । सृष्टेरादौ च या देवी प्रकृतिः सा प्रकीर्तिता

योगेनाऽऽत्मा सृष्टिविधौ द्विधारूपो बभूव सः ।
पुमांश्च दक्षिणार्धाङ्गो वामार्धा प्रकृतिः स्मृता ॥ ६ ॥
सा च ब्रह्मस्वरूपा च नित्या सा च सनातनी ।
यथाऽऽत्मा च तथा शक्तिर्यथाऽग्नौ दाहिका स्थिता ॥ १० ॥

अत एव हि योगीन्द्रैः स्त्रीपुम्भेदो न मन्यते । सर्वं ब्रह्ममयं ब्रह्मञ्छश्वत्सदपि नारद

स्वेच्छामयस्येच्छया च श्रीकृष्णस्य सिसृक्षया ।
साऽऽविर्बभूव सहसा मूलप्रकृतिरीश्वरी ॥ १२ ॥

तदाज्ञया पञ्चविधा सृष्टिकर्मविभेदिका । अथ भक्तानुरोधाद्वा भक्तानुग्रहविग्रहा ॥१३
गणेशमाता दुर्गा या शिवरूपा शिवप्रिया । नारायणीविष्णुमायापूर्णब्रह्मस्वरूपिणी
ब्रह्मादिदेवैर्मुनिभिर्मनुभिः पूजिता स्तुता । सर्वाधिष्ठात्री देवी सा शर्वरूपासनातनी
धर्मसत्यापुण्यकीर्तिर्यशोमङ्गलदायिनी । सुखमोक्षहर्षदात्री शोकार्तिदुःखनाशिनी ॥
शरणागतदीनार्तपरित्राणपरायणा । तेजःस्वरूपा परमा तदधिष्ठातृदेवता ॥ १७ ॥

सर्वशक्तिस्वरूपा च शक्तिरीशस्य सन्ततम् ।
सिद्धेश्वरी सिद्धिरूपा सिद्धिदा सिद्धिरीश्वरी ॥ १८ ॥
बुद्धिर्निद्रा क्षुत्पिपासा छाया तन्द्रा दया स्मृतिः ।
जातिः क्षान्तिश्च भ्रान्तिश्च शान्तिः कान्तिश्च चेतना ॥ १६ ॥

तुष्टिः पुष्टिस्तथा लक्ष्मीर्धृतिर्मायातथैवच । सर्वशक्तिस्वरूपासाकृष्णस्यपरमात्मनः

उक्तः श्रुतौ श्रुतगुणश्चाऽतिस्वल्पोयथागमम् ।
गुणोऽस्त्यनन्तोऽनन्ताया अपरां च निशामय ॥ २१ ॥

शुद्धसत्त्वस्वरूपा या पद्मा सा परमात्मनः। सर्वसम्पत्स्वरूपा सा तदधिष्ठातृदेवता
कान्ताऽतिदान्ता शान्ता चसुशीला सर्वमङ्गला। लोभमोहकामरोषमदाहङ्कारवर्जिता
भक्तानुरक्ता पत्युश्च सर्वाभ्यश्च पतिव्रता। प्राणतुल्या भगवतः प्रेमपात्रं प्रियम्वदा॥
सर्वसम्यात्मिका देवी जीवनोपायरूपिणी महालक्ष्मीश्च वैकुण्ठे पतिसेवारता सती
स्वर्गे च स्वर्गलक्ष्मीश्चराजलक्ष्मीश्चराजसु। गृहेषुगृहलक्ष्मीश्चमर्त्यानांगृहिणांतथा
सर्वप्राणिषु द्रव्येषु शोभारूपा मनोहरा। कीर्तिरूपा पुण्यवतां प्रभारूपा नृपेषु च॥
वाणिज्यरूपा वणिजां पापिनां कलहाङ्कुरा। दयारूपाचकथितावेदोक्तासर्वसम्मता
सर्वपूज्यासर्ववन्द्या चान्यां मत्तोनिशामय। वाग्बुद्धिविद्याज्ञानाधिष्ठात्रीचपरमात्मनः

सर्वविद्यास्वरूपा या सा च देवी सरस्वती।
सा बुद्धिः कविता मेधा प्रतिभा स्मृतिदा नृणाम्॥ ३० ॥

नानाप्रकारसिद्धान्तभेदार्थकलना मता। व्याख्या बोधस्वरूपा च सर्वसन्देहभञ्जिनी
विचारकारिणी ग्रन्थकारिणीशक्तिरूपिणी। स्वरसङ्गीतसन्धानतालकारणरूपिणी
विषयज्ञानवाग्रूपाप्रतिविश्वोपजीविनी। व्याख्यावादकरीशान्तावीणापुस्तकधारिणी
शुद्धसत्त्वस्वरूपा च सुशीला श्रीहरिप्रिया। हिमचन्दनकुन्देन्दुकुमुदाम्भोजसन्निभा
यजन्ती परमात्मानं श्रीकृष्णं रत्नमालया। तपःस्वरूपा तपसांफलदात्रीतपस्विनाम्

सिद्धिविद्यास्वरूपा च सर्वसिद्धिप्रदा सदा।
यया विना तु विप्रौघो मूको मृतसमः सदा॥ ३६ ॥

देवी तृतीया गदिता श्रुत्युक्ता जगदम्बिका। यथागमं यथा किञ्चिदपरांत्वंनिबोधमे
माता चतुर्णां वर्णानां च छन्दसाम्। सन्ध्यावन्दनमन्त्राणां तन्त्राणां च विचक्षणा
द्विजातिजातिरूपा च जपरूपा तपस्विनी। ब्रह्मण्यतेजोरूपा च सर्वसंस्काररूपिणी

पवित्ररूपा सावित्री गायत्री ब्रह्मणः प्रिया।
तीर्थानि यस्याः संस्पर्शं वाञ्छन्ति ह्यात्मशुद्धये॥ ४० ॥

शुद्धस्फटिकसङ्काशा शुद्धसत्त्वस्वरूपिणी। परमानन्दरूपा च परमा च सनातनी॥
परब्रह्मस्वरूपा च निर्वाणपददायिनी। ब्रह्मतेजोमयी शक्तिस्तदधिष्ठातृदेवता॥४२॥

यत्पादरजसा पूतं जगत्सर्वं च नारद !। देवी चतुर्थी कथिता पञ्चमीं वर्णयामि ते॥
पञ्चप्राणाधिदेवी या पञ्च प्राणस्वरूपिणी । प्राणाधिकप्रियतमा सर्वाभ्यःसुन्दरीपरा
सर्वयुक्ता च सौभाग्यमानिनी गौरवान्विता । वामाङ्गार्धस्वरूपाचगुणेनतेजसासमा
परावरा सारभूता परमाद्या सनातनी । परमानन्दरूपा च धन्या मान्या च पूजिता ॥
रासक्रीडाधिदेवी श्रीकृष्णस्यपरमात्मनः । रासमण्डलसम्भूतारासमण्डलमण्डिता

रासेश्वरी सुरसिका रासावासनिवासिनी ।
गोलोकवासिनी देवी गोपीवेषविधायिका ॥ ४८ ॥

परमाह्लादरूपाचसन्तोषहर्षरूपिणी । निर्गुणा च निराकारा निर्लिप्ताऽऽत्मस्वरूपिणी
निरीहा निरहङ्कारा भक्तानुग्रहनुग्रहा । वेदानुसारिध्यानेन विज्ञाता सा विचक्षणैः ॥
दृष्टिदृष्टा न सा चेशः सुरेन्द्रैर्मुनिपुङ्गवैः । वह्निशुद्धांशुकधरा नानालङ्कारभूषिता ॥५१॥
कोटिचन्द्रप्रभा पुष्टसर्वश्रीयुक्तविग्रहा । श्रीकृष्णभक्तिदास्यैककरा च सर्वसम्पदाम्
अवतारे च वाराहे वृषभानुसुता च या । यत्पादपद्मसंस्पर्शात्पवित्रा च वसुन्धरा ॥
ब्रह्मादिभिरदृष्टाया सर्वैर्दृष्टा च भारते । स्त्रीरत्नसारसम्भूता कृष्णवक्षःस्थले स्थिता
यथाऽम्बरे नवघने लोला सौदामनी मुने !। षष्टिवर्षसहस्राणि प्रतप्तं ब्रह्मणा पुरा॥५५
यत्पादपद्मनखरदृष्टये चाऽऽत्मशुद्धये । न धदृष्टं च स्वप्नेऽपिप्रत्यक्षस्याऽपिकाकथा
तेनैव तपसा दृष्टा भुवि वृन्दावने वने । कथिता पञ्चमी देवी सा राधाचप्रकीर्तिता

अंशरूपाः कलारूपाः कलांशांशांशसम्भवाः ।
प्रकृतेः प्रतिविश्वेषु देव्यश्च सर्वयोषितः ॥ ५८ ॥

परिपूर्णतमाः पञ्च विद्यादेव्यः प्रकीर्तिताः । या याः प्रधानांशरूपावर्णयामिनिशामय
प्रधानांशस्वरूपा सा गङ्गा भुवनपावनी । विष्णुविग्रहसम्भूता द्रवरूपा सनातनी ॥
पापिपापेध्मदाहाय ज्वलदग्निस्वरूपिणी । सुखस्पर्शा स्नानपानैर्निर्वाणपदायिनी ॥
गोलोकस्थानप्रस्थानसुखसोपानरूपिणी । पवित्ररूपा तीर्थानां सरितां च परावरा
शम्भुमौलिजटामेरुमुक्तापङ्क्तिस्वरूपिणी । तपःसम्पादिनीसद्योभारतेषुतपस्विनाम्
चन्द्रपद्मक्षीरनिभा शुद्धसत्त्वस्वरूपिणी । निर्मला निरहङ्कारा साध्वी नारायणप्रिया

प्रधानांशस्वरूपाचतुलसीविष्णुकामिनी । विष्णुभूषणरूपाच विष्णुपादस्थितासती
तपः सङ्कल्पपूजादिसङ्घसम्पादिनी मुने !। सारभूता च पुष्पाणांपवित्रा पुण्यदासदा
दर्शनस्पर्शनाभ्याञ्च सद्योनिर्वाणदायिनी । कलौ कलुषशुष्केध्मदहनायाऽग्निरूपिणी
यत्पादपद्मसंस्पर्शात्सद्यःपूता वसुन्धरा । यत्स्पर्शदर्शने चैवेच्छन्ति तीर्थानि शुद्धये॥
यया विनाचविश्वेषुसर्वं कर्म च निष्फलम् । मोक्षदायामुमुक्षूणांकामिनांसर्वकामदा
कल्पवृक्षस्वरूपाया भारते वृक्षरूपिणी । भारतीनां प्रीणनाय जाता या परदेवता ॥
प्रधानांशस्वरूपा या मनसा कश्यपात्मजा । शङ्करप्रियशिष्या च महाज्ञानविशारदा
नागेश्वरस्याऽनन्तस्य भगिनी नागपूजिता । नागेश्वरीनागमातासुन्दरी नागवाहिनी
नागेन्द्रगणसंयुक्ता नागभूषणभूषिता । नागेन्द्रवन्दिता सिद्धा योगिनी नागशायिनी

विष्णुरूपा विष्णुभक्ता विष्णुपूजापरायणा ।
तपःस्वरूपा तपसां फलदात्री तपस्विनी ॥ ७४ ॥

दिव्यं त्रिलक्षवर्षं च तपस्तप्त्वा च या हरेः । तपस्विनीषु पूज्याचतपस्विषुचभारते
सर्वमन्त्राधिदेवी च ज्वलन्ती ब्रह्मतेजसा । ब्रह्मस्वरूपा परमा ब्रह्मभावनतत्परा॥७६
जरत्कारुमुनेः पत्नीकृष्णांशस्यपतिव्रता । आस्तीकस्यमुनेर्मातापवरस्यतपस्विनाम्
प्रधानांशस्वरूपा या देवसेना च नारद !। मातृकासुपूज्यतमा सा षष्ठी च प्रकीर्तिता
पुत्रपौत्रादिदात्री च धात्री त्रिजगतांसती । षष्ठांशरूपा प्रकृतेस्तेन षष्ठी प्रकीर्तिता
स्थानेशिशूनांपरमावृद्धरूपाच योगिनी । पूजा द्वादशमासेषु यस्या विश्वेषुसन्ततम्
पूजा च सूतिकागारे पुरा षष्ठदिने शिशोः । एकविंशतिमे चैव पूजा कल्याणहेतुकी
मुनिभिर्नमिताचैषा नित्यकामाऽप्यतः परा । मातृकाच दयारूपा शश्वद्रक्षणकारिणी
जले स्थले चाऽन्तरिक्षे शिशूनां सद्मगोचरे । प्रधानांशस्वरूपाचदेवीमङ्गलचण्डिका
प्रकृतेर्मुखसम्भूता सर्वमङ्गलदा सदा । सृष्टौ मङ्गलरूपा च संहारे कोपरूपिणी ॥८४
तेन मङ्गलचण्डी सा पण्डितैः परिकीर्तिता । प्रतिमङ्गलवारेषु प्रतिविश्वेषु पूजिता
पुत्रपौत्रधनैश्वर्ययशोमङ्गलदायिनी । परितुष्टा सर्ववाञ्छाप्रदात्री सर्वयोषिताम् ॥८६
रुष्टा क्षणेन संहर्तुं शक्ता विश्वं महेश्वरी । प्रधानांशस्वरूपा सा काली कमललोचना

दुर्गाललाटसम्भूता रणे शुम्भनिशुम्भयोः । दुर्गार्धांशस्वरूपा सा गुणेन तेजसासमा
कोटिसूर्यसमाजुष्टपुष्टजाज्वलविग्रहा । प्रधाना सर्वशक्तीनां बला बलवती परा ॥
सर्वसिद्धप्रदा देवी परमा योगरूपिणी । कृष्णभक्ता कृष्णतुल्या तेजसा विक्रमैर्गुणैः
कृष्णभावनया शश्वत्कृष्णवर्णा सनातनी । संहर्तुं सर्वब्रह्माण्डं शक्ता निःश्वासमात्रतः
रणं दैत्यैःसमंतस्याःक्रीडयालोकशिक्षया । धर्मार्थकाममोक्षांश्च दातुंशक्ताचपूजिता
ब्रह्मादिभिः स्तूयमाना मुनिभिर्मनुभिर्नरैः । प्रधानांशस्वरूपा सा प्रकृतेश्च वसुन्धरा
आधाररूपा सर्वेषां सर्वसस्या प्रकीर्तिता । रत्नाकरा रत्नगर्भा सर्वरत्नाकराश्रया ॥६४
प्रजाभिश्च प्रजेशैश्च पूजिता वन्दितासदा । सर्वोपजीव्यरूपाच सर्वसम्पद्विधायिनी
यया विना जगत्सर्वं निराधारं चराचरम् । प्रकृतेश्चकला या यास्तानिबोधमुनीश्वर!

यस्य यस्य च या पत्नी तत्सर्वं वर्णयामि ते ।
स्वाहादेवी वह्निपत्नी प्रतिविश्वेषु पूजिता ॥ ६७ ॥

यया विना हविर्दानं न ग्रहीतुं सुराःक्षमाः । दक्षिणा यज्ञपत्नीच दीक्षा सर्वत्रपूजिता

यया विना हि विश्वेषु सर्वकर्म हि निष्फलम् ।
स्वधा पितृणां पत्नी च मुनिभिर्मनुभिर्नरैः ॥ ६६ ॥

पूजिता पितृदानंहिनिष्फलंचययाविना । स्वस्तिदेवीवायुपत्नी प्रतिविश्वेषुपूजिता
आदानञ्च प्रदानञ्च निष्फलञ्च यया विना । पुष्टिर्गणपतेः पत्नी पूजिता जगतीतले ॥

यया विना परिक्षीणाः पुमांसो योषितोऽपि च ।
अनन्तपत्नी तुष्टिश्च पूजिता वन्दिता भवेत् ॥ १०२ ॥

ययाविनानसन्तुष्टाःसर्वे लोकाश्च सर्वतः । ईशानपत्नी सम्पत्तिः पूजिताचसुरैर्नरैः
सर्वे लोका दरिद्राश्च विश्वेषु च यया विना । धृतिःकपिलपत्नीच सर्वैःसर्वत्रपूजिता
सर्वे लोकाःअधैर्याश्चजगत्सुचययाविना । सत्यपत्नी सती मुक्तैः पूजिताजगतीप्रिया
ययाविनाभवेल्लोकोबन्धुतारहितः सदा । मोहपत्नीदया साध्वी पूजिताचजगत्प्रिया

सर्वे लोकाश्च सर्वत्र निष्फलाश्च यया विना ।
पुण्यपत्नी प्रतिष्ठा सा पूजिता पुण्यदा सदा ॥ १०७ ॥

यया विना जगत्सर्वं जीवन्मृतसमं मुने। सुकर्मपत्नीसंसिद्धा कीर्तिर्धन्यैश्चपूजिता
यया विना जगत्सर्वं यशोहीनंमृतंयथा। क्रिया तूद्योगपत्नी च पूजिता सर्वसम्मता
यया विना जगत्सर्वं विधिहीनश्च नारद!। अधर्मपत्नी मिथ्यासा सर्वधूर्तैश्च पूजिता

यया विना जगत्सर्वमुच्छिन्नं विधिनिर्मितम्।
सत्ये अदर्शना या च त्रेतायां सूक्ष्मरूपिणी॥ १११॥

अर्धावयवरूपा च द्वापरे चैव सम्वृता। कलौ महाप्रगल्भाच सर्वत्र व्यापिकाबलात्
कपटेन समं भ्रात्रा भ्रमते च गृहेगृहे। शान्तिर्लज्जा च भार्ये द्वे सुशीलस्य च पूजिते
याभ्यांविनाजगत्सर्वमुन्मत्तामिवनारद!। ज्ञानस्यतिस्रोभार्याश्चबुद्धिर्मेधाधृतिस्तथा
याभिर्विना जगत्सर्वं मूढं मत्तसमं सदा। मूर्तिश्च धर्मपत्नी सा कान्तिरूपा मनोहरा
परमात्माचविश्वौघोनिराधारोययाविना। सर्वत्रशोभारूपारूपाचलक्ष्मीर्मूर्तिमतीसती
श्रीरूपामूर्तिरूपाचमान्याधन्याऽतिपूजिता। कालाग्निरुद्रपत्नीचनिद्रासासिद्धयोगिनी
सर्वेलोकाःसमाच्छन्नाययायोगेनरात्रिषु। कालस्यतिस्रोभार्याश्चसन्ध्यारात्रिर्दिनानिच
याभिर्विनाविधाताचसंख्यांकर्तुंन शक्यते। क्षुत्पिपासे लोभभार्ये धन्येमान्ये चपूजिते
याभ्यां व्याप्तंजगत्सर्वंनित्यंचिन्ताऽऽतुरंभवेत्। प्रभाचदाहिकाचैवद्वेभार्येतेजसस्तथा

याभ्यां विना जगत्स्रष्टुं विधातुं च न हीश्वरः।
कालकन्ये मृत्युजरे प्रज्वारस्य प्रियाप्रिये॥ १२१॥
याभ्यां जगत्समुच्छिन्नं विधात्रा निर्मितं विधौ।
निद्रा कन्या च तन्द्रा सा प्रीतिरन्या सुखप्रिये॥ १२२॥

याभ्यांव्याप्तंजगत्सर्वंविधिपुत्रविधेर्विधौ। वैराग्यस्य च द्वेभार्ये श्रद्धाभक्तिश्चपूजिते
याभ्यां शश्वज्जगत्सर्वं यज्जीवन्मुक्तिमन्मुने। अदितिर्देवमाता च सुरभीचगवां प्रसूः
दितिश्चदैत्यजननीकद्रूश्चविनतादनुः। उपयुक्ताःसृष्टिविधावेतास्तु कीर्तिताःकलाः

कला अन्याः सन्ति बह्व्यस्तासु काश्चिन्निबोध मे।
रोहिणी चन्द्रपत्नी च सञ्ज्ञासूर्यस्य कामिनी॥ १२६॥

शतरूपा मनोर्भार्याचीन्द्रस्यच गेहिनी। ताराबृहस्पतेर्भार्यावसिष्ठस्याप्यऽरुन्धती

अहल्या गौतमस्त्रीसाऽप्यनसूयाऽत्रिकामिनी । देवहूतीकर्दमस्य प्रसूतिर्दक्षकामिनी
पितृणांमानसीकन्यामेनकासाऽम्बिकाप्रसूः । लोपामुद्रातथाकुन्तीकुबेरकामिनी तथा
वरुणानी प्रसिद्धाचबलेर्विंध्यावलिस्तथा । कान्ताचदमयन्ती चयशोदादेवकी तथा

गान्धारी द्रौपदी शैव्या सा च सत्यवती प्रिया ।
वृषभानुप्रिया साध्वी राधामाता कुलोद्वहा १३१ ॥

मन्दोदरीचकौसल्यासुभद्राकौरवी तथा । रेवती सत्यभामाचकालिन्दीलक्ष्मणातथा

जाम्बवती नाग्नजितिर्मित्रविन्दा नथाऽपरा ।
लक्ष्मणा रुक्मिणी सीता स्वयं लक्ष्मीः प्रकीर्तिता ॥ १३३ ॥

कालीयोजनगन्धा च व्यासमातामहासती । बाणपुत्रीतथोषाचचित्रलेखा चतत्सखी
प्रभावती भानुमती तथा मायावती सती । रेणुका च भृगोर्मातारामभाताचरोहिणी
एकनन्दा च दुर्गा सा श्रीकृष्णभगिनी सती । बह्व्यःसत्यःकलाश्चैव प्रकृतेरेवभारते

या याश्च ग्रामदेव्यः स्युस्ताः सर्वाः प्रकृतेः कलाः ।
कलांशांशसमुद्भूताः प्रतिविश्वेषु योषितः ॥ १३७ ॥

योषितामवमानेन प्रकृतेश्च पराभवः । ब्राह्मणी पूजिता येन पतिपुत्रवती सती ॥१३८
प्रकृतिः पूजिता तेनवस्त्राऽलङ्कारचन्दनैः । कुमारीचाऽष्टवर्षीया वस्त्राऽलङ्कारचन्दनैः
पूजितायेन विप्रस्य प्रकृतिस्तेन पूजिता । सर्वाः प्रकृतिसम्भूता उत्तमाधममध्यमाः॥

सत्त्वांशाश्चोत्तमा ज्ञेयाः सुशीलाश्च पतिव्रताः ।
मध्यमा रजसश्चांशास्ताश्च भोग्याः प्रकीर्तिताः ॥ १४१ ॥

सुखसम्भोगवश्याश्चस्वकार्यतत्पराःसदा । अधमास्तमसश्चांऽशाअज्ञातकुलसम्भवाः

दुर्मुखाः कुलहा धूर्ताः स्वतन्त्राः कलहप्रियाः ।
पृथिव्यां कुलटा याश्च स्वर्गे चाऽप्सरसां गणाः ॥ १४३ ॥

प्रकृतेस्तमसश्चांशाःपुंश्चल्यः परिकीर्तिताः । एवं निगदितं सर्वं प्रकृते रूपवर्णनम् ॥

ताः सर्वाः पूजिताः पृथ्व्यां पुण्यक्षेत्रे च भारते ।
पूजिता सुरथेनाऽऽदौ दुर्गादुर्गार्तिनाशिनी ॥ १४५ ॥

ततः श्रीरामचन्द्रेण रावणस्य वधार्थिना । तत्पश्चाज्जगतां माता त्रिषु लोकेषुपूजिता
जाताऽऽदौदक्षकन्यायानिहत्यदैत्यदानवान् । ततो देहं परित्यज्य यज्ञे भर्तुश्चनिन्दया
जज्ञे हिमवतःपत्न्यांलेभेपशुपतिंपतिम् । गणेशश्चस्वयंकृष्णः स्कन्दोविष्णुकलोद्भवः
बभूवतुस्तौ तनयौ पश्चात्तस्याश्च नारद !। लक्ष्मीर्मङ्गलभूपेन प्रथमं परिपूजिता १४६
त्रिषु लोकेषु तत्पश्चाद्देवतामुनिमानवैः । सावित्री चाऽश्वपतिना प्रथमं परिपूजिता
तत्पश्चात्त्रिषु लोकेषु देवतामुनिपुङ्गवैः । आदौ सरस्वतीदेवी ब्रह्मणा परिपूजिता ॥
तत्पश्चात्त्रिषु लोकेषु देवतामुनिपुङ्गवैः । प्रथमं पूजिता राधा गोलोके रासमण्डले॥

पौर्णमास्यां कार्त्तिकस्य कृष्णेन परमात्मना।
गोपिकाभिश्चगोपैश्च बालिकाभिश्च बालकैः ॥ १५३ ॥

गवां गणैः सुरभ्या च तत्पश्चादाज्ञया हरेः । तदा ब्रह्मादिभिर्देवैर्मुनिभिः परया मुदा
पुष्पधूपादिभिर्भक्त्या पूजिता वन्दिता सदा । पृथिव्यां प्रथमं देवीसुयज्ञेनैव पूजिता
शङ्करेणोपदिष्टेन पुण्यक्षेत्रे च भारते । त्रिषु लोकेषु तत्पश्चादाज्ञया परमात्मनः ॥

पुष्पधूपादिभिर्भक्त्या पूजिता मुनिभिः सदा ।
कला या याः समुद्भूताः पूजितास्ताश्च भारते ॥ १५७ ॥

पूजिता ग्रामदेवश्चग्रामेच नगरे मुने । एवं ते कथितं सर्वं प्रकृतेश्चरितं शुभम् ॥१५८

यथागमं लक्षणं च किं भूयः श्रोतुमिच्छसि ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे
प्रकृतिचरित्रवर्णनंनामप्रथमोऽध्यायः ॥ १ ॥

---

# द्वितीयोऽध्यायः

## पञ्चप्रकृतितद्भर्तृगणोत्पत्तिवर्णनम्

### नारद उवाच

समासेन श्रुतं सर्वं देवीनां चरितं प्रभो !। विबोधनाय बोधस्य व्यासेनवक्तुमर्हसि ॥
सृष्टेराद्या सृष्टिविधौ कथमाविर्बभूव ह । कथं वा पञ्चधा भूता वद वेदविदाम्वर !॥
भूता ययांशकलया तयात्रिगुणयाभवे । व्यासेनतासांचरितंश्रोतुमिच्छामिसाम्प्रतम्
तासां जन्मानुकथनं पूजाध्यानविधिं बुध !।
स्तोत्रं कवचमैश्वर्यं शौर्यं वर्णय मङ्गलम् ॥ ४ ॥

### श्रीनारायण उवाच

नित्य आत्मा नभो नित्यं कालो नित्यो दिशो यथा ।
विश्वानां गोलकं नित्यं नित्यो गोलोक एव च ॥ ५ ॥
तदेकदेशो वैकुण्ठो नम्रभागानुसारकः । तथैव प्रकृतिर्नित्या ब्रह्मलीला सनातनी ॥६॥
यथाऽग्नौ दाहिका चन्द्रे पद्मे शोभाप्रभारवौ । शश्वद्युक्तानभिन्नासातथाप्रकृतिरात्मनि
विना स्वर्णं स्वर्णकारःकुण्डलंकर्तुमक्षमः । विना मृदा घटं कर्तुं कुलालोहिनहीश्वरः
न हि क्षमस्तथाऽऽत्मा च सृष्टिं स्रष्टुं तया विना ।
सर्वशक्तिस्वरूपा सा यया च शक्तिमान्सदा ॥ ६ ॥
ऐश्वर्यवचनः शश्च क्तिः पराक्रमएव च । तत्स्वरूपातयोर्दात्रीसाशक्तिः परिकीर्तिता
ज्ञानं समृद्धिसम्पत्तिर्यशश्चैव बलम्भगः । तेन शक्तिर्भगवती भगरूपा च सा सदा॥
तया युक्तः सदाऽऽत्मा च भगवांस्तेन कथ्यते ।
स च स्वेच्छामयो देवः साकारश्च निराकृतिः ॥ १२ ॥
तेजोरूपं निराकारं ध्यायन्ते योगिनःसदा । वदन्ति च परं ब्रह्म परमानन्दमीश्वरम्
अदृश्यं सर्वद्रष्टारं सर्वज्ञं सर्वकारणम् । सर्वदं सर्वरूपं तं वैष्णवास्तन्न मन्वते ॥१४

वदन्तिचैव ते कस्य तेजस्तेजस्विनाविना । तेजोमण्डलमध्यस्थंब्रह्मतेजस्विनंपरम्
स्वेच्छामयं सर्वरूपं सर्वकारणकारणम् । अतीव सुन्दरं रूपं बिभ्रतं सुमनोहरम् ॥
किशोरवयसं शान्तं सर्वकान्तम्परात्परम् । नवीननीरदाभासधामैकं श्यामविग्रहम् ॥
शरन्मध्याह्नपद्मौघशोभामोचनलोचनम् । मुक्ताच्छविविनिन्द्यैकदन्तपङ्क्तिमनोरमम्
मयूरपिच्छच्चूडञ्च मालतीमाल्यमण्डितम् । सुनसं सस्मितं कान्तंभक्तानुग्रहकारणम्
ज्वलदग्निविशुद्धैकपीतांशुकसुशोभितम् । द्विभुजं मुरलीहस्तं रत्नभूषणभूषितम् ॥
सर्वाधारञ्च सर्वेशं सर्वशक्तियुतं विभुम् । सर्वैश्वर्यप्रदं सर्वं स्वतन्त्रं सर्वमङ्गलम् ॥
परिपूर्णतमंसिद्धं सिद्धेशं सिद्धिकारकम् । ध्यायन्ते वैष्णवाःशश्वद्देवदेवं सनातनम्
जन्ममृत्युजराव्याधिशोकभीतिहरं परम् । ब्रह्मणो वयसा यस्य निमेष उपचर्यते ॥
सचाऽऽत्मा स परं ब्रह्मकृष्णइत्यभिधीयते । कृषिस्तद्भक्तिवचनोनश्चतद्दास्यवाचकः
भक्तिदास्यप्रदाता यः स च कृष्णः प्रकीर्तितः । कृषिश्चसर्ववचनो नकारोबीजमेवच
स कृष्णःसर्वस्रष्टाऽऽदौसिसृक्षन्नेकएवच । सृष्ट्यन्मुखस्तदंशेन कालेन प्रेरितःप्रभुः

स्वेच्छामयः स्वेच्छया च द्विधारूपो बभूव ह ।
स्त्रीरूपो वामभागांशो दक्षिणांशः पुमान्स्मृतः ॥ २७ ॥

तां ददर्श महाकामीकामाधारां सनातनः । अतीव कमनीयाञ्च चारुपङ्कजसन्निभाम्

चन्द्रबिम्बविनिन्द्यैकनितम्बयुगलाम्पराम् ।
सुचारुकदलीस्तम्भनिन्दितश्रोणिसुन्दरीम् ॥ २६ ॥

श्रीयुक्तश्रीफलाकारस्तनयुग्ममनोरमाम् । पुष्पजुष्टांसुवलितांमध्यक्षीणांमनोहराम्
अतीवसुन्दरींशान्तांसस्मितांवक्रलोचनाम् । वह्निशुद्धांशुकाधानांरत्नभूषणभूषिताम्
शश्वच्चक्षुश्चकोराभ्यांपिबन्तींसततंमुदा । कृष्णस्यमुखचन्द्रंचचन्द्रकोटिविनिन्दितम्
कस्तूरीबिन्दुना सार्धमधश्चन्दनबिन्दुना । समंसिन्दूरबिन्दुञ्च भालमध्येचबिभ्रतीम्
वक्रिमं कबरीभारं मालतीमाल्यभूषितम् । रत्नेन्द्रसारहारञ्च दधतीं कान्तकामुकीम्
कोटिचन्द्रप्रभामृष्टपुष्टशोभासमन्विताम् । गमनेन राजहंसगजगर्वविनाशिनीम् ॥
दृष्ट्वा तां तु तयासार्धंरासेशोरासमण्डले । रसोल्लासेषुरसिको रासक्रीडाञ्चकार ह

नानाप्रकारश्शृङ्गारं शृङ्गारो मूर्तिमानिव । चकार सुखसम्भोगं यावद्वै ब्रह्मणोदिनम् ॥

ततः स च परिश्रान्तस्तस्या योनौ जगत्पिता ।

चकार वीर्याधानञ्च नित्यानन्दे शुभक्षणे ॥ ३८ ॥

गात्रतो योषितस्तस्याःसुरतान्तेचसुव्रत !। निःससारश्रमजलं श्रान्तायास्तेजसाहरेः

महाक्रमणक्लिष्टाया निःश्वासश्च बभूव ह । तदा वव्रे श्रमजलंतत्सर्वं विश्वगोलकम्

स च निःश्वासवायुश्चसर्वाधारो बभूव ह ।

निःश्वासवायुःसर्वेषां जीविनां च भवेषु च ॥ ४१ ॥

बभूव मूर्तिमद्वायोर्वामाङ्गात्प्राणवल्लभा ।

तत्पत्नी सा च तत्पुत्राःप्राणाः पञ्च च जीविनाम् ॥ ४२ ॥

प्राणोऽपानः समानश्चोदानव्यानौ च वायवः । बभूवुरेव तत्पुत्रा अधःप्राणाश्चपञ्च च

धर्मतोयाधिदेवश्च बभूव वरुणो महान् । तद्वामाङ्गाच्च तत्पत्नी वरुणानी बभूव सा

अथ सा कृष्णचिच्छक्तिःकृष्णगर्भंदधार ह । शतमन्वन्तरंयावज्ज्वलन्तीब्रह्मतेजसा

कृष्णप्राणाधिदेवी सा कृष्णप्राणाऽधिकप्रिया ।

कृष्णस्य सङ्गिनी शश्वत्कृष्णवक्षःस्थलस्थिता ॥ ४६ ॥

शतमन्वन्तरान्तेचकालेऽतीतेतु सुन्दरी । सुषावडिम्भंस्वर्णाभं विश्वाधारालयंपरम्

दृष्ट्वा डिम्भं च सा देवी हृदयेन व्यदूयत । उत्ससर्ज च कोपेन ब्रह्माण्डगोलके जले

दृष्ट्वा कृष्णश्च तत्त्यागं हाहाकारं चकार ह । शशापदेवीदेवेशस्तत्क्षणं च यथोचितम्

यतोऽपत्यं त्वया त्यक्तं कोपशीले! च निष्ठुरे !।

भव त्वमनपत्याऽपि चाऽद्यप्रभृति निश्चितम् ॥ ५० ॥

या यास्त्वदंशरूपाश्च भविष्यन्ति सुरस्त्रियः ।

अनपत्याश्च ताः सर्वास्त्वत्समा नित्ययौवनाः ॥ ५१ ॥

एतस्मिन्नन्तरे देवीजिह्वाग्रात्सहसा ततः । आविर्बभूव कन्यैका शुक्लवर्णा मनोहरा ॥

श्वेतवस्त्रपरीधाना वीणापुस्तकधारिणी । रत्नभूषणभूषाढ्या सर्वशास्त्राधिदेवता ॥

अथ कालान्तरे सा च द्विधारूपा बभूव ह । वामार्धाङ्गाच्चकमलादक्षिणार्धाच्चराधिका

एतस्मिन्नन्तरे कृष्णो द्विधारूपो बभूव सः । दक्षिणार्धश्च द्विभुजोवामार्धश्चचतुर्भुजः
उवाच वाणीं कृष्णस्तां त्वमस्यकामिनीभव । अत्रैवमानिनीराधातवभद्रंभविष्यति
एवं लक्ष्मीं च प्रददौ तुष्टो नारायणाय च । स जगामचवैकुण्ठंताभ्यांसार्धंजगत्पतिः
अनपत्ये च ते द्वे च जाते राधांशसम्भवे । भूता नारायणाङ्गाच्च पार्षदाश्च चतुर्भुजाः
तेजसा वयसा रूपगुणाभ्यां च समा हरेः । बभूवुःकमलाङ्गाच्चदासीकोट्यश्चतत्समाः
अथ गोलोकनाथस्यलोम्ना विवरतोमुने !। भूताश्चासंख्यगोपाश्चवयसातेजसासमाः
रूपेण च गुणेनैव बलेन विक्रमेण च । प्राणतुल्यप्रियाः सर्वे बभूवुः पार्षदा विभोः

राधाऽङ्गलोमकूपेभ्यो बभूवुर्गोपकन्यकाः ।
राधातुल्याश्चताः सर्वाराधादास्यः प्रियम्वदाः ॥ ६२ ॥

रत्नभूषणभूषाढ्याः शश्वत्सुस्थिरयौवनाः । अनपत्याश्चताःसर्वाःपुंसः शापेनसन्ततम्
एतस्मिन्नन्तरे विप्र! सहसा कृष्णदेवता । आविर्बभूवदुर्गा सा विष्णुमायासनातनी

देवी नारायणीशाना सर्वशक्तिस्वरूपिणी ।
बुद्ध्यधिष्ठात्री देवी सा कृष्णस्य परमात्मनः ॥ ६५ ॥

देवीनां बीजरूपा च मूलप्रकृतिरीश्वरी । परिपूर्णतमा तेजःस्वरूपा त्रिगुणात्मिका
तप्तकाञ्चनवर्णाभा कोटिसूर्यसमप्रभा । ईषद्धास्यप्रसन्नास्या सहस्रभुजसंयुता ॥ ६७॥
नानाशस्त्रास्त्रनिकरं बिभ्रती सा त्रिलोचना । वह्निशुद्धांशुकाधाना रत्नभूषणभूषिता

यस्याश्चांऽशांशकलया बभूवुः सर्वयोषितः ।
सर्वे विश्वस्थिता लोका मोहिताः स्युश्च मायया ॥६९ ॥
सर्वैश्वर्यप्रदात्री च कामिनां गृहवासिनाम् ।
कृष्णभक्तिप्रदा या च वैष्णवानां च वैष्णवी ॥ ७० ॥

मुमुक्षूणांमोक्षदात्रीसुखिनां सुखदायिनी । स्वर्गेषुस्वर्गलक्ष्मीश्च गृहलक्ष्मीर्गृहेषु च
तपस्विषुतपस्याच श्रीरूपा तु नृपेषु च । या वह्नौ दाहिकारूपा प्रभारूपाच भास्करे
शोभारूपा च चन्द्रे च सा पद्मेषु चशोभना । सर्वशक्तिस्वरूपायाश्रीकृष्णेपरमात्मनि
ययाचशक्तिमानात्माययाचशक्तिमज्जगत् । ययाविनाजगत्सर्वंजीवन्मृतमिवस्थितम्

या च संसारवृक्षस्य बीजरूपा सनातनी । स्थितिरूपाबुद्धिरूपा फलरूपा च नारद!

क्षुत्पिपासादयारूपा निद्रा तन्द्रा क्षमा मतिः ।

शान्तिलज्जातुष्टिपुष्टिभ्रान्तिकान्त्यादिरूपिणी ॥ ७६ ॥

साचसंस्तूय सर्वेशं तत्पुरः समुवासह । रत्नसिंहासनं तस्यै प्रददौ राधिकेश्वरः ॥

एतस्मिन्नन्तरे तत्र सस्त्रीकश्चचतुर्मुखः । पद्मनाभेर्नाभिपद्मान्निस्ससार महामुने !॥७८

कमण्डलुधरः श्रीमांस्तपस्वी ज्ञानिनां वरः । चतुर्मुखस्तं तुष्टाव प्रज्वलन्ब्रह्मतेजसा

सा तदा सुन्दरी सृष्टा शतचन्द्रसमप्रभा । वह्निशुद्धांशुकाधाना रत्नभूषणभूषणा ॥

रत्नसिंहासने रम्ये संस्तूय सर्वकारणम् । उवास स्वामिना सार्धं कृष्णस्यपुरतोमुदा

एतस्मिन्नन्तरे कृष्णो द्विधारूपो बभूव सः ।

वामाऽर्धाङ्गो महादेवो दक्षिणे गोपिकापतिः ॥ ८२ ॥

शुद्धस्फटिकसङ्काशः शतकोटिरविप्रभः । त्रिशूलपट्टिशधरो व्याघ्रचर्माम्बरो हरः ॥

तप्तकाञ्चनवर्णाभो जटाभारधरः परः । भस्मभूषितगात्रश्च सस्मितश्चन्द्रशेखरः ॥

दिगम्बरो नीलकण्ठः सर्पभूषणभूषितः । बिभ्रद्दक्षिणहस्तेनरत्नमालां सुसंस्कृताम्

प्रजपन्पञ्चवक्त्रेण ब्रह्मज्योतिः सनातनम् । सत्यस्वरूपंश्रीकृष्णं परमात्मानमीश्वरम्

कारणं कारणानाञ्च सर्वमङ्गलमङ्गलम् । जन्ममृत्युजराव्याधिशोकभीतिहरं परम्

संस्तूय मृत्योर्मृत्युं तं यतो मृत्युञ्जयाभिधः । रत्नसिंहासने रम्ये समुवासहरे पुरः

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यांसंहितायां नवमस्कन्धे

पञ्चप्रकृतितद्भर्तृगणोत्पत्तिवर्णनंनाम द्वितीयोऽध्यायः ॥ २ ॥

# तृतीयोऽध्यायः

## ब्रह्मविष्णुमहेश्वरादिदेवतोत्पत्तिवर्णनम्

**श्रीनारायण उवाच**

अथ डिम्भो जले तिष्ठन्यावद्वैब्रह्मणो वयः । ततः सकालेसहसा द्विधाभूतो बभूव ह
तन्मध्ये शिशुरेकश्च शतकोटिरविप्रभः । क्षणं रोरूयमाणश्च स्तनान्धःपीडितःक्षुधा
पित्रामात्रापरित्यक्तोजलमध्येनिराश्रयः । ब्रह्माण्डासङ्ख्यनाथोयोददर्शोर्ध्वमनाथवत्

स्थूलात्स्थूलतमः सोऽपि नाम्ना देवो महाविराट् ।
परमाणुर्यथा सूक्ष्मात्परः स्थूलात्तथाऽप्यसौ ॥ ४ ॥

तेजसाषोडशांशोऽयं कृष्णस्यपरमात्मनः । आधारःसर्वविश्वानांमहाविष्णुश्चप्राकृतः
तेजसालोमकूपेषुविश्वानिनिखिलानिच । अस्याऽपितेषांसंख्याचकृष्णोवक्तुंनहिक्षमः

सङ्ख्या चेद्रजसामस्ति विश्वानां न कदाचन ।
ब्रह्मविष्णुशिवादीनां तथा सङ्ख्या न विद्यते ॥ ७ ॥
प्रतिविश्वेषु सन्त्येवं ब्रह्मविष्णुशिवादयः ।
पातालाद् ब्रह्मलोकान्तं ब्रह्माण्डं परिकीर्तितम् ॥ ८ ॥

ततऊर्ध्वं च वैकुण्ठोब्रह्माण्डाद्बहिरेवसः । ततऊर्ध्वंचगोलोकःपञ्चाशत्कोटियोजनः
नित्यःसत्यःस्वरूपश्चयथाकृष्णस्तथाऽप्ययम् । सप्तद्वीपमितापृथ्वीसप्तसागरसंयुता
ऊनपञ्चाशदुपद्वीपाऽसङ्ख्यशैलवनान्विता । ऊर्ध्वंसप्तस्वर्गलोकाब्रह्मलोकसमन्विताः
पातालानि चसप्ताऽधश्चैवं ब्रह्माण्डमेव च । ऊर्ध्वं धरायाभूर्लोकोभुवर्लोकस्ततःपरम्
ततः परश्च स्वर्लोकोजनलोकस्तथा परः । ततः परस्तपोलोकस्सत्यलोकस्ततः परः
ततः परं ब्रह्मलोकस्तप्तकाञ्चनसन्निभः । एवं सर्वं कृत्रिमं च बाह्याभ्यन्तरमेव च ॥
तद्विनाशे विनाशश्च सर्वेषामेव नारद !। जलबुद्बुदवत्सर्वं विश्वसङ्घमनित्यकम् ॥
नित्यौगोलोकवैकुण्ठौप्रोक्तौशश्वदकृत्रिमौ । प्रत्येकं लोमकूपेषुब्रह्माण्डंपरिनिश्चितम्

एषां सङ्ख्यां न जानाति कृष्णोऽन्यस्याऽपि का कथा ।
प्रत्येकं प्रतिब्रह्माण्डं ब्रह्मविष्णुशिवादयः ॥१७॥

तिस्रःकोट्यःसुराणांचसङ्ख्यासर्वत्र पुत्रक । दिगीशाश्चैवदिक्पालानक्षत्राणिग्रहादयः
भुवि वर्णाश्च चत्वारोऽप्यधो नागाश्चराचराः । अथ कालेऽत्रसविराड्ढ्र्ध्वंदृष्ट्वापुनःपुनः
डिम्भान्तरे च शून्यं च नद्वितीयश्चकिञ्चन । चिन्तामवापक्षुद्युक्तो रुरोद च पुनः पुनः
ज्ञानं प्राप्य तदा दध्यौ कृष्णं परमपूरुषम् । ततो ददर्श तत्रैव ब्रह्मज्योतिः सनातनम्
नवीनजलदश्यामं द्विभुजं पीतवाससम् । सस्मितं मुरलीहस्तं भक्तानुग्रहकातरम् ॥
जहासबालकस्तुष्टोदृष्ट्वाजनकमीश्वरम् । वरं तदा ददौ तस्मै वरेशःसमयोचितम् ॥
मत्समोज्ञानयुक्तश्चक्षुत्पिपासादिवर्जितः । ब्रह्माण्डासङ्ख्यनिलयोभववत्स! लयावधि
निष्कामो निर्भयश्चैवसर्वेषां वरदो भव । जरामृत्युरोगशोकपीडादिवर्जितो भव ॥
इत्युक्त्वा तस्य कर्णे स महामन्त्रं षडक्षरम् । त्रिः कृत्वश्च प्रजजाप वेदाङ्गप्रवरं परम्
प्रणवादि चतुर्थ्यन्तं कृष्ण इत्यक्षरद्वयम् । वह्निजायान्तमिष्टं च सर्वविघ्नहरं परम्
मन्त्रं दत्त्वा तदाहारं कल्पयामास वै विभुः । श्रूयतां तद्ब्रह्मपुत्र! निबोधकथयामिते
प्रतिविश्वंयन्नैवेद्यंददातिवैष्णवोजनः । तत्षोडशांशोविषयिणोविष्णोःपञ्चदशास्यवै
निर्गुणस्याऽऽत्मनश्चैवपरिपूर्णतमस्य च । नैवेद्येचैवकृष्णस्य नहिकिञ्चित्प्रयोजनम्
यद्यद्ददाति नैवेद्यं तस्मै देवाय यो जनः । स च खादतितत्सर्वंलक्ष्मीनाथोविराट्तथा
तं च मन्त्रवरं दत्त्वा तमुवाच पुनर्विभुः । वरमन्यं किमिष्टं ते तन्मे ब्रूहि ददामि च
कृष्णस्य वचनं श्रुत्वातमुवाचविराड् विभुः । कृष्णंतंबालकस्तावद्वचनंसमयोचितम्

बालक उवाच

वरो मे त्वत्पदाम्भोजे भक्तिर्भवतु निश्चला । सततं यावदायुर्मे क्षणं वा सुचिरञ्चवा
त्वद्भक्तियुक्तलोकेऽस्मिञ्जीवन्मुक्तश्च सन्ततम् ।
त्वद्भक्तिहीनो मूर्खश्च जीवन्नपि मृतो हि सः ॥ ३५ ॥

किं तज्जपेन तपसा यज्ञेन पूजनेन च । व्रतेन चोपवासेन पुण्येन तीर्थसेवया ॥ ३६ ॥
कृष्णभक्तिविहीनस्यमूर्खस्यजीवनंवृथा । येनाऽऽत्मना जीवितश्च तमेव न हिमन्यते

यावदात्मा शरीरेऽस्ति तावत्स शक्तिसंयुतः ।

पश्चाद्यान्ति गते तस्मिन्स्वनन्त्रा सर्वशक्तयः ॥ ३८ ॥

स च त्वञ्च महाभाग सर्वात्मप्रकृते परः । स्वेच्छामयश्चसर्वाद्योब्रह्मज्योतिःसनातनः

इत्युक्त्वा बालकस्तत्रविरराम च नारद !। उवाचकृष्णःप्रत्युक्तिमधुरांश्रुतिसुन्दरीम्

श्रीकृष्ण उवाच

सुचिरं सुस्थिरं तिष्ठ यथाऽहं त्वं तथा भव ।

ब्रह्मणोऽसंख्यपाते च पातस्ते न भविष्यति ॥ ४१ ॥

अंशेन प्रतिब्रह्माण्डे त्वञ्चक्षुद्रविराड्भव । त्वन्नाभिपद्माद्ब्रह्माचविश्वस्रष्टाभविष्यति

ललाटे ब्रह्मणश्चैव रुद्राश्चैकादशैव ते । शिवांशेन भविष्यन्ति सृष्टिसंहरणाय वै ॥

कालाग्निरुद्रस्तेष्वेको विश्वसंहारकारकः । पाता विष्णुश्चविषयीरुद्रांशेनभविष्यति

मद्भक्तियुक्तः सततं भविष्यसि वरेण मे । ध्यानेनकमनीयंमांनित्यंद्रक्ष्यसिनिश्चितम्

मातरं कमनीयां च मम वक्षःस्थलस्थिताम् ।

यामि लोकं तिष्ठ वत्सेत्युक्त्वा सोऽन्तरधीयत ॥ ४६ ॥

गत्वा स्वलोकं ब्रह्माणं शङ्करं समुवाच ह । स्रष्टारं स्रष्टुमीशं च संहर्तुं चैवतत्क्षणम्

श्रीभगवानुवाच

सृष्टिं स्रष्टुं गच्छ वत्स! नाभिपद्मोद्भवोभव । महाविराड्लोमकूपेक्षुद्रस्य चविधेश्शृणु

गच्छ वत्स महादेव! ब्रह्मभालोद्भवो भव । अंशेन च महाभाग स्वयं च सुचिरं तप

इत्युक्त्वा जगतां नाथो विरराम विधेःसुत !। जगाम ब्रह्मा तंनत्वाशिवश्चशिवदायकः

महाविराड्लोमकूपे ब्रह्माण्डगोलके जले । बभूव च विराड् क्षुद्रोविराडंशेनसाम्प्रतम्

श्यामो युवा पीतवासाः शयानो जलतल्पके ।

ईषद्धास्यः प्रसन्नास्यो विश्वव्यापी जनार्दनः ॥ ५२ ॥

तन्नाभिकमले ब्रह्मा बभूव कमलोद्भवः । सम्भूय पद्मदण्डे च बभ्राम युगलक्षकम् ॥

नाऽन्तं जगाम दण्डस्यपद्मनालस्य पद्मजः । नाभिजस्यचपद्मस्यचिन्तामापपितातव

स्वस्थानं पुनरागम्य दध्यौ कृष्णपदाम्बुजम् । ततो ददर्श क्षुद्रं तंध्यानेनदिव्यचक्षुषा

शयानं जलतल्पे च ब्रह्माण्डगोलकाप्लुते। यल्लोमकूपे ब्रह्माण्डं तं च तत्परमीश्वरम्
श्रीकृष्णंचाऽपि गोलोकं गोपगोपीसमन्वितम्। तंसंस्तूयवरंप्रापततःसृष्टिंचकारसः
बभूवुर्ब्रह्मणः पुत्रा मानसाः सनकादयः। ततोरुद्रकलाश्चाऽपि शिवस्यैकादश स्मृताः
बभूव पाता विष्णुश्च क्षुद्रस्य वामपार्श्वतः। चतुर्भुजश्चभगवान्श्वेतद्वीपेसचाऽवसत्

क्षुद्रस्य नाभिपद्मे च ब्रह्मा विश्वं ससर्ज ह।
स्वर्गं मर्त्यं च पातालं त्रिलोकीं सचराचरम्॥ ६०॥

एवं सर्वं लोमकूपे विश्वं प्रत्येकमेव च। प्रतिविश्वे क्षुद्रविराड् ब्रह्मविष्णुशिवादयः
इत्येवं कथितंब्रह्मन्कृष्णसङ्कीर्तनंशुभम्। सुखदंमोक्षदं ब्रह्मन्! किंभूयःश्रोतुमिच्छसि

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे
ब्रह्मविष्णुमहेश्वरादिदेवतोत्पत्तिवर्णनंनाम तृतीयोऽध्यायः॥ ३॥

---

## चतुर्थोऽध्यायः

### सरस्वतीस्तोत्रपूजाकवचादिवर्णनम्

नारद उवाच

श्रुतं सर्वं मया पूर्वं त्वत्प्रसादात्सुधोपमम्। अधुना प्रकृतीनां च व्यस्तंवर्णनपूजनम्
कस्याः पूजा कृता केन कथं मर्त्ये प्रचारिता। केनवापूजिताकावाकेनकावास्तुताप्रभो

तासां स्तोत्रं च ध्यानं च प्रभावं चरितं शुभम्।
काभिः केभ्यो वरो दत्तस्तन्मे व्याख्यातुमर्हसि॥ ३॥

श्रीनारायण उवाच

गणेशजननी दुर्गाराधालक्ष्मीःसरस्वती। सावित्रीचसृष्टिविधौप्रकृतिःपञ्चधास्मृता
आसां पूजा प्रसिद्धा च प्रभावः परमाद्भुतः। सुधोपमं च चरितं सर्वमङ्गलकारणम्
प्रकृत्यंशाः कला याश्च तासांचचरितंशुभम्। सर्वंवक्ष्यामितेब्रह्मन्सावधानोनिशामय

काली वसुन्धरा गङ्गाषष्ठीमङ्गलचण्डिका। तुलसीमनसानिद्रास्वधास्वाहाचदक्षिणा
संक्षिप्तमासां चरितं पुण्यदं श्रुतिसुन्दरम्। जीवकर्मविपाकश्चतच्चवक्ष्यामिसुन्दरम्
दुर्गायाश्चैव राधाया विस्तीर्णं चरितं महत्। तद्बत्पश्चात्प्रवक्ष्यामिसंक्षेपक्रमतःशृणु
आदौसरस्वतीपूजाश्रीकृष्णेनविनिर्मिता। यत्प्रसादान्मुनिश्रेष्ठ! मूर्खोभवतिपण्डितः
आविर्भूता यथा देवी वक्त्रतः कृष्णयोषितः। इयेष कृष्णंकामेनकामुकीकामरूपिणी
स च विज्ञाय तद्भावं सर्वज्ञः सर्वमातरम्। तामुवाच हितं सत्यं परिणामे सुखावहम्

श्रीकृष्ण उवाच

भज नारायणं साध्वि! मदंशं च चतुर्भुजम्। युवानं सुन्दरं सर्वगुणयुक्तं च मत्समम्

कामज्ञं कामिनीनां च तासां च कामपूरकम्।
कोटिकन्दर्पलावण्यलीलालङ्कृतमीश्वरम्॥ १४॥
कान्ते! कान्तं च मां कृत्वा यदि स्थातुमिहेच्छसि।
त्वत्तो बलवती राधा न भद्रं ते भविष्यति॥ १५॥

योतस्माद्बलवान्वाणि! ततोऽन्यंरक्षितुंक्षमः। कथंपरान्साधयतियदिस्वयमनीश्वरः
सर्वेशः सर्वशास्ताऽहं राधां बाधितुमक्षमः। तेजसा मत्समा सा च रूपेणचगुणेनच

प्राणाधिष्ठातृदेवी सा प्राणांस्त्यक्तुं च कः क्षमः।
प्राणतोऽपि प्रियःपुत्रः केषां वाऽस्ति च कश्चन॥१८॥

त्वं भद्रे! गच्छ वैकुण्ठं तव भद्रंभविष्यति। पतिंतमीश्वरंकृत्वामोदस्वसुचिरंसुखम्
लोभमोहकामक्रोधमानहिंसाविवर्जिता। तेजसा त्वत्समा लक्ष्मी रूपेण चगुणेन च
तया सार्धं तव प्रीत्या शश्वत्कालःप्रयास्यति। गौरवंचहरिस्तुल्यंकरिष्यतिद्वयोरपि
प्रतिविश्वेषुतां पूजामहतींगौरवान्विताम्। माघस्यशुक्लपञ्चम्यांविद्यारम्भेचसुन्दरि!
मानवा मनवो देवा मुनीन्द्राश्च मुमुक्षवः। वसवो योगिनः सिद्धानागागन्धर्वराक्षसाः
मद्वरेण करिष्यन्ति कल्पेकल्पे लयावधि। भक्तियुक्ताश्च दत्त्वावैचोपचाराणि षोडश
कण्वशाखोक्तविधिना ध्यानेनस्तवनेन च। जितेन्द्रियाःसंयताश्चघटेचपुस्तकेऽपिच
कृत्वा सुवर्णगुटिकां गन्धचन्दनचर्चिताम्। कवचं ते ग्रहीष्यन्ति कण्ठेवादक्षिणेभुजे

पठिष्यन्ति च विद्वांसःपूजाकालेचपूजिते। इत्युक्त्वापूजयामासतांदेवींसर्वपूजिताम्
ततस्तत्पूजनं चक्रुर्ब्रह्मविष्णुशिवादयः। अनन्तश्चापि धर्मश्च मुनीन्द्राः सनकादयः॥
सर्वे देवाश्च मुनयो नृपाश्च मान वादयः। बभूव पूजिता नित्या सर्वलोकैःसरस्वती

नारद उवाच

पूजाविधानं कवचं ध्यानं चाऽपि निरन्तरम्। पूजोपयुक्तं नैवेद्यंपुष्पं चचन्दनादिकम्
वद वेदविदांश्रेष्ठ! श्रोतुं कौतूहलं मम। वर्त्तते हृदये शश्वत्किमिदं श्रुतिसुन्दरम्॥

श्रीनारायण उवाच

शृणु नारद! वक्ष्यामि कण्वशाखोक्तपद्धतिम्।
जगन्मातुः सरस्वत्याः पूजाविधिसमन्विताम्॥ ३२॥

माघस्य शुक्लपञ्चम्यां विद्यारम्भेदिनेऽपिच। पूर्वेऽह्निसमयंकृत्वातत्राऽह्निसंयतःशुचिः

स्नात्वा नित्यक्रियाः कृत्वा घटं संस्थाप्य भक्तितः।
स्वशाखोक्तविधानेन तान्त्रिकेणाऽथवा पुनः॥ ३४॥
गणेशम्पूर्वमभ्यर्च्य ततोऽभीष्टां प्रपूजयेत्।
ध्यानेन वक्ष्यमाणेन ध्यात्वाऽऽवाह्य घटे ध्रुवम्॥ ३५॥

ध्यात्वा पुनः षोडशोपचारेण पूजयेद्व्रती। पूजोपयुक्तनैवेद्यं यच्च वेदे निरूपितम्॥

वक्ष्यामि सौम्य! तत्किञ्चिद्यथाधीतं यथागमम्।
नवनीतं दधि क्षीरं लाजांश्च तिललड्डुकम्॥ ३७॥

इक्षुमिक्षुरसं शुक्लवर्णं पक्वगुडं मधु। स्वस्तिकं शर्करा शुक्लधान्यस्याक्षतमक्षतम्॥
अस्विन्नशुक्लधान्यस्य पृथुकं शुक्लमोदकम्। घृतसैन्धवसंयुक्तं हविष्यान्नं यथोदितम्
यवगोधूमचूर्णानांपिष्टकंघृतसंयुतम्। पिष्टकंस्वस्तिकस्याऽपिपक्वरम्भाफलस्यच
परमान्नं च सघृतं मिष्टान्नं च सुधोपमम्। नारिकेलं तदुदकं कसेरुं मूलमार्द्रकम्॥
पक्वरम्भाफलं चारु श्रीफलं बदरीफलम्। कालदेशोद्भवं चारुफलं शुक्लं च संस्कृतम्
सुगन्धशुक्लपुष्पं च सुगन्धं शुक्लचन्दनम्। नवीनं शुक्लवस्त्रं च शङ्खश्च सुन्दरं मुने!॥
माल्यं च शुक्लपुष्पाणां शुक्लहारं चभूषणम्। यादृशं चश्रुतौध्यानंप्रशस्यंश्रुतिसुन्दरम्

तन्निबोध महाभाग! भ्रमभञ्जनकारणम् । सरस्वतीं शुक्लवर्णांसस्मितांसुमनोहराम्
कोटिचन्द्रप्रभामुष्टपुष्टश्रीयुक्तविग्रहाम् ।
वह्निशुद्धांशुकाधानां वीणापुस्तकधारिणीम् ॥ ४६ ॥
रत्नसारेन्द्रनिर्माणनवभूषणभूषिताम् । सुपूजितां सुरगणैर्ब्रह्मविष्णुशिवादिभिः ॥
वन्दे भक्त्या वन्दितां च मुनीन्द्रमनुमानवैः । एवं ध्यात्वाचमूलेनसर्वंदत्त्वाविचक्षणः
संस्तूय कवचं धृत्वा प्रणमेद्दण्डवद्भुवि । येषां चेयमिष्टदेवी तेषां नित्या क्रियामुने
विद्यारम्भेच वर्षान्तेसर्वेषां पञ्चमीदिने । सर्वोपयुक्तो मूलश्च वैदिकाष्टाक्षरः परः ॥
येषां येनोपदेशो वा तेषां स मूल एव च । सरस्वतीचतुर्थ्यन्तं वह्निजायान्तमेव च॥
लक्ष्मीमायादिकं चैव मन्त्रोऽयंकल्पपादपः । पुरानारायणश्चेमंवाल्मीकायकृपानिधिः
प्रददौ जाह्नवीतीरे पुण्यक्षेत्रे च भारते । भृगुर्ददौ च शुक्राय पुष्करे सूर्यपर्वणि ॥ ५३
चन्द्रपर्वणि मारीचो ददौ वाक्पतये मुदा । भृगोश्चैव ददौ तुष्टो ब्रह्मा बदरिकाश्रमे
आस्तिकस्य जरत्कारुर्ददौक्षीरोदसन्निधौ । विभाण्डकोददौमेरावृष्यशृङ्गाय धीमते
शिवः कणादमुनये गौतमाय ददौ मुदा । सूर्यश्च याज्ञवल्क्याय तथा कात्यायनायच
शेषः पाणिनये चैव भारद्वाजाय धीमते । ददौ शाकटायनाय सुतले बलिसंसदि ॥
चतुर्लक्षजपेनैव मन्त्रसिद्धोभवेन्नृणाम् । यदिस्यान्मन्त्रसिद्धोहिबृहस्पतिसमोभवेत्
कवचं शृणु विप्रेन्द्र ! यद्दत्तं ब्रह्मणा पुरा । विश्वस्रष्ट्रा विश्वजयं भृगवे गन्धमादने ॥

भृगुरुवाच

ब्रह्मन्ब्रह्मविदां श्रेष्ठ ब्रह्मज्ञानविशारदः ! । सर्वज्ञ ! सर्वजनक ! सर्वेश ! सर्वपूजित !
सरस्वत्याश्च कवचं ब्रूहि विश्वजयं प्रभो ! । अयातयामं मन्त्राणां समूहसंयुतं परम्

ब्रह्मोवाच

शृणुवत्स प्रवक्ष्यामिकवचं सर्वकामदम् । श्रुतिसारं श्रुतिसुखं श्रुत्युक्तंश्रुतिपूजितम्
उक्तं कृष्णेन गोलोके मह्यं वृन्दावने वने । रासेश्वरेण विभुना रासे वै रासमण्डले ॥
अतीव गोपनीयंच कल्पवृक्षसमं परम् । अश्रुताद्भुतमन्त्राणां समूहैश्च समन्वितम् ॥
यद्धृत्वाभगवाञ्छुक्रः सर्वदैत्येषु पूजितः । यद्धृत्वापठनाद्ब्रह्मन्बुद्धिमांश्चबृहस्पतिः

पठनाद्धारणाद्वाग्मीकवीन्द्रोवाल्मिकोमुनिः। स्वायम्भुवोमनुश्चैवयद्धृत्वासर्वपूजितः

कणादो गौतमः कण्वः पाणिनिः शाकटायनः ।

ग्रन्थं चकार यद्धृत्वा दक्षः कात्यायनः स्वयम् ॥ ६७ ॥

धृत्वा वेदविभागञ्च पुराणान्यखिलानिच । चकारलीलामात्रेणकृष्णद्वैपायनःस्वयम्

शातातपश्च सम्वर्तो वशिष्ठश्च पराशरः । यद्धृत्वापठनाद् ग्रन्थं याज्ञवल्क्यश्चकारसः

ऋष्यशृङ्गो भरद्वाजश्चास्तिको देवलस्तथा । जैगीषव्योययातिश्चधृत्वासर्वत्रपूजिताः

कवचस्यास्यविप्रेन्द्र ऋषिरेव प्रजापतिः । स्वयं छन्दश्च बृहतीदेवताशारदाऽम्बिका

सर्वतत्त्वपरिज्ञानसर्वार्थसाधनेषु च । कवितासु च सर्वासु विनियोगः प्रकीर्तितः ॥

श्रींह्रींसरस्वत्यैस्वाहाशिरोमेपातुसर्वतः । श्रीं वाग्देवतायैस्वाहाभालंमे सर्वदाऽवतु

ॐ ह्रीं सरस्वत्यै स्वाहेति श्रोत्रे पातु निरन्तरम् ।

ॐ श्रीं ह्रीं भगवत्यै सरस्वत्यै स्वाहा नेत्रयुग्मं सदाऽवतु ॥ ७४ ॥

ॐ ऐं ह्रीं वाग्वादिन्यैस्वाहा नासां मे सर्वदाऽवतु ।

ॐ ह्रीं विद्याधिष्ठातृदेव्यै स्वाहा चोष्ठं सदाऽवतु ॥ ७५ ॥

ॐ श्रीं ह्रीं ब्राह्मयै स्वाहेति दन्तपङ्क्ति सदाऽवतु ।

ऐमित्येकाक्षरो मन्त्रो मम कण्ठं सदाऽवतु ॥ ७६ ॥

ॐ श्रीं ह्रीं पातु मे ग्रीवां स्कन्धौ मे श्रीं सदाऽवतु ।

ॐ ह्रीं विद्याधिष्ठातृदेव्यै स्वाहा वक्षः सदाऽवतु ॥ ७७ ॥

ॐ ह्रीं विद्याधिस्वरूपायै स्वाहा मे पातु नाभिकाम् ।

ॐ ह्रीं क्लीं वाण्यै स्वाहेति मम हस्तौ सदाऽवतु ॥ ७८ ॥

ॐ सर्ववर्णात्मिकायै पादयुग्मं सदाऽवतु ।

ॐ वागधिष्ठातृदेव्यैस्वाहा मां सर्वदाऽवतु ॥ ७९ ॥

ॐ सर्वकण्ठवासिन्यै स्वाहा प्राच्यां सदाऽवतु ।

ॐ सर्वजिह्वाग्रवासिन्यै स्वाहाऽग्निदिशि रक्षतु ॥ ८० ॥

ॐ ऐं ह्रीं श्रीं क्लीं सरस्वत्यै बुधजनन्यै स्वाहा ।

सततं मन्त्रराजोऽयं दक्षिणे मां सदाऽवतु ॥ ८१ ॥
ऐं ह्रीं श्रीं त्र्यक्षरो मन्त्रो नैर्ऋत्यां सर्वदाऽवतु ।
ॐ ऐं जिह्वाग्रवासिन्यै स्वाहा मां वारुणेऽवतु ॥ ८२ ॥
ॐ सर्वाम्बिकायै स्वाहा वायव्ये मां सदाऽवतु ।
ॐ ऐं श्रीं क्लीं गद्यवासिन्यै स्वाहा मामुत्तरेऽवतु ॥ ८३ ॥
ऐं सर्वशास्त्रवासिन्यै स्वाहैशान्यां सदाऽवतु ।
ॐ ह्रीं सर्वपूजितायै स्वाहा चोर्ध्वं सदाऽवतु ॥ ८४ ॥
ह्रीं पुस्तकवासिन्यै स्वाहाऽधो मां सदाऽवतु ।
ॐ ग्रन्थबीजस्वरूपायै स्वाहा मां सर्वतोऽवतु ॥ ८५ ॥
इति ते कथितं विप्र ! ब्रह्ममन्त्रौघविग्रहम् । इदं विश्वजयं नामकवचं ब्रह्मरूपकम् ॥
पुरा श्रुतं कर्मवक्त्रात्पर्वते गन्धमादने ।
तव स्नेहान्मयाऽऽख्यातं प्रवक्तव्यं न कस्यचित् ॥ ८७ ॥
गुरुमभ्यर्च्य विधिवद्वस्त्रालङ्कारचन्दनैः । प्रणम्य दण्डवद्भूमौ कवचं धारयेत्सुधीः ॥
पञ्चलक्षजपेनैव सिद्धं तु कवचं भवेत् । यदि स्यात्सिद्धकवचोबृहस्पतिसमो भवेत्
महावाग्मी कवीन्द्रश्च त्रैलोक्यविजयी भवेत् ।
शक्नोति सर्वं जेतुञ्च कवचस्य प्रसादतः ॥ ९० ॥
इदं च कण्वशाखोक्तं कवचं कथितं मुने !। स्तोत्रपूजाविधानंचध्यानं च वन्दनंशृणु

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायांनवमस्कन्धे
सरस्वतीस्तोत्रपूजाकवचादिवर्णनंनामचतुर्थोऽध्यायः ॥ ४ ॥

# पञ्चमोऽध्यायः

## याज्ञवल्क्यकृतसरस्वतीस्तोत्रवर्णनम्

श्रीनारायण उवाच

वाग्वदेवतायाः स्तवनं श्रूयतां सर्वकामदम् । महामुनिर्याज्ञवल्क्योयेनतुष्टाव तां पुरा
गुरुशापाच्च स मुनिर्हतविद्यो बभूव ह । तदाऽऽजगाम दुःखार्तोरविस्थानंसुपुण्यदम्
सम्प्राप्य तपसा सूर्यं लोलार्के दृष्टिगोचरे । तुष्टाव सूर्यं शोकेन रुरोद च मुहुर्मुहुः ॥
सूर्यस्तं पाठयामास वेदं वेदाङ्गमीश्वरः । उवाच स्तौहि वाग्देवींभक्त्याचस्मृतिहेतवे

तमित्युक्त्वा दीननाथोऽप्यन्तर्धानञ्चकार सः ।
मुनिः स्नात्वा च तुष्टाव भक्तिनम्रात्मकन्धरः ॥ ५ ॥

याज्ञवल्क्य उवाच

कृपां कुरु जगन्मातर्मामेवं हततेजसम् । गुरुशापात्स्मृतिभ्रष्टं विद्याहीनं चदुःखितम्

ज्ञानं देहि स्मृतिं विद्यां शक्तिं शिष्यप्रबोधिनीम् ।
ग्रन्थकर्तृत्वशक्तिं च सुशिष्यं सुप्रतिष्ठितम् ॥ ७ ॥

प्रतिभां सत्सभायां च विचारक्षमतां शुभाम् । लुप्तं सर्वं दैवयोगान्नवीभूतं पुनः कुरु
यथाऽङ्कुरं भस्मनि च करोति देवता पुनः । ब्रह्मस्वरूपापरमाज्योतीरूपासनातनी
सर्वविद्याधिदेवी या तस्यै वाण्यै नमोनमः । विसर्गबिन्दुमात्रासुयदधिष्ठानमेवच

यदधिष्ठात्री या देवी तस्यै नीत्यै नमोनमः।
व्याख्यास्वरूपा सा देवी व्याख्याधिष्ठातृरूपिणी ॥ ११ ॥

ययाविनाप्रसङ्ख्यावान्सङ्ख्यांकर्तुंनशक्यते।कालसंख्यास्वरूपायातस्यैदेव्यैनमोनमः
भ्रमसिद्धान्तरूपायातस्यैदेव्यै नमोनमः । स्मृतिशक्तिज्ञानशक्तिबुद्धिशक्तिस्वरूपिणी
प्रतिभाकल्पनाशक्तिर्या च तस्यै नमोनमः । सनत्कुमारो ब्रह्माणं ज्ञानं पप्रच्छ यत्र वै
बभूव मूकवत्सोऽपि सिद्धान्तं कर्तुमक्षमः । तदाऽऽजगामभगवानात्माश्रीकृष्णईश्वरः

उवाच स च तांस्तौहि वाणीमिष्टांप्रजापते !। सचतुष्टावतांब्रह्माचाज्ञयापरमात्मनः
चकार तत्प्रसादेन तदा सिद्धान्तमुत्तमम् । यदाप्यनन्तं पप्रच्छ ज्ञानमेकं वसुन्धरा ॥
बभूव मूकवत्सोऽपिसिद्धान्तंकर्तुमक्षमः । तदा तां सचतुष्टावसन्त्रस्तः कश्यपाज्ञया

ततश्चकार सिद्धान्तं निर्मलं भ्रमभञ्जनम् ।

व्यासः पुराणसूत्रञ्च पप्रच्छ वाल्मिकिं यदा ॥ १९ ॥

मौनीभूतश्च सस्मार तामेव जगदम्बिकाम् । तदा चकार सिद्धान्तं तद्वरेणमुनीश्वरः

सम्प्राप्य निर्मलं ज्ञानं भ्रमान्ध्यध्वंसदीपकम् ।

पुराणसूत्रंश्रुत्वाचव्यासःकृष्णकलोद्भवः ॥ २१ ॥

तां शिवां वेद दध्यौ च शतवर्षंचपुष्करे । तदात्वत्तो वरं प्राप्यसत्कवीन्द्रो बभूवह
तदावेदविभागञ्च पुराणञ्च चकार सः । यदा महेन्द्रः पप्रच्छतत्त्वज्ञानं सदाशिवम्
क्षणं तामेव सञ्चिन्त्यतस्मैज्ञानं ददौविभुः । पप्रच्छशब्दशास्त्रञ्चमहेन्द्रश्चबृहस्पतिम्
दिव्यं वर्षसहस्रं चसत्वां दध्यौ स पुष्करे । तदा त्वत्तोवरंप्राप्यदिव्यवर्षसहस्रकम्
उवाचशब्दशास्त्रं च तदर्थं च सुरेश्वरम् । अध्यापिताश्च ये शिष्या यैरधीतंमुनीश्वरैः

ते च तां परिसञ्चिन्त्य प्रवर्तन्ते सुरेश्वरीम् ।

त्वं संस्तुता पूजिता च मुनीन्द्रैर्मनुमानवैः ॥ २७ ॥

दैत्येन्द्रैश्च सुरैश्चापिब्रह्मविष्णुशिवादिभिः । जडीभूतसहस्रास्यः पञ्चवक्त्रश्चतुर्मुखः

यां स्तोतुं किमहं स्तौमि तामेकास्येन मानवः

इत्युक्त्वा याज्ञवल्क्यश्च भक्तिनम्रात्मकन्धरः ॥ २९ ॥

प्रणनाम निराहारो रुरोद च मुहुर्मुहुः । ज्योतीरूपा महामाया तेन दृष्टाऽप्युवाचतम्
सुकवीन्द्रोभवेत्युक्त्वावैकुण्ठञ्चजगाम ह । याज्ञवल्क्यकृतं वाणीस्तोत्रमेतत्तुयःपठेत्
स कवीन्द्रो महावाग्मी बृहस्पतिसमोभवेत् । महामूर्खश्च दुर्बुद्धिर्वर्षमेकं यदापठेत्

स पण्डितश्च मेधावी सुकवीन्द्रो भवेद् ध्रुवम् ॥ ३२ ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायांनवमस्कन्धे

याज्ञवल्क्यकृतंसरस्वतीस्तोत्रंनाम पञ्चमोऽध्यायः ॥ ५ ॥

# षष्ठोऽध्यायः

## लक्ष्मीगङ्गासरस्वतीनांभूलोकावतारवर्णनम्

### श्रीनारायण उवाच

सरस्वती तु वैकुण्ठे स्वयं नारायणान्तिके । गङ्गाशापेनकलहात्कलया भारतेसरित्
पुण्यदा पुण्यरूपाच पुण्यतीर्थस्वरूपिणी । पुण्यवद्भिर्निषेव्या चस्थितिःपुण्यवतांमुने
तपस्विनां तपोरूपा तपसः फलरूपिणी । कृतपापेध्मदाहाय ज्वलदग्निस्वरूपिणी
ज्ञानात्सरस्वतीतोयेमृता ये मानवा भुवि । तेषांस्थितिश्चवैकुण्ठेसुचिरं हरिसंसदि
भारतेकृतपापश्च स्नात्वातत्र च लीलया । मुच्यते सर्वपापेभ्यो विष्णुलोकेवसेच्चिरम्

चातुर्मास्यां पौर्णमास्यामक्षयायां दिनक्षये ।
व्यतीपाते च ग्रहणेऽन्यस्मिन्पुण्यदिनेऽपि च ॥ ६ ॥

अनुषङ्गेण यः स्नातो हेतुनाऽश्रद्धयाऽपिवा । सारूप्यं लभते नूनं वैकुण्ठेस हरेरपि
सरस्वतीमनुं तत्र मासमेकं च यो जपेत् । महामूर्खः कवीन्द्रश्च स भवेन्नाऽत्रसंशयः
नित्यं सरस्वतीतोये यः स्नायान्मुण्डयन्नरः । न गर्भवासं कुरुते पुनरेव स मानवः
इत्येवं कथितं किञ्चिद्भारतीगुणकीर्तनम् । सुखदं कामदंसारं भूयःकिंश्रोतुमिच्छसि

### सूत उवाच

नारायणवचः श्रुत्वा नारदो मुनिसत्तमः । पुनः पप्रच्छ सन्देहमिमं शौनक! सत्वरम्

### नारद उवाच

कथं सरस्वती देवी गङ्गाशापेन भारते । कलया कलहेनैव बभूव पुण्यदा सरित् ॥
श्रवणे श्रुतिसाराणां वर्धते कौतुकं मम । कथाऽमृते न मे तृप्तिःकेन श्रेयसि तृप्यते

कथं शशाप सा गङ्गा पूजितां तां सरस्वतीम् ।
सा तु सत्त्वस्वरूपा या पुण्यदा शुभदा सदा ॥ १४ ॥

तेजस्विनोर्द्वयोर्वादकारणं श्रुतिसुन्दरम् । सुदुर्लभं पुराणेषु तन्मे व्याख्यातुमर्हसि

श्रीनारायण उवाच

शृणु नारद! वक्ष्यामि कथामेतां पुरातनीम् । यस्याःश्र ्णमात्रेणसर्वपापात्प्रमुच्यते

लक्ष्मीः सरस्वती गङ्गा तिस्रो भार्या हरेरपि ।

प्रेम्णा समास्तास्तिष्ठन्ति सततं हरिसन्निधौ ॥ १७ ॥

चकार सैकदागङ्गाविष्णोर्मुखनिरीक्षणम् । सस्मिताच सकामा चसकटाक्षंपुनःपुनः

विभुर्जहास तद्वक्त्रं निरीक्ष्य चक्षणंतदा । क्षमां चकार तद्दृष्ट्वा लक्ष्मीर्नैवसरस्वती

बोधयामास पद्मातां सत्त्वरूपा च सस्मिता ।

क्रोधाविष्टा च सा वाणी न च शान्ता बभूव ह ॥ २० ॥

उवाच वाणी भर्तारं रक्तास्या रक्तलोचना । कम्पिताकामवेगेन शश्वत्प्रस्फुरिताधरा

सरस्वत्युवाच

सर्वत्र समताबुद्धिः सद्भर्तुः कामिनीम्प्रति । धर्मिष्ठस्य वरिष्ठस्यविपरीता खलस्यच

ज्ञातं सौभाग्यमधिकंगङ्गायांते गदाधर । कमलायाश्चतत्तुल्यं न च किञ्चिन्मयिप्रभो

गङ्गायाः पद्मयासार्धंप्रीतिश्चाऽस्तिसुसम्मता । क्षमाञ्चकार तेनेदं विपरीतंहरिप्रिया

किंजीवनेनमेऽत्रैवदुर्भगायाश्चसाम्प्रतम् । निष्फलं जीवनन्तस्या या पत्युःप्रेमवञ्चिता

त्वां सर्वे सत्त्वरूपञ्च ये वदन्तिमनीषिणः । तेचमूर्खा न वेदज्ञा नजानन्ति मतिं तव

सरस्वतीवचःश्रुत्वादृष्ट्वा तांकोपसंयुताम् । मनसाचसमालोच्यसजगामबहिःसभाम्

गते नारायणे गङ्गामुवाच निर्भयं रुषा । वागधिष्ठातृदेवी सा वाक्यं श्रवणदुष्करम्

हे निर्लज्जे! हे सकामे! स्वामिगर्वं करोषि किम् ।

अधिकं स्वामिसौभाग्यं विज्ञापयितुमिच्छसि ॥ २६ ॥

मानंचूर्णंकरिष्यामितवाऽद्यहरिसन्निधौ । किं करिष्यति ते कान्तोममैवंकान्तवल्लभे

इत्येवमुक्त्वा गङ्गायाः केशं ग्रहीतुमुद्यता । वारयामास तां पद्मा मध्यदेशंसमाश्रिता

शशाप वाणी तां पद्मां महाबलवती सती । वृक्षरूपा सरिद्रूपा भविष्यसिनसंशयः

विपरीतं यतो दृष्ट्वा किंचन्नोवक्तुमर्हसि । सन्तिष्ठति सभामध्येयथावृक्षोयथासरित्

शापं श्रुत्वा तु सा देवी न शशाप चुकोप ह ।

तत्रैव दुःखिता तस्थौ वाणी धृत्वा करेण च ॥ ३४ ॥

अत्युग्रतां तुतांदृष्ट्वाकोपप्रस्फुरिताधराम् । उवाच गङ्गा तांदेवींपद्मांचारुकलोचनाम्

श्रीगङ्गोवाच

त्वमुत्सृजमहोग्राञ्चपद्मेकिं मेकरिष्यति । दुःशीलामुखरानष्टानित्यंवाचालरूपिणी वागधिष्ठात्री देवीयंसततंकलहप्रिया । यावती योग्यता चाऽस्या यावतीशक्तिरेव तथा करोतु वादञ्च मया सार्धञ्चदुर्मुखी । स्वबलं यन्मम बलं विज्ञापयितुमिच्छति जानन्तुसर्वे ह्युभयोःप्रभावंविक्रमंसति । इत्येवमुक्त्वा सा देवी वाण्यैशापंददाविति

सरित्स्वरूपा भवतु सा या त्वां (तां) च शशाप ह ।

अधोमर्त्यं सा प्रयातु सन्ति यत्रैव पापिनः ॥ ४० ॥

कलौ तेषाञ्चपापानिग्रहीष्यन्तिन संशयः । इत्येवं वचनं श्रुत्वा ता शशापसरस्वती त्वमेव यास्यसि महीं पापिपापं लभिष्यसि । एतस्मिन्नन्तरे तत्र भगवानाजगामह चतुर्भुजश्चतुर्भिश्च पार्षदैश्च चतुर्भुजैः । सरस्वतीं करे धृत्वा वासयामास वक्षसि बोधयामास सर्वज्ञः सर्वज्ञानं पुरातनम् । श्रुत्वा रहस्यं तासाञ्च शापस्य कलहस्य च

उवाच दुःखितास्ताश्च वाचं सामयिकीं विभुः ।

श्रीभगवानुवाच

लक्ष्मि! त्वं कलया गच्छ धर्मध्वजगृहं शुभे !॥ ४५ ॥

अयोनिसम्भवा भूमौतस्यकन्याभविष्यसि । तत्रैव दैवदोषेण वृक्षत्वञ्च लभिष्यसि मदंशस्याऽसुरस्यैवशङ्खचूडस्यकामिनी । भूत्वा पश्चाच्चमत्पत्नी भविष्यसिनसंशयः त्रैलोक्यपावनी नाम्ना तुलसीतिचभारते । कलया च सरिद्भावं शीघ्रं गच्छ वरानने भारतं भारतीशापान्नाम्ना पद्मावती भव । गङ्गे! यास्यसि पश्चात्त्वमंशेन विश्वपावनी भारतं भारतीशापात्पापदाहाय पापिनाम् । भगीरथस्य तपसा तेन नीता सुकल्पिते नाम्ना भागीरथी पूता भविष्यसि महीतले । मदंशस्य समुद्रस्यजाया जायेममाज्ञया मत्कलांशस्य भूपस्य शन्तनोश्च सुरेश्वरि । गङ्गाशापेन कलया भारतंगच्छभारति!

कलहस्य फलं भुङ्क्ष्व सपत्नीभ्यां सहाऽच्युते !॥

स्वयं च ब्रह्मसदने ब्रह्मणः कामिनी भव ॥ ५३ ॥

गङ्गा यातु शिवस्थानमत्र पद्मैव तिष्ठतु । शान्ता चक्रोधरहिता मद्भक्ता सत्त्वरूपिणी महासाध्वी महाभागासुशीलाधर्मचारिणी । यदंशकलया सर्वा धर्मिष्ठाश्च पतिव्रताः

शान्तरूपाः सुशीलाश्च प्रतिविश्वेषु पूजिताः ।

तिस्रो भार्यास्त्रिशीलाश्च त्रयो भृत्याश्च बान्धवाः ॥ ५६ ॥

ध्रुवं वेदविरुद्धाश्च न ह्येते मङ्गलप्रदाः । स्त्रीपुंवच्च गृहे येषां गृहिणां स्त्रीवशःपुमान् ॥ निष्फलं च जन्म तेषामशुभं च पदेपदे । मुखे दुष्टा योनिदुष्टा यस्य स्त्री कलहप्रिया अरण्यं तेन गन्तव्यं महारण्यं गृहाद्वरम् । जलानां च स्थलानांचफलानांप्राप्तिरेवच सततं सुलभा तत्र न तेषां गृह एव च । वरमग्नौ स्थितिर्हिस्रंजन्तूनांसन्निधौसुखम्

ततोऽपि दुःखं पुंसां च दुष्टस्त्रीसन्निधौ ध्रुवम् ।

व्याधिज्वाला विषज्वाला वरं पुंसां वरानने! ॥ ६१ ॥

दुष्टस्त्रीणां मुखज्वाला मरणादतिरिच्यते ।

पुंसां च स्त्रीजितां चैव भस्मान्तं शौचमध्रुवम् ॥ ६२ ॥

यदह्नि कुरुते कर्म न तस्य फलभाग्भवेत् । निन्दितोऽत्र परत्रैव सर्वत्र नरकं व्रजेत् ॥ यशःकीर्तिविहीनो योजीवन्नपिमृतोहिसः । बह्वीनांचसपत्नीनांनैकत्रश्रेयसेस्थितिः एकभार्यः सुखी नैव बहुभार्यः कदाचन । गच्छ गङ्गे! शिवस्थानं ब्रह्मस्थानंसरस्वति अत्र तिष्ठतु मद्गेहे सुशीला कमलालया । सुसाध्वी यस्य पत्नीचसुशीलाचपतिव्रता इह स्वर्गे सुखं तस्य धर्मो मोक्षः परत्र च । पतिव्रतायस्यपत्नीसचमुक्तःशुचिःसुखी

जीवन्मृतोऽशुचिर्दुःखी दुःशीलापतिरेव च ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्या संहितायांनवमस्कन्धे लक्ष्मीगङ्गासरस्वतीनांभूलोकेऽवतरणवर्णनंनाम षष्ठोऽध्यायः ॥ ६ ॥

# सप्तमोऽध्यायः

## गङ्गादीनांशापोद्धारवर्णनम्

श्रीनारायण उवाच

इत्युक्त्वा जगतां नाथोविरराम च नारद !। अतीव रुरुदुर्देव्यः समालिङ्ग्य परस्परम्

ताश्च सर्वाः समालोक्य क्रमेणोचुस्तदेश्वरम्। कम्पिताःसाश्रुनेत्राश्चशोकेनचभयेनच

सरस्वत्युवाच

विशापं देहि हे नाथ! दुष्टमाजन्मशोचनम्।

सत्स्वामिना परित्यक्ताः कुतो जीवन्ति ताः स्त्रियः॥ ३॥

देहत्यागंकरिष्यामि योगेन भारते ध्रुवम्। अत्युन्नतो हि नियतंपातुमर्हतिनिश्चितम्

गङ्गोवाच

अहं केनाऽपराधेन त्वया त्यक्ता जगत्पते !। देहत्यागंकरिष्यामि निर्दोषाया वधं लभ

निर्दोषकामिनीत्यागं करोति यो नरो भुवि। सयातिनरकंघोरंकिन्तुसर्वेश्वरोऽपिवा

पद्मोवाच

नाथ! सत्त्वस्वरूपस्त्वं कोपः कथमहो तव। प्रसादं कुरु भार्ये द्वे सदीशस्यक्षमावरा

भारते भारतीशापाद्यास्यामि कलया ह्यहम्।

कियत्कालं स्थितिस्तत्र कदा द्रक्ष्यामि ते पदम्॥ ८॥

दास्यन्ति पापिनः पापंसद्यःस्नानावगाहनात्। केनतेनविमुक्ताऽहमागमिष्यामितेपदम्

कलया तुलसीरूपं धर्मध्वजसुतासती। भुक्त्वाकदालभिष्यामित्वत्पादाम्बुजमच्युत

वृक्षरूपा भविष्यामि त्वदधिष्ठातृदेवता। समुद्धरिष्यसि कदा तन्मे ब्रूहि कृपानिधे!

गङ्गा सरस्वतीशापाद्यदियास्यति भारते !। शापेनमुक्तापापाच्चकदात्वांचलभिष्यति

गङ्गाशापेन वा वाणी यदि यास्यतिभारतम्। कदाशापाद्विनिर्मुच्यलभिष्यतिपदंतव

तां वाणीं ब्रह्मसदनं गङ्गां वा शिवमन्दिरम्। गन्तुंवदसिहेनाथ! तत्क्षमस्वचतेवचः

इत्युक्त्वा कमला कान्तपादं धृत्वा ननाम सा । स्वकेशैर्वेष्टनं कृत्वा रुरोदच पुनःपुनः
"उवाच पद्मनाभस्तां पद्मां कृत्वा स्ववक्षसि । ईषद्धास्यप्रसन्नास्यो भक्तानुग्रहकातरः

श्रीभगवानुवाच

त्वद्वाक्यमाचरिष्यामिस्ववाक्यञ्च सुरेश्वरि !। समतांचकरिष्यामिशृणुत्वंकमलेक्षणे
भारती यातु कलया सरिद्रूपा च भारते । अर्धा सा ब्रह्मसदनं स्वयं तिष्ठतु मद्गृहे
भगीरथेन सा नीता गङ्गा यास्यति भारते । पूतं कर्तुं त्रिभुवनं स्वयं तिष्ठतु मद्गृहे
तत्रैवचन्द्रमौलेश्चमौलिंप्राप्स्यतिदुर्लभम् । ततःस्वभावतःपूताऽप्यतिपूजाभविष्यति
कलांशांशेन गच्छ त्वं भारते वामलोचने !। पद्मावती सरिद्रूपा तुलसी वृक्षरूपिणी
कलेः पञ्चसहस्रे च गते वर्षे च मोक्षणम् । युष्माकं सरितांचैव मद्गेहेचागमिष्यथ
सम्पदा हेतुभूता च विपत्तिः सर्वदेहिनाम् । विना विपत्तेर्महिमा केषां पद्मभवे भवेत्
मन्मन्त्रोपासकानां चसतांस्नानावगाहनात् । युष्माकंमोक्षणंपापाद्दर्शनात्स्पर्शनात्तथा

पृथिव्यां यानि तीर्थानि सन्त्यसङ्ख्यानि सुन्दरि !।
भविष्यन्ति च पूतानि मद्भक्तस्पर्शदर्शनात् ॥ २४ ॥

मन्मन्त्रोपासका भक्ता विश्रमन्ति च भारते । पूतं कर्तुं तारितुंचसुपवित्रावसुन्धराम्
मद्भक्ता यत्र तिष्ठन्ति पादं प्रक्षालयन्ति च । तत्स्थानं चमहातीर्थंसुपवित्रंभवेद्ध्रुवम्
स्त्रीघ्नो गोघ्नः कृतघ्नश्चब्रह्मघ्नोगुरुतल्पगः । जीवन्मुक्तोभवेत्पूतो मद्भक्तस्पर्शदर्शनात्
एकादशीविहीनश्च सन्ध्याहीनोऽथनास्तिकः । नरघातीभवेत्पूतोमद्भक्तस्पर्शदर्शनात्
असिजीवी मसीजीवीधावको ग्रामयाचकः । वृषवाहो भवेत्पूतो मद्भक्तस्पर्शदर्शनात्

विश्वसघाती मित्रघ्नो मिथ्यासाक्ष्यस्य दायकः ।
स्थाप्यहारी भवेत्पूतो मद्भक्तस्पर्शदर्शनात् ॥ ३० ॥

अत्युग्रवान्पुंदूषकश्च जारकः पुंश्चलीपतिः । पूतश्च वृषलीपुत्रो मद्भक्तस्पर्शदर्शनात् ॥
शूद्राणां सूपकारश्च देवलो ग्रामयाजकः । अदीक्षितो भवेत्पूतो मद्भक्तस्पर्शनर्शनात्
पितरं मातरं भार्यां भ्रातरं तनयं सुताम् । गुरोः कुलं च भगिनींचक्षुर्हीनंचबान्धवम्
श्वश्रूं च श्वशुरं चैव यो न पुष्णाति सुन्दरि !। समहापातकीपूतोमद्भक्तस्पर्शदर्शनात्

अश्वत्थनाशकश्चैवमद्भक्तनिन्दकस्तथा। शूद्रान्नभोजी विप्रश्च पूतो मद्भक्तदर्शनात्॥
देवद्रव्यापहारी च विप्रद्रव्यापाहारकः। लाक्षालोहरसानां च विक्रेता दुहितुस्तथा
महापातकिनश्चैव शूद्राणां शवदाहकः। भवेयुरेते पूताश्च मद्भक्तस्पर्शदर्शनात्॥ ३७॥

श्रीमहालक्ष्मीरुवाच

भक्तानां लक्षणं ब्रूहि भक्तानुग्रहकातर!। तेषां तु दर्शनस्पर्शात्सद्यः पूता नराधमाः
हरिभक्तिविहीनाश्चमहाहङ्कारसंयुताः। स्वप्रशंसारता धूर्ताः शठाश्च साधुनिन्दकाः॥
पुनन्ति सर्वतीर्थानि येषां स्नानावगाहनात। येषाञ्च पादरजसापूतापादोदकान्मही
येषां सन्दर्शनं स्पर्शं ये वा वाञ्छन्ति भारते। सर्वेषां परमोलाभोवैष्णवनांसमागमः
नह्यम्मयानितीर्थानिनदेवामृच्छिलामयाः। तेपुनन्त्यपि कालेनविष्णुभक्ताःक्षणादहो

सूत उवाच

महालक्ष्मीवचः श्रुत्वालक्ष्मीकान्तश्च सस्मितः। निगूढतत्त्वंकथितुमपिश्रेष्ठोपचक्रमे

श्रीभगवानुवाच

भक्तानां लक्षणंलक्ष्मि! गूढंश्रुतिपुराणयोः। पुण्यस्वरूपं पापघ्नं सुखदंभुक्तिमुक्तिदम्
सारभूतं गोपनीयंनवक्तव्यं खलेषु च। त्वां पवित्रां प्राणतुल्यां कथयामि निशामय
गुरुवक्त्राद्विष्णुमन्त्रोयस्यवक्त्रकर्णेपतिष्यति।वदन्तिवेदास्तंचापिपवित्रंचनरोत्तमम्
पुरुषाणां शतं पूर्वं तथातज्जन्ममात्रतः। स्वर्गस्थंनरकस्थंवामुक्तिमाप्नोतितत्क्षणात्
यैः कैश्चिद्यत्र वा जन्मलब्धंयेषुचजन्तुषु। जीवन्मुक्तास्तुतेपूतायान्तिकालेहरेःपदम्
मद्भक्तियुक्तोमर्त्यश्चसमुक्तोमद्गुणान्वितः। मद्गुणाधीनवृत्तिर्यःकथाविष्टश्चसन्ततम्
मद्गुणश्रुतिमात्रेण सानन्दः पुलकान्वितः। सगद्गदःसाश्रुनेत्रः स्वात्मविस्मृतएवच
न वाञ्छति सुखं मुक्तिसालोक्यादिचतुष्टयम्। ब्रह्मत्वममरत्वं वातद्वाञ्छा ममसेवने
इन्द्रत्वंच मनुत्वं च ब्रह्मत्वंचसदुर्लभम्। स्वर्गराज्यादिभोगंचस्वप्नेऽपिचनवाञ्छति
भ्रमन्तिभारतेभक्तास्तादृग्जन्मसुदुर्लभम्। मद्गुणश्रवणाःश्राव्यगानैर्नित्यंमुदान्विताः

ते यान्ति च महीं पूत्वा नरं तीर्थं ममाऽऽलयम्।
इत्येवं कथितं सर्वं पद्मे! कुरु यथोचितम्॥ ५४॥

तदाज्ञया तास्तचक्रुर्हरिस्तस्थौ सुखासने ।

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यांसंहितायांमनवमस्कन्धे गङ्गादीनांशापोद्धारवर्णनंनाम सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः

### कलेर्माहात्म्यवर्णनम्

श्रीनारायण उवाच

सरस्वती पुण्यक्षेत्रमाजगाम च भारते । गङ्गाशापेन कलया स्वयं तस्थौ हरेः पदे ॥
भारती भारतं गत्वा ब्राह्मी चब्रह्मणःप्रिया । वाण्यधिष्ठातृदेवीसातेनवाणीप्रकीर्तिता
सरोवाप्यां च स्रोतस्सु सर्वत्रैव हिदृश्यते । हरिःसरस्वांस्तस्येयंतेननाम्नासरस्वती
सरस्वती नदी सा च तीर्थरूपाऽतिपावनी । पापिनांपापदाहायज्वलदग्निस्वरूपिणी
पश्चाद्भागीरथी नीता मही भगीरथेन च । सा वै जगाम कलया वाणीशापेन नारद ॥
तत्रैव समये ताञ्च दधार शिरसा शिवः । वेगं सोढुमयं शक्तो भुवः प्रार्थनया विभुः
पद्मा जगाम कलया सा च पद्मावती नदी । भारतं भारतीशापात्स्वयंतस्थौ हरेः पदे
ततोऽन्यया सा कलया लेभेजन्मचभारते । धर्मध्वजसुतालक्ष्मीर्विख्यातातुलसीतिच
पुरासरस्वतीशापात्पश्चाच्च हरिशापतः । बभूव वृक्षरूपा सा कलया विश्वपावनी ॥
कलेः पञ्चसहस्रं च वर्षं स्थित्वा च भारते । जग्मुस्ताश्च सरिद्रूपंविहायश्रीहरेःपदम्

यानि सर्वाणि तीर्थानि काशीं वृन्दावनं विना ।
यास्यन्ति सार्धं ताभिश्च वैकुण्ठमाज्ञया हरेः ॥ ११ ॥

शालग्रामःशक्तिशिवौजगन्नाथश्चभारतम् । कलेर्दशसहस्रान्तेत्यक्त्वायान्तिनिजंपदम्
माधवश्च पुराणानि शङ्खानि श्राद्धतर्पणे । वेदोक्तानि च कर्माणिययुस्तैःसार्धमेव च
देवपूजा देवनाम तत्कीर्तिगुणकीर्तनम् । वेदाङ्गानि च शास्त्राणि ययुस्तैः सार्धमेवच

सन्तश्च सत्यं धर्मश्च वेदाश्च ग्रामदेवताः । व्रतं तपश्चाऽनशनं ययुस्तैः सार्धमेव च
वामाचाररताः सर्वे मिथ्याकपटसंयुताः । तुलसीरहिता पूजा भविष्यति ततः परम्
शठाःक्रूरादाम्भिकाश्चमहाहङ्कारसंयुताः । चोराश्चसहिंसकाःसर्वेभविष्यन्तिततःपरम्

पुंसो भेदः स्त्रीविभेदो विवाहो वाऽपि निर्भयः ।
स्वस्वामिभेदो वस्तूनां भविष्यति ततः परम् ॥ १८ ॥

सर्वे स्त्रीवशगाः पुंसः पुंश्चल्यश्च गृहेगृहे । तर्जनैर्भर्त्सनैः शश्वत्स्वामिनं ताडयन्ति च
गृहेश्वरी चगृहिणीगृहीभृत्याधिकोऽधमः । चेटीदाससमोवध्वाः श्वश्रूश्वशुरस्तथा

कर्तारो बलिनो गेहे योनिसम्बन्धिबान्धवाः ।
विद्यासम्बन्धिभिः सार्धं सम्भाषाऽपि न विद्यते ॥ २१ ॥
यथाऽपरिचिता लोकास्तथा पुंसश्च बान्धवाः ।
सर्वकर्माक्षमाः पुंसो योषितामाज्ञया विना ॥ २२ ॥

ब्रह्मक्षत्रविशः शूद्राजात्याचारविवर्जिताः । सन्ध्या च यज्ञसूत्रं च भवेल्लुप्तं न संशयः

म्लेच्छाचारा भविष्यन्ति वर्णाश्चत्वार एव च ।
म्लेच्छशास्त्रं पठिष्यन्ति स्वशास्त्राणि विहाय च ॥ २४ ॥

ब्रह्मक्षत्रविशां वंशाः शूद्राणां सेवकाः कलौ । सूपकारा धावकाश्चवृषवाहाश्च सर्वशः

सत्यहीना जनाः सर्वे सस्यहीना च मेदिनी ।
फलहीनाश्च तरवोऽपत्यहीनाश्च योषितः ॥ २६ ॥
क्षीरहीनास्तथा गावःक्षीरं सर्पिर्विवर्जितम् ।
दम्पती प्रीतिहीनौ च गृहिणः सत्यवर्जिताः ॥ २७ ॥

प्रतापहीना भूपाश्च प्रजाश्च करपीडिताः । जलहीना महानद्यो दीर्घिकाकन्दरादयः ॥
धर्महीना पुण्यहीना वर्णाश्चत्वारएव च । लक्षेषु पुण्यवान्कोऽपि न तिष्ठतिततःपरम्

कुत्सिता विकृताकारा नरा नार्यश्च बालकाः ।
कुवार्ता कुत्सितः शब्दो भविष्यति ततः परम् ॥ ३० ॥

केचिद्ग्रामाश्च नगरा नरशून्या भयानकाः । केचित्स्वल्पकुटीरेण नरेण चसमन्विताः

अरण्यानि भविष्यन्ति ग्रामेषु नगरेषु च। अरण्यवासिनः सर्वे जनाश्च करपीडिताः
सस्यानि च भविष्यन्ति तडागेषु नदीषु च। प्रकृष्टवंशजा हीनाभविष्यन्तिकलौयुगे
अलीकवादिनो धूर्ताः शठाश्चासत्यवादिनः। प्रकृष्टानि च क्षेत्राणिसस्यहीनानिनारद

हीनाः प्रकृष्टा धनिनो देवभक्ताश्च नास्तिकाः।

हिंसकाश्च दयाहीनाः पौराश्च नरघातिनः॥ ३५॥

वामना व्याधियुक्ताश्च नरा नार्यश्च सर्वतः। स्वल्पायुरोगदायुक्तायौवनैरहिताःकलौ
पलिताः षोडशे वर्षे महावृद्धाश्च विंशतौ। अष्टवर्षा च युवती रजोयुक्ता चगर्भिणी
वत्सरान्तप्रसूता स्त्री षोडशेचजरान्विता। पतिपुत्रवतीकाचित्सर्वावन्ध्याःकलौयुगे
कन्याविक्रयिणः सर्वे वर्णाश्चत्वार एव च। मातृजायावधूनां च जारोपेतान्नभक्षकाः

कन्यानां भगिनीनाम्वा जारोपात्तान्नजीविनः।

हरेर्नाम्नां विक्रयिणो भविष्यन्ति कलौ युगे॥ ४०॥

स्वयमुत्सृज्य दानञ्च कीर्तिवर्धनहेतवे। ततः पश्चात्स्वदानं च स्वयमुल्लङ्घयिष्यति
देववृत्तिं ब्रह्मवृत्तिं वृत्तिं गुरुकुलस्य च। स्वदत्तां परदत्तां वा सर्वमुल्लङ्घयिष्यति॥
कन्यकागामिनः केचित्केचिच्च श्वश्रुगामिनः। केचिद्वधूगामिनश्च केचिद्वै सर्वगामिनः

भगिनीगामिनः केचित्सपत्नीमातृगामिनः।

भ्रातृजायागामिनश्च भविष्यन्ति कलौयुगे॥ ४४॥

अगम्यागमनं चैव करिष्यन्ति गृहे गृहे। मातृयोनिं परित्यज्य विहरष्यन्ति सर्वतः
पत्नीनां निर्णयो नास्तिभर्तॄणां चकलौयुगे। प्रजानांचैवग्रामाणांवस्तूनांचविशेषतः
अलीकवादिनः सर्वे सर्वे चौराश्च लम्पटाः। परस्परं हिंसकाश्च सर्वे च नरघातिनः

ब्रह्मक्षत्रविशां वंशा भविष्यन्ति च पापिनः।

लाक्षालोहरसानाञ्च व्यापारं लवणस्य च॥ ४८॥

वृषवाहा विप्रवंशाः शूद्राणां शवदाहिनः। शूद्रान्नभोजिनः सर्वे सर्वे च वृषलीरताः॥
पञ्चयज्ञविहीनाश्च कुहूरात्रौ च भोजिनः। यज्ञसूत्रविहीनाश्च सन्ध्याशौचविहीनकाः
पुंश्चली वार्धुषाजीवा कुट्टनी च रजस्वला। विप्राणांरन्धनागारेभविष्यतिचपापिका

अश्वानां नियमो नास्ति योनीनां च विशेषतः ।
आश्रमाणां जनानां च सर्वे म्लेच्छाः कलौ युगे ॥ ५२ ॥

एवं कलौ सम्प्रवृत्ते सर्वं म्लेच्छमयं भवेत् । हस्तप्रमाणे वृक्षे च अङ्गुष्ठे चैव मानवे
विप्रस्य विष्णुयशसः पुत्रःकल्किर्भविष्यति । नारायणकलांशश्चभगवान्बलिनाम्वरः
दीर्घेण करवालेन दीर्घघोटकवाहनः । म्लेच्छशून्याञ्च पृथिवीं त्रिरात्रेण करिष्यति

निर्म्लेच्छाम्वसुधां कृत्वा चाऽन्तर्धानं करिष्यति ।
अराजका च वसुधा दस्युग्रस्ता भविष्यति ॥ ५६ ॥

स्थूलाऽप्रमाणाच्छात्रं वर्षधाराप्लुता मही । लोकशून्या वृक्षशून्यागृहशून्याभविष्यति
ततश्च द्वादशादित्याः करिष्यन्त्युदयंमुने ।। प्राप्नोतिशुष्कतांपृथ्वीसमातेषांचतेजसा
कलौ गते च दुर्धर्षे प्रवृत्ते च कृते युगे । तपःसत्त्वसमायुक्तो धर्मः पूर्णो भविष्यति
तपस्विनश्च धर्मिष्ठा वेदज्ञा ब्राह्मणा भुवि । पतिव्रताश्च धर्मिष्ठा योषितश्च गृहे गृहे॥
राजानः क्षत्रिया सर्वे विप्रभक्ता मनस्विनः । प्रतापवन्तो धर्मिष्ठाःपुण्यकर्मरताःसदा

वैश्या वाणिज्यनिरता विप्रभक्ताश्च धार्मिकाः ।
शूद्राश्च पुण्यशीलाश्च धर्मिष्ठा विप्रसेविनः ॥ ६२ ॥

विप्रक्षत्रविशां वंशा देवीभक्तिपरायणाः । देवीमन्त्ररता सर्वे देवीध्यानपरायणाः ॥
श्रुतिस्मृतिपुराणज्ञाः पुमांस ऋतुगामिनः । लेशोनास्ति ह्यधर्मस्य पूर्णोधर्मःकृतेयुगे
धर्मस्त्रिपाच्च त्रेतायां द्विपाच्च द्वापरे ततः । कलौ वृत्ते चैकपाच्च सर्वलुप्तिस्ततःपरम्
वाराः सप्त तथा विप्रा तिथयः षोडश स्मृताः । तथा द्वादशमासाश्च ऋतवश्चषडेवच
द्वौ पक्षौ चाऽयने द्वे च चतुर्भिः प्रहरैर्दिनम् । चतुर्भिःप्रहरैःरात्रिर्मासस्त्रिंशद्दिनैस्तथा
वर्षं पञ्चविधं ज्ञेयंकालसंख्याविधिक्रमे । यथाऽऽयान्तियान्त्येवयथायुगचतुष्टयम्
वर्षे पूर्णे नराणाञ्च देवानाञ्च दिवानिशम् । शतत्रये षष्ट्यधिके नराणाञ्च युगे कृते॥
देवानाञ्च युगं ज्ञेयंकालसङ्ख्याविदां मतम् । मन्वन्तरंतुदिव्यानांयुगानामेकसप्ततिः
मन्वन्तरसमं ज्ञेयमायुष्यञ्च शचीपतेः । अष्टाविंशतिमे चेन्द्रे गते ब्रह्मदिवानिशम् ॥
अष्टोत्तरशते वर्षे गते पातश्च ब्रह्मणः । प्रलयः प्राकृतो ज्ञेयस्तत्राऽदृष्टा वसुन्धरा ॥

जलप्लुतानि विश्वानि ब्रह्मविष्णुशिवादयः।
ऋषयो ज्ञानिनः सर्वे लीनाः सत्ये चिदात्मनि ॥ ७३ ॥
तत्रैव प्रकृतिर्लीना तत्र प्राकृतिको लयः। लये प्राकृतिके जाते पाते च ब्रह्मणो मुने
निमेषमात्रं कालश्च श्रीदेव्याः प्रोच्यते मुने !।
एवं नश्यन्ति सर्वाणि ब्रह्माण्डान्यखिलानि च ॥ ७५ ॥
निमेषान्तरकालेन पुनः सृष्टिक्रमेण च। एवं कतिविधासृष्टिर्लयः कतिविधोऽपि वा
कति कल्पा गताऽऽयाताः सङ्ख्यां जानाति कः पुमान्।
सृष्टीनाञ्च लयानाञ्च ब्रह्माण्डानाञ्च नारद ! ॥ ७७ ॥
ब्रह्मादीनाञ्च ब्रह्माण्डे सङ्ख्यां जानाति कः पुमान्।
ब्रह्माण्डानाञ्च सर्वेषामीश्वरश्चैक एव सः ॥ ७८ ॥
सर्वेषां परमात्मा चसच्चिदानन्दरूपधृक्। ब्रह्मादयश्चतस्यांशास्तस्यांशश्चमहाविराट्
तस्यांऽशश्च विराट् क्षुद्रः सैवेयं प्रकृतिः परा।
तस्याः सकाशान्सञ्जातोऽप्यर्धनारीश्वरस्ततः ॥ ८० ॥
सैवकृष्णो द्विधाभूतोद्विभुजश्च चतुर्भुजः। चतुर्भुजश्चवैकुण्ठेगोलोकेद्विभुजःस्वयम्
ब्रह्मादितृणपर्यन्तं सर्वं प्राकृतिकं भवेत्। यद्यत्प्राकृतिकं सृष्टं सर्वं नश्वरमेव च ॥
एवंविधं सृष्टिहेतुं सत्यं नित्यं सनातनम्। स्वेच्छामयं परंब्रह्मनिर्गुणंप्रकृतेः परम्
निरुपाधि निराकारं भक्तानुग्रहकातरम्। करोतिब्रह्माब्रह्माण्डंयज्ज्ञानात्कमलोद्भवः
शिवोमृत्युञ्जयश्चैव संहर्ता सर्वसत्त्ववित्। यज्ज्ञानाद्यस्यतपसासर्वेशस्तुतपोमहान्
महाविभूतियुक्तश्चसर्वज्ञः सर्वदर्शनः। सर्वव्यापी सर्वपाता प्रदातासर्वसम्पदाम् ॥
विष्णुः सर्वेश्वरः श्रीमान्यद्भक्त्या तस्यसेवया। महामायाचप्रकृतिःसर्वशक्तिमयीश्वरी
सैवप्रोक्ताभगवतीसच्चिदानन्दरूपिणी। यज्ज्ञानाद्यस्य तपसा यद्भक्त्या यस्य सेवया
सावित्री वेदमाता च वेदाधिष्ठातृदेवता। पूज्याद्विजानां वेदज्ञायज्ज्ञानाद्यस्यसेवया
सर्वविद्याधिदेवी सा पूज्या च विदुषां परा। यत्सेवयायत्तपसासर्वविश्वेषुपूजिता
सर्वग्रामाधिदेवी सा सर्वसम्पत्प्रदायिनी। सर्वेश्वरी सर्ववन्द्यासर्वेषां पुत्रदायिनी

सर्वस्तुता च सर्वज्ञासर्वदुर्गार्तिनाशिनी । कृष्णवामांशसम्भूता कृष्णप्राणाधिदेवता

कृष्णप्राणाधिका प्रेम्णा राधिका शक्तिसेवया ।
सर्वाधिकं च रूपञ्च सौभाग्यं मानगौरवे ॥ ९३ ॥

कृष्णवक्षःस्थलस्थानं पत्नीत्वे प्रापसेवया । तपश्चकार सा पूर्वं शतशृङ्गे च पर्वते ॥ दिव्यवर्षसहस्रञ्च पतिप्राप्त्यर्थमेव च । जातेशक्तिप्रसादे तु दृष्ट्वा चन्द्रकलोपमाम् कृष्णोवक्षःस्थले कृत्वा रुरोदकृपया विभुः । वरं तस्यै ददौसारं सर्वेषामपिदुर्लभम् ममवक्षःस्थले तिष्ठ ममभक्ता च शाश्वती । सौभाग्येनच मानेनप्रेम्णाऽथोगौरवेणच त्वं मे श्रेष्ठा च ज्यैष्ठाचप्रेयसीसर्वयोषिताम् । वरिष्ठाचगरिष्ठाचसंस्तुतापूजितामया सततं तव साध्योऽहंवश्यश्चप्राणवल्लभे !। इत्युक्त्वा चजगन्नाथश्चकार ललनां ततः सपत्नीरहितांतांचचकारप्राणवल्लभाम् । अन्या यायाश्चतादेव्यःपूजिताः शक्तिसेवया तपस्तु यादृशं यासां तादृक्तादृक्फलं मुने !। दिव्यंवर्षसहस्रञ्चतपस्तप्त्वा हिमाचले दुर्गा च तत्पदं ध्यात्वा सर्वपूज्या बभूव ह । सरस्वती तपस्तप्त्वापर्वते गन्धमादने लक्षवर्षं च दिव्यं च सर्ववन्द्याबभूव सा । लक्ष्मीर्युगशतं दिव्यंतपस्तप्त्वाच पुष्करे सर्वसम्पत्प्रदात्रीचजातादेवीनिषेवणात् । सावित्री मलयेतप्त्वा पूज्यावन्द्याबभूवसा षष्टिवर्षसहस्रञ्च दिव्यं ध्यात्वा च तत्पदम् । शतमन्वन्तरंतप्तंशङ्करेण पुरा विभो ! ॥ शतमन्वन्तरं चेदं ब्रह्मा शक्तिं जजाप ह । शतमन्वन्तरं विष्णुस्तप्त्वा पाता बभूव ह ॥ दशमन्वन्तरं तप्त्वाश्रीकृष्णःपरमंतपः । गोलोकं प्राप्तवान्दिव्यं मोदतेऽद्याऽपि यत्रहि दशमन्वन्तरं धर्मस्तप्त्वा वै भक्ति संयुतः । सर्वप्राणः सर्वपूज्यःसर्वाधारो बभूवसः एवं देव्याश्च तपसा सर्वदेवाश्च पूजिताः । मुनयो मनवो भूपा ब्राह्मणाश्चैव पूजिताः॥

एवं ते कथितं सर्वं पुराणं सयथागमम् ।
गुरुवक्त्राद्यथा ज्ञातं किं भूयः श्रोतुमिच्छसि ॥ ११० ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायांनवमस्कन्धे नारायणनारदसम्वादेसकलिमाहात्म्यंशक्तिप्रादुर्भावोनामाऽष्टमोध्यायः ॥ ८ ॥

———

# नवमोऽध्यायः

## शक्त्युत्पत्तिप्रसङ्गेभूमिशक्तेरुत्पत्तिवर्णनम्

नारद उवाच

देव्या निमेषमात्रेण ब्रह्मणः पात एव च । तस्य पातः प्रकृतिकः प्रलयः परिकीर्तितः
प्रलये प्राकृते चोक्ता तत्राऽदृष्टावसुन्धरा । जलप्लुतानिविश्वानिमर्वेलीनाः परात्मनि
वसुन्धरा तिरोभूता कुत्र वा सा च तिष्ठति । सृष्टेर्विधानसमयेसाऽऽविर्भूता कथंपुनः
कथम्बभूव सा धन्या मान्यासर्वाश्रयाजया । तस्याश्चजन्मकथनं वद मङ्गलकारणम्

श्रीनारायण उवाच

सर्वादिसृष्टौसर्वेषां जन्म देव्या इति श्रुतिः । आविर्भावस्तिरोभावःसर्वेषुप्रलयेषुत्र
श्रूयतां वसुधाजन्म सर्वमङ्गलकारणम् । विघ्ननिघ्नकरं पापनाशनं पुण्यवर्धनम् ॥ ६ ॥
अहो केचिद्वदन्तीति मधुकैटभमेदसा ।बभूव वसुधा धन्या तद्विरुद्धमतः शृणु ॥ ७ ॥
ऊचतुस्तौ पुरा विष्णुं तुष्टौ युद्धेन तेजसा । आवांवध्यौनयत्रोर्वीपाथसासम्वृतेतिच
तयोर्जीवनकाले न प्रत्यक्षा साऽभवत्स्फुटम् । ततो बभूव मेदश्च मरणानन्तरं तयोः
मेदिनीति च विख्यातेत्युक्तमेतन्मतं शृणु । जलधौता कृता पूर्वं वर्धिता मेदसा यतः
कथयामि ते तज्जन्म सार्थकं सर्वमङ्गलम् । पुरा श्रुतं यच्छ्रुत्युक्तं धर्मवक्त्राच्चपुष्करे
महाविराट्शरीरस्य जलस्थस्य चिरं स्फुटम् । मनो बभूवकालेनसर्वांगव्यापकंध्रुवम्
तच्च प्रविष्टं सर्वेषां तल्लोम्नां विवरेषु च । कालेन महता पश्चाद्बभूव वसुधा मुने !
प्रत्येकं प्रतिलोम्नां च कूपेषु संस्थिता सदा । आविर्भूतातिरोभूतासजलाचपुनः पुनः
आविर्भूता सृष्टिकालेतज्जलोपर्युपस्थिता । प्रलयेचतिरोभूताजलस्याऽभ्यन्तरेस्थिता
प्रतिविश्वेषु वसुधा शैलकाननसंयुता । सप्तसागरसंयुक्ता सप्तद्वीपसमन्विता ॥१६
हेमाद्रिमेरुसंयुक्ता ग्रहचन्द्रार्कसंयुता । ब्रह्मविष्णुशिवाद्यैश्चसुरैर्लोकैस्तदाज्ञया ॥
पुण्यतीर्थसमायुक्ता पुण्यभारतसंयुता । काञ्चनीभूमिसंयुक्ता सप्तस्वर्गसमन्विता ॥

पातालसप्तं तदधस्तदूर्ध्वं ब्रह्मलोककः । ध्रुवलोकश्च तत्रैव सर्वं विश्वं च तत्रवै ॥१६

एवं सर्वाणि विश्वानि पृथिव्यां निर्मितानि च ।
नश्वराणि च विश्वानि सर्वाणि कृत्रिमाणि वै ॥ २० ॥

प्रलये प्राकृते चैव ब्रह्मणश्चनिपातने । महाविराडादिसृष्टौ सृष्टः कृष्णेन चाऽऽत्मना

नित्यौ च स्थितिप्रलयौ काष्ठाकालेश्वरैः सह ।
नित्याऽधिष्ठातृदेवी सा वाराहे पूजिता सुरैः ॥ २२ ॥

मुनिभिर्मनुभिर्विप्रैर्गन्धर्वादिभिरेव च । विष्णोर्वराहरूपस्य पत्नी सा श्रुतिसम्मता

तत्पुत्रो मङ्गलो ज्ञेयो घटेशो मङ्गलात्मजः ॥

नारद उवाच

पूजिता केन रूपेण वाराहे च सुरैर्मही ॥ २४ ॥

वाराहे चैव वाराही सर्वैः सर्वाश्रया सती । मूलप्रकृतिसम्भूता पञ्चीकरणमार्गतः॥

तस्याः पूजाविधानं चाऽप्यधश्चोर्ध्वमनेकशः । मङ्गलंमङ्गलस्यापिजन्मवासं वदप्रभो!

श्रीनारायण उवाच

वाराहे च वराहश्च ब्रह्मणा संस्तुतः पुरा । उद्दधार महीं हत्वा हिरण्याक्षं रसातलात्

जले तां स्थापयामास पद्मपत्रं यथा ह्रदे । तत्रैव निर्ममे ब्रह्मा विश्वं सर्वंमनोहरम्

दृष्ट्वा तदधिदेवीं च सकामां कामुको हरिः । वाराहरूपी भगवान् कोटिसूर्यसमप्रभः

कृत्वारतिकलां सर्वां मूर्तिं च सुमनोहराम् । क्रीडां चकार रहसिदिव्यवर्षमहर्निशम्

सुखसम्भोगसंस्पर्शान्मूर्च्छां सम्प्राप सुन्दरी ।
विदग्धाया विदग्धेन सङ्गमोऽतिसुखप्रदः ॥ ३१ ॥
विष्णुस्तदङ्गसंश्लेषाद् बुबुधे न दिवानिशम् ।
वर्षान्ते चेतनाम्प्राप्य कामी तत्याज कामुकीम् ॥ ३२ ॥

पूर्वरूपं वराहं च दधार स च लीलया । पूजां चकार तां देवींध्यात्वाचधरणींसतीम्

धूपैर्दीपैश्च नैवेद्यैः सिन्दूरैरनुलेपनैः ।
वस्त्रैः पुष्पैश्च बलिभिःसम्पूज्योवाच तां हरिः ॥ ३४ ॥

श्रीभगवानुवाच

सर्वाधारा भवशुभे सर्वैःसम्पूजिता सुखम् । मुनिभिर्मनुभिर्देवैः सिद्धैश्चदानवादिभिः ·
अम्बुवाचीत्यागदिनै गृहारम्भे प्रवेशने । वापीतडागारम्भे च गृहे च कृषिकर्मणि ॥
तवपूजां करिष्यन्ति मद्वरेण सुरादयः । मूढा ये न करिष्यन्ति यास्यन्तिनरकं च ते

वसुधोवाच

वहामिसर्वं वाराहरूपेणाऽहं तवाऽऽज्ञया । लीलामात्रेण भगवन्विश्वं च सचराचरम्
मुक्तां शुक्तिं हरेरर्चां शिवलिङ्गं शिवां तथा । शङ्खं प्रदीपंयन्त्रंचमाणिक्यंहीरकंतथा
यज्ञसूत्रञ्च पुष्पञ्च पुस्तकं तुलसीदलम् । जपमालां पुष्पमालांकर्पूरं च सुवर्णकम्
गोरोचनं चन्दनं च शालग्रामजलं तथा । एतान्वोढुमशक्ताऽहं क्लिष्टा च भगवञ्छृणु

श्रीभगवानुवाच

द्रव्याण्येतानि ये मूढाअर्पयिष्यन्तिसुन्दरि ! । यास्यन्तिकालसूत्रंतेदिव्यंवर्षशतंत्वयि
इत्येवमुक्त्वा भगवान्विरराम च नारद ! । बभूव तेन गर्भेण तेजस्वी मङ्गलग्रहः ॥ ४३
पूजां चक्रुः पृथिव्याश्च तेसर्वेचाऽऽज्ञयाहरेः । कण्वशाखोक्तध्यानेनतुष्टुवुश्चस्तवेनते
ददुर्मूलेन मन्त्रेण नैवेद्यादिकमेव च । संस्तुता त्रिषु लोकेषु पूजिता सा बभूव ह ॥

नारद उवाच

किं ध्यानं स्तवनं तस्यामूलमन्त्रं च किम्वद । गूढं सर्वपुराणेषु श्रोतुं कौतुहलं मम ॥

श्रीनारायण उवाच

आदौ च पृथिवी देवी वराहेण च पूजिता । ततोहिब्रह्मणापश्चात्पूजितापृथिवीतदा

ततः सर्वैर्मुनीन्द्रैश्च मनुभिर्मानवादिभिः ।

ध्यानं च स्तवनं मन्त्रं शृणु वक्ष्यामि नारद ! ॥ ४८ ॥

ॐ ह्रीं श्रीं क्लीं वसुधायै स्वाहेत्यनेन मन्त्रेण विष्णुना पूजिता पुरा ।

श्वेतपङ्कजवर्णाभां शरच्चन्द्रनिभाननाम् ॥ ४९ ॥

चन्दनोक्षिप्तसर्वाङ्गीं रत्नभूषणभूषिताम् । रत्नाधारां रत्नगर्भां रत्नाकरसमन्विताम्
वह्निशुद्धांशुकाधानांसस्मितांवन्दितांभजे । ध्यानेनाऽनेनसादेवीसर्वैश्चपूजिताऽभवत्

स्तवनं शृणु विप्रेन्द्र! कण्वशाखोक्तमेव च ।

**श्रीनारायण उवाच**

जये ! ( जय ) जये ! जलाधारे ! जलशीले ! जलप्रदे !॥ ५२ ॥

यज्ञसूकरजाये त्वं जयं देहि जयावहे ! । मङ्गले! माङ्गलाधारे! मङ्गल्ये ! मङ्गलप्रदे ! ॥

मङ्गलार्थं मङ्गलेशे! मङ्गलं देहि मे भवे !। सर्वाधारे! च सर्वज्ञे! सर्वशक्तिसमन्विते !॥

सर्वकामप्रदे! देवि! सर्वेष्टं देहि मे भवे !।

पुण्यस्वरूपे ! पुण्यानां बीजरूपे! सनातनि ! ॥ ५५ ॥

पुण्याश्रये! पुण्यवतामालयेपुण्यदे! भवे !। सर्वसस्यालये!सर्वसस्याढ्ये ! सर्वसस्यदे!

सर्वसस्यहरे काले सर्वसस्यात्मिके! भवे !। भूमे भूमिपसर्वस्वे! भूमिपालपरायणे !॥

भूमिपानां सुखकरे! भूमिं देहि च भूमिदे!। इदं स्तोत्रं महापुण्यं प्रातरुत्थाययः पठेत्

कोटिजन्मसु स भवेद्बलवान्भूमिपेश्वरः । भूमिदानकृतं पुण्यं लभ्यते पठनाज्जनैः ॥

भूमिदानहरात्पापान्मुच्यते नाऽत्र संशयः । अम्बुवाचीभूकरणपापात्स मुच्यते ध्रुवम्

अन्यकूपे कूपखननपापात्स मुच्यते ध्रुवम् । परभूमिहरात्पापान्मुच्यते नाऽत्र संशयः

भूमौ वीर्यत्यागपापाद् भूमौ दीपादिस्थापनात् ।

पापेन मुच्यते सोऽपि स्तोत्रस्य पठनान्मुने ॥ ६२ ॥

अश्वमेधशतं पुण्यं लभते नाऽत्र संशयः । भूमिदेव्यामहास्तोत्रं सर्वकल्याणकारकम्

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यांसंहितायांनवमस्कन्धे

भूमिस्तोत्रवर्णनंनाम नवमोऽध्यायः ॥ ९ ॥

---

# दशमोऽध्यायः

## पृथिव्यांकृतापराधानांनरकफलाभिवर्णनम्

नारद उवाच

भूमिदानकृतं पुण्यं पापं तद्धरणेन च। परभूहरणात्पापं कूपे कूपखनने तथा ॥ १ ॥

अम्बुवाच्यांभूखननेवीर्यस्यत्यागएवच। दीपादिस्थापनात्पापंश्रोतुमिच्छामियत्नतः

अन्यद्वा पृथिवीजन्यं पापं यत्पृच्छते परम्। यदस्ति तत्प्रतीकारं वद वेदविदाम्वर!

श्रीनारायण उवाच

वितस्तिमात्रां भूमिंचयोददातिचभारते। सन्ध्यापूतायविप्रायसयाति शिवमन्दिरम्

भूमिंचसर्वसस्याढ्यांब्राह्मणाय ददातिच। भूमिरेणुप्रमाणाब्दमन्तेविष्णुपदेस्थितिः

ग्रामं भूमिं च धान्यञ्चब्राह्मणायददातियः। सर्वपापाद्विनिर्मुक्तौचोभौदेवीपुरस्थितौ

भूमिदानं च तत्काले यः साधुश्चानुमोदते। स च प्रयातिवैकुण्ठेमित्रगोत्रसमन्वितः

स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेत्तु यः। स तिष्ठति कालसूत्रे यावच्चन्द्रदिवाकरौ

तत्पुत्रपौत्रप्रभृतिर्भूमिर्हीनः श्रिया हतः। पुत्रहीनो दरिद्रश्च घोरं याति च रौरवम्

गवां मार्गं विनिष्कृष्य यश्च सस्यं ददातिच। दिव्यंवर्षशतंचैवकुम्भीपाकेच तिष्ठति

गोष्ठं तडागं निष्कृष्य मार्गं सस्यंददाति यः। सतिष्ठत्यसिपत्रेचयावदिन्द्राश्चतुर्दश

पञ्च पिण्डाननुद्धृत्य परकूपे च स्नाति यः। प्राप्नोति नरकं चैवस्नानंनिष्फलमेवच

कामी भूमौ च रहसि वीर्यत्यागं करोति यः। भूमिरेणुप्रमाणं च वर्षंतिष्ठतिरौरवे

अम्बुवाच्यां भूकरणं यः करोति च मानवः।
स याति कृमिदंशं च स्थितिरत्र चतुर्युगम् ॥ १४ ॥

परकीये लुप्तकूपे कूपं मूढः करोति यः। पुष्करिण्याञ्च लुप्तायांपुष्करिणींददातियः

सर्वं फलं परस्यैव तप्तकुण्डं व्रजेच्च सः। तत्र तिष्ठति सन्तप्तो यावदिन्द्राश्चतुर्दश ॥

परकीये तडागे च पङ्कमुद्धृत्यचोत्सृजेत्। रेणुप्रमाणवर्षं च ब्रह्मलोके वसेन्नरः ॥१७

पिण्डं पित्रे भूमिभर्तुर्नप्रदाय च मानवः। श्राद्धं करोति योमूढोनरकंयातिनिश्चितम्
भूमौदीपंयोऽर्पयतिसचान्धःसप्तजन्मसु। भूमौशङ्खंचसंस्थाप्यकुष्ठंजन्मान्तरेलभेत्

मुक्तां माणिक्यहीरौ च सुवर्णं च मणिं तथा।
पञ्च संस्थापयेद् भूमौ स चाऽन्धः सप्तजन्मसु॥ २०॥

शिवलिङ्गं शिवामर्चां यश्चाऽर्पयति भूतले। शतमन्वन्तरं यावत्कृमिभक्षस्स तिष्ठति
शङ्खंयन्त्रं शिलातोयं पुष्पं च तुलसीदलम्। यश्चार्पयतिभूमौचसतिष्ठेन्नरकेध्रुवम्
जपमालां पुष्पमालां कर्पूरं रोचनं तथा। यो मूढश्चार्पयेद्भूमौस याति नरकं ध्रुवम्
भूमौचन्दनकाष्ठं च रुद्राक्षं कुशमूलकम्। संस्थाप्य भूमौ नरके वसेन्मन्वतरावधि॥

पुस्तकं यज्ञसूत्रञ्च भूमौ संस्थापयेन्नरः।
न भवेद्विप्रयोनौ च तस्य जन्मान्तरे जनिः॥ २५॥

ब्रह्महत्यासमं पापमिह वै लभते ध्रुवम्। ग्रन्थियुक्तं यज्ञसूत्रं पूज्यं च सर्ववर्णकैः॥
यज्ञं कृत्वा तु यो भूमिं क्षीरेण न हि सिञ्चति। सयातितप्तभूमिंचसन्तप्तःसप्तजन्मसु
भूकम्पे ग्रहणे योहि करोति खननं भुवः। जन्मान्तरे महापापोह्यङ्गहीनो भवेद्ध्रुवम्
भवनं यत्र सर्वेषां भूमिस्तेन प्रकीर्तिता। काश्यपी कश्यपस्येयमचलास्थिररूपतः॥

विश्वम्भरा धारणाच्चाऽनन्ताऽनन्तस्वरूपतः।
पृथिवी पृथुकन्यात्वा द्विस्तृतत्वान्महामुने!॥ ३०॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायांनवमस्कन्धे
पृथिव्युपाख्यानेनरकफलप्राप्तिवर्णनंनामदशमोऽध्यायः॥ १०॥

---

# एकादशोऽध्यायः

## गङ्गोपाख्यानवर्णनम्

**नारद उवाच**

श्रुतं पृथिव्युपाख्यानमतीव सुमनोहरम् । गङ्गोपाख्यानमधुना वद वेदविदाम्वर ॥१
भारते भारतीशापात्सा जगाम सुरेश्वरी । विष्णुस्वरूपा परमा स्वयं विष्णुपदीति च
कथं कुत्र युगे केन प्रार्थिता प्रेरिता पुरा । तत्क्रमंश्रोतुमिच्छामि पापघ्नंपुण्यदं शुभम्

**श्रीनारायण उवाच**

राजराजेश्वरः श्रीमान्सगरः सूर्यवंशजः । तस्य भार्या च वैदर्भी शैव्या च द्वे मनोहरे
तत्पत्न्यामेकपुत्रश्च बभूव सुमनोहरः । असमञ्ज इति ख्यातः शैव्यायां कुलवर्धनः ॥
अन्या चाऽऽराधयामास शङ्करं पुत्रकामुकी । बभूव गर्भस्तस्याश्च हरस्य च वरेणह
गते शताब्दे पूर्णे चमांसपिण्डंसुषावसा । तद्दृष्ट्वासाशिवंध्यात्वारुरोदोच्चैःपुनः पुनः
शम्भुर्ब्राह्मणरूपेण तत्समीपं जगाम ह । चकार सविभज्यैतत्पिण्डं षष्टिसहस्रधा॥
सर्वे बभूवुः पुत्राश्च महाबलपराक्रमाः । ग्रीष्ममध्याह्नमार्तण्डप्रभामुष्टकलेवराः ॥ ९

कपिलस्य मुनेः शापाद् बभूवुर्भस्मसाच्च ते ।
राजा रुरोद तच्छ्रुत्वा जगाम गहने वने ॥ १० ॥

तपश्चकाराऽसमञ्जो गङ्गानयनकारणात् । लक्षवर्षं तपस्तप्त्वा ममार कालयोगतः
अंशुमांस्तस्य तनयो गङ्गानयनकारणात् । तपः कृत्वा लक्षवर्षं ममार कालयोगतः
भगीरथस्तस्य पुत्रो महाभागवतः सुधीः । वैष्णवो विष्णुभक्तश्च गुणवानजरामरः
तपः कृत्वा लक्षवर्षं गङ्गानयनकारणात् । ददर्श कृष्णं ग्रीष्मस्थसूर्यकोटिसमप्रभम्
द्विभुजं मुरलीहस्तं किशोरं गोपवेषिणम् । गोपालसुन्दरीरूपं भक्तानुग्रहरूपिणम्
स्वेच्छामयं परम्ब्रह्म परिपूर्णतमं प्रभुम् । ब्रह्मविष्णुशिवाद्यैश्च स्तुतंमुनिगणैर्नुतम्॥
निर्लिप्तं साक्षिरूपं च निर्गुणं प्रकृतेः परम् । ईषद्धास्यप्रसन्नास्यं भक्तानुग्रहकारणम्

वह्निशुद्धांशुकाधानं रत्नभूषणभूषितम् । तुष्टाव दृष्ट्वा नृपतिः प्रणनाम पुनः पुनः ॥
लीलया च वरं प्राप वाञ्छितं वंशतारणम् । कृत्वा च स्तवनं दिव्यं पुलकाङ्कितविग्रहः

श्रीभगवानुवाच

भारतं भारतीशापाद्गच्छशीघ्रं सुरेश्वरि ।सगरस्य सुतान्सर्वान्पूतान्कुरु ममाज्ञया

त्वत्स्पर्शवायुना पूता यास्यन्ति मम मन्दिरम् ।
बिभ्रतो मम मूर्तीश्च दिव्यस्यन्दनगामिनः ॥ २१ ॥
मत्पार्षदा भविष्यन्ति सर्वकालं निरामयाः ।
समुच्छिद्य कर्मभोगान्कृताञ्जन्मनि जन्मनि ॥ २२ ॥

कोटिजन्मार्जितं पापं भारतेयत्कृतं नृभिः । गङ्गाया वातस्पर्शेन नश्यतीति श्रुतौ श्रुतम्
स्पर्शनाद्दर्शनाद्देव्याः पुण्यं दशगुणं ततः । मौसलस्नानमात्रेण सामान्यदिवसेनृणाम्
शतकोटिजन्मपापं नश्यतीति श्रुतौ श्रुतम् । यानिकानिचपापानिब्रह्महत्यादिकानिच

जन्मसङ्ख्यार्जितान्येव कामतोऽपि कृतानि च ।
तानि सर्वाणि नश्यन्ति मौसलस्नानतो नृणाम् ॥ २६ ॥

पुण्याहस्नानतः पुण्यं वेदा नैव वदन्ति च । किञ्चिद्वदन्तितेविप्र फलमेवयथागमम्
ब्रह्मविष्णुशिवाद्याश्चसर्वं नैव वदन्ति च । सामान्यदिवसस्नानसङ्कल्पंशृणुसुन्दरि!
पुण्यं दशगुणंचैव मौसलस्नानतः परम् । ततस्त्रिंशद्गुणं पुण्यंरविसङ्क्रमणे दिने
अमायां चाऽपि तत्तुल्यं द्विगुणं दक्षिणायने । ततो दशगुणंपुण्यं नराणामुत्तरायणे
चातुर्मास्यां पौर्णमास्यामनन्तं पुण्यमेव च । अक्षयायांच तत्तुल्यंचैतद्वेदेनिरूपितम्
असङ्ख्यपुण्यफलदमेतेषुस्नानदानकम् । सामान्यदिवसस्नानाद्दानाच्छतगुणंफलम्

मन्वन्तराद्यायां तिथौ युगाद्यायां तथैव च ।
माघस्य सितसप्तम्यां भीष्माष्टम्यां तथैव च ॥ ३३ ॥

अथाप्यशोकाष्टम्यांच नवम्यां चतथाहरेः । ततोऽपिद्विगुणंपुण्यंनन्दायांतवदुर्लभम्
दशहरादशम्यां तु युगाद्यादिसमं फलम् । नन्दासमञ्च वारुण्यांमहत्पूर्वे चतुर्गुणम्
ततश्चतुर्गुणं पुण्यं द्विमहत्पूर्वकेसति । पुण्यं कोटिगुणंचैवसामान्यस्नानतोऽपि यत्

चन्द्रोपरागसमये सूर्ये दशगुणं ततः। पुण्यमर्धोदये काले ततः शतगुणं फलम्॥
इत्येवमुक्त्वा देवेशो विरराम तयोः पुरः। तमुवाच ततोगङ्गाभक्तिनम्रात्मकन्धरा॥

गङ्गोवाच

यामिचेद्भारतं नाथ! भारतीशापतःपुरा। तवाऽऽज्ञयाचराजेन्द्र! तपसाचैवसाम्प्रतम्
दास्यन्ति पापिनो मह्यं पापानि यानिकानि च। तानिमेकेननश्यन्तितमुपायं वदप्रभो
कतिकालं परिमितं स्थितिर्मे तत्र भारते। कदायास्यामि देवेश तद्विष्णोःपरमंपदम्
ममाऽन्यद्वाञ्छितं यद्यत्सर्वं जानासि सर्ववित्। सर्वान्तरात्मन्सर्वज्ञतदुपायंवदप्रभो

श्रीभगवानुवाच

जानामि वाञ्छितं गङ्गे तव सर्वसुरेश्वरि!। पतिस्ते द्रवरूपायालवणोदोभविष्यति
स ममांशस्वरूपश्च त्वंचलक्ष्मीस्वरूपिणी। विदग्धायाविदग्धेनसङ्गमोगुणवान्भुवि
यावत्यःसन्तिनद्यश्चभारत्याद्याश्चभारते। सौभाग्यास्वंचतास्वेव लवणोदस्य सागरे
अद्यप्रभृति देवेशि कलेः पञ्चसहस्रकम्। वर्ष स्थितिस्ते भारत्याः शापेनभारतेभुवि
नित्यं त्वमब्धिना सार्धं करिष्यसि रहो रतिम्।
त्वमेव रसिका देवि! रसिकेन्द्रेण संयुता॥ ४७॥
त्वास्तोष्यन्तिचस्तोत्रेणभगीरथकृतेनच। भारतस्थाजनाःसर्वेपूजयिष्यन्तिभक्तितः
कण्वशाखोक्तध्यानेन ध्यात्वा त्वा पूजयिष्यन्ति।
यः स्तौति प्रणमेन्नित्यं सोऽश्वमेधफलं लभेत्॥ ४६॥
गङ्गागङ्गेति यो ब्रूयाद्योजनानां शतैरपि। मुच्यते सर्वपापेभ्योविष्णुलोकंसगच्छति
सहस्रपापिनां स्नानाद्यत्पापं ते भविष्यति। मद्भक्तभक्तसंस्पर्शादेवतद्धिविनङ्क्ष्यति
पापिनां तु सहस्राणांशवस्पर्शेनयत्त्वयि। तन्मन्त्रोपासकस्नानात्तदघञ्चविनङ्क्ष्यति
तत्रैव त्वमधिष्ठानं करिष्यस्यघमोचनम्।
सार्धं सरिद्भिः श्रेष्ठाभिःसरस्वत्यादिभिः शुभे!॥ ५३॥
तत्तु तीर्थम्भवेत्सद्यो यत्र तद्गुणकीर्तनम्। त्वद्रेणुस्पर्शमात्रेण पूतोभवति पातकी
रेणुप्रमाणवर्षञ्च देवीलोकेवसेद्ध्रुवम्। ज्ञानेन त्वयिये मत्तया मन्नामस्मृतिपूर्वकम्॥

समुत्सृजन्तिप्राणांश्च तेगच्छन्ति हरेःपरम् । पार्षदप्रवरास्तेचभविष्यन्तिहरेश्चिरम्
लयम्प्राकृतिकंतेचद्रक्ष्यन्तिचाप्यसंख्यकम् । मृतस्यबहुपुण्येनतच्छवंत्वयिविन्यसेत
प्रयातिसचवैकुण्ठंयावदह्नःस्थितिस्त्वयि।कायव्यूहंततःकृत्वाभोजयित्वास्वकर्मकम्
तस्मैददामिसारूप्यंकरोमितंचपार्षदम् । अज्ञानीत्वज्जलस्पर्शाद्यदि प्राणान्समुत्सृजेत्

तस्मै ददामि सालोक्यं करोमि तञ्च पार्षदम् ।
अन्यत्र वा त्यजेत्प्राणांस्त्वन्नामस्मृतिपूर्वकम् ॥ ६० ॥
तस्मै ददामि सालोक्यं यावद्वै ब्रह्मणो वयः ।
अन्यत्र वा त्यजेत्प्राणांस्त्वन्नामस्मृतिपूर्वकम् ॥ ६१ ॥

तस्मैददामि सारूप्यमसंख्यंप्राकृतंलयम् । रत्नेन्द्रसारनिर्माणयानेन सह पार्षदैः ॥६२
सद्यः प्रयातिगोलोकं ममतुल्योभवेद्ध्रुवम् । तीर्थेऽप्यतीर्थेमरणेविशेषोनास्तिकश्चन
मन्मन्त्रोपासकानान्तुनित्यंनैवेद्यभोजिनाम् । पूतंकर्तुंस शक्तो हिलीलयाभुवनत्रयम्
रत्नेन्द्रसारयानेन गोलोकंसम्प्रयान्तिच । मद्भक्ताबान्धवायेषां तेऽपिपश्वादयोऽपिहि
प्रयान्ति रत्नयानेन गोलोकंचातिदुर्लभम् । यत्र यत्र स्मृतास्तेच ज्ञानेनज्ञानिनःसति

जीवन्मुक्ताश्च ते पूता मद्भक्तेः सन्निधानतः ।
इत्युक्त्वा श्रीहरिस्तांश्च प्रत्युवाच भगीरथम् ॥ ६७ ॥

स्तुहि गङ्गामिमांभक्त्यापूजाञ्चकुरुसाम्प्रतम् । भगीरथस्तांतुष्टावपूजयामासभक्तितः
कौथुमोक्तेन ध्यानेन स्तोत्रेणापि पुनः पुनः । प्रणनामच श्रीकृष्णंपरमात्मानमीश्वरम्

भगीरथश्च गङ्गा च सोऽन्तर्धानञ्चकार ह ।

नारद उवाच

केन ध्यानेन स्तोत्रेण केन पूजाक्रमेण च ॥ ७० ॥
पूजाञ्चकार नृपतिर्वद वेदविदाम्वर !।

श्रीनारायण उवाच

स्नात्वा नित्यक्रियां कृत्वा धृत्वा धौते च वाससी ॥ ७१ ॥

सम्पूज्यदेवषट्कंचसंयतो भक्तिपूर्वकम् । गणेशञ्चदिनेशं च वह्निंविष्णुं शिवंशिवाम्

सम्पूज्यदेवषट्कं च सोऽधिकारीचपूजने । गणेशं विघ्ननाशाय आरोग्यायदिवाकरम्
वह्निं शौचाय विष्णुञ्चलक्ष्म्यर्थंपूजयेन्नरः । शिवंज्ञानायज्ञानेशंशिवांच मुक्तिसिद्धये
सम्पूज्यैतांल्लभेत्प्राज्ञो विपरीतमतोऽन्यथा । दध्यावनेनध्यानेन तद्धयानंशृणु नारद!

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्त्र्यां संहितायां नवमस्कन्धे
गङ्गोपाख्यानवर्णनंनामैकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः

### कण्वशाखोक्तगङ्गाध्यानस्तोत्रादिवर्णनम्

श्रीनारायण उवाच

ध्यानञ्च कण्वशाखोक्तंसर्वपापप्रणाशनम् । श्वेतपङ्कजवर्णाभांगङ्गां पापप्रणाशिनाम्
कृष्णविग्रहसम्भूतांकृष्णतुल्याम्परामर्ताम् । वह्निशुद्धांशुकाधानांरत्नभूषणभूषिताम्
शरत्पूर्णेन्दुशतकमृष्टशोभाकरां पराम् । ईषद्धास्यप्रसन्नास्यांशश्वत्सुस्थिरयौवनाम्
नारायणप्रियां शान्तां तत्सौभाग्यसमन्विताम् ।
बिभ्रतीं कबरीभारं मालतीमाल्यसंयुतम् ॥ ४ ॥
सिन्दूरबिन्दुललितंसार्धं चन्दनबिन्दुभिः । कस्तूरीपत्रकंगण्डेनानाचित्रसमन्वितम्
पक्वबिम्बविनिन्द्याच्छचार्वोष्ठपुटमुत्तमम् । मुक्तापङ्क्तिप्रभामुष्टदन्तपङ्क्तिमनोरमम्
सुचारुवक्त्रनयनं सकटाक्षं मनोहरम् । कठिनं श्रीफलाकारं स्तनयुग्मं च बिभ्रतीम्
बृहच्छ्रोणिं सुकठिनां रम्भास्तम्भविनिन्दिताम् । स्थलपद्मप्रभामुष्टपदपद्मयुगं वरम्
रत्नपादुकसंयुक्तं कुङ्कुमाक्तं सयावकम् । देवेन्द्रमौलिमन्दारमकरन्दकणारुणम् ॥
सुरसिद्धमुनीन्द्रैश्च दत्तार्घसंयुतं सदा । तपस्विमौलिनिकरभ्रमरश्रेणिसंयुतम् ॥१०
मुक्तिप्रदं मुमुक्षूणां कामिनां सर्वभोगदम् । वरांवरेण्यां वरदां भक्तानुग्रहकारिणीम्
श्रीविष्णोः वरदात्रीञ्च भजे विष्णुपदीं सतीम् ।

इत्यनेनैव ध्यानेन ध्यात्वा त्रिपथगां शुभाम् ॥ १२ ॥
दत्त्वा सम्पूजयेद्ब्रह्मन्नुपचाराणि षोडश । आसनं पाद्यमर्घ्यञ्च स्नानीयंचाऽनुलेपनम्
धूपं दीपं च नैवेद्यं ताम्बूलं शीतलञ्जलम् । वसनं भूषणं माल्यं गन्धमाचमनीयकम्
मनोहरं सुतल्पञ्च देयान्येतानि षोडश । दत्त्वाभक्त्याच प्रणमेत्संस्तूयसम्पुटाञ्जलिः
सम्पूज्यैवम्प्रकारेण सोऽश्वमेधफलं लभेत् ।

नारद उवाच

श्रोतुमिच्छामि देवेश! लक्ष्मीकान्त! जगत्पते !॥ १६ ॥
विष्णोर्विष्णुपदीस्तोत्रं पापघ्नं पुण्यकारकम् ।

श्रीनारायण उवाच

शृणु नारद! वक्ष्यामि पापघ्नं पुण्यकारकम् ॥ १७ ॥
शिवसङ्गीतसम्मुग्धश्रीकृष्णाङ्गसमुद्भवाम् । राधाङ्गद्रवसंयुक्तां तां गङ्गांप्रणमाम्यहम्
यज्जन्म सृष्टेरादौचगोलोकेरासमण्डले । सन्निधाने शङ्करस्य तां गङ्गां प्रणमाम्यहम्
गोपैर्गोपीभिराकीर्णे शुभेराधामहोत्सवे । कार्त्तिकीपूर्णिमायाञ्चतांगङ्गांप्रणमाम्यहम्
कोटियोजनविस्तीर्णादैर्घ्येलक्षगुणाततः । समावृतायागोलोकंतांगङ्गांप्रणमाम्यहम्
षष्टिलक्षयोजना या ततो दैर्घ्ये चतुर्गुणा । समावृताया वैकुण्ठेतांगङ्गांप्रणमाम्यहम्
त्रिंशल्लक्षयोजना या दैर्घ्ये पञ्चगुणा ततः । आवृता ब्रह्मलोकेयातां गङ्गांप्रणमाम्यहम्
त्रिंशल्लक्षयोजना या दैर्घ्ये चतुर्गुणाततः । आवृता शिवलोकेयातांगङ्गांप्रणमाम्यहम्
लक्षयोजनविस्तीर्णा दैर्घ्ये सप्तगुणा ततः । आवृता ध्रुवलोकेयातांगङ्गांप्रणमाम्यहम्
लक्षयोजनविस्तीर्णादैर्घ्येपञ्चगुणा ततः । आवृताचन्द्रलोकेयातां गङ्गां प्रणमाम्यहम्
षष्टिसहस्रयोजनायादैर्घ्ये दशगुणा ततः । आवृता सूर्यलोकेया तां गङ्गांप्रणमाम्यहम्
लक्षयोजनविस्तीर्णा दैर्घ्ये पञ्चगुणा ततः । आवृतायातपोलोकेतांगङ्गांप्रणमाम्यहम्
सहस्रयोजनायामा दैर्घ्ये दशगुणाततः । आवृता जनलोकेया तां गङ्गां प्रणमाम्यहम्
दशलक्षयोजनाया दैर्घ्ये पञ्चगुणा ततः । आवृता यामहर्लोके तां गङ्गां प्रणमाम्यहम्
सहस्रयोजनायामादैर्घ्ये शतगुणा ततः । आवृता या चकैलासेतां गङ्गां प्रणमाम्यहम्

शतयोजनविस्तीर्णा दैर्घ्ये दशगुणाततः । मन्दाकिनीयेन्द्रलोकेतांगङ्गांप्रणमाम्यहम्

पाताले भोगवती चैव विस्तीर्णा दशयोजना ।

ततो दशगुणा दैर्घ्ये तां गङ्गां प्रणमाम्यहम् ॥ ३३ ॥

क्रोशैकमात्रविस्तीर्णा ततःक्षीणा च कुत्रचित् ।

क्षितौ चालकनन्दा या तां गङ्गां प्रणमाम्यहम् ॥ ३४ ॥

सत्येया क्षीरवर्णा च त्रेतायामिन्दुसन्निभा । द्वापरेचन्दनाभायातांगङ्गांप्रणमाम्यहम्

जलप्रभा कलौ या च नाऽन्यत्र पृथिवीतले ।

स्वर्गे च नित्यं क्षीराभा तां गङ्गां प्रणमाम्यहम् ॥ ३६ ॥

यत्तोयकणिकास्पर्शे पापिनांज्ञानसम्भवम् । ब्रह्महत्यादिकं पापंकोटिजन्मार्जितंदहेत्

इत्येवं कथिता ब्रह्मन्गङ्गापद्यैकविंशतिः । स्तोत्ररूपं च परमं पापघ्नं पुण्यजीवनम्

नित्यं यो हि पठेद्भक्त्या सम्पूज्य च सुरेश्वरीम् ।

सोऽश्वमेधफलं नित्यं लभते नाऽत्र संशयः ॥ ३९ ॥

अपुत्रो लभतेपुत्रंभार्याहीनोलभेत्स्त्रियम् । रोगात्प्रमुच्यतेरोगीबन्धान्मुक्तोभवेद्ध्रुवम्

अस्पष्टकीर्तिःसुयशामूर्खोभवति पण्डितः । यःपठेत्प्रातरुत्थायगङ्गास्तोत्रमिदंशुभम्

शुभं भवेच्च दुःस्वप्ने गङ्गास्नानफलं लभेत् ।

श्रीनारायण उवाच

स्तोत्रेणाऽनेन गङ्गाञ्च स्तुत्वाचैव भगीरथः ॥ ४२ ॥

जगाम तां गृहीत्वा चयत्रनष्टाश्च सागराः । वैकुण्ठंते ययुस्तूर्णंगङ्गायाःस्पर्शवायुना

भगीरथेन सा नीता तेनभागीरथीस्मृता । इत्येवंकथितं सर्वंगङ्गोपाख्यानमुत्तमम्

पुण्यदं मोक्षदं सारं किं भूयः श्रोतुमिच्छसि ।

नारद उवाच

कथं गङ्गा त्रिपथगा जाता भुवनपावनी ॥ ४५ ॥

कुत्र वा केन विधिना तत्सर्वं वद मे प्रभो ॥ तत्रस्थाश्च जना येयेतेचक्रिश्चक्रुरुत्तमम्

एतत्सर्वं तु विस्तीर्णं कृत्वा वक्तुमिहार्हसि ।

श्रीनारायण उवाच

कार्तिक्यां पूर्णिमायां तु राधायाः सुमहोत्सवः ॥ ४७ ॥

कृष्णः सम्पूज्यतांराधामुवासरासमण्डले । कृष्णेन पूजितांतां तुसम्पूज्यहृष्टमानसः
ऊषुर्ब्रह्मादयः सर्वे ऋषयः शौनकादयः । एतस्मिन्नन्तरे कृष्णसङ्गीता च सरस्वती
जगौसुन्दरतालेन वीणया च मनोहरम् । तुष्टो ब्रह्मा ददौ तस्यै रत्नेन्द्रसारहारकम्
शिवोमणीन्द्रसारं तु सर्वब्रह्माण्डदुर्लभम् । कृष्णः कौस्तुभरत्नंचसर्वरत्नात्परंवरम्
अमूल्यरत्ननिर्माणं हारसारं च राधिका । नारायणश्चभगवान्ददौ मालां मनोहराम्
अमूल्यरत्ननिर्माणं लक्ष्मीः कनककुण्डलम् । विष्णुमाया भगवतीमूलप्रकृतिरीश्वरी
दुर्गानारायणीशाना ब्रह्मभक्तिं सुदुर्लभाम् । धर्मबुद्धिं च धर्मश्च यशश्च विपुलं भवे ॥
वह्निशुद्धांशुकं वह्निर्वायुश्च मणिनूपुरान् । एतस्मिन्नन्तरेशम्भुर्ब्रह्मणाप्रेरितो मुहुः ॥

जगौ श्रीकृष्णसङ्गीतं रासोल्लाससमन्वितम् ।

मूर्च्छाम्प्रापुः सुगाः सर्वे चित्रपुत्तलिका यथा ॥ ५६ ॥

कष्टेन चेतनां प्राप्य ददृशू रासमण्डले। स्थलं सर्वं जलाकीर्णं राधाकृष्णविहीनकम्
अत्युच्चैः रुरुदुःसर्वेगोपागोप्यःसुराद्विजाः । ध्यानेनब्रह्मावुबुधेसर्वंतीर्थमभीप्सितम्
गतश्च राधया सार्धं श्रीकृष्णो द्रवतामिति । ततोब्रह्मादयःसर्वे तुष्टुवुः परमेश्वरम्
स्वमूर्तिं दर्शयविभो वाञ्छितं वरमेवनः । एतस्मिन्नन्तरेतत्र वाग्बभूवाऽशरीरिणी
तामेव शुश्रुवुःसर्वे सुव्यक्तांमधुरान्विताम् । सर्वात्माऽहमियंशक्तिर्भक्तनुग्रह विग्रहा
ममाप्यस्याश्चदेहेन कर्त्तव्यं च किमावयोः । मनवो मानवाः सर्वे मुनयश्चैव वैष्णवाः

मन्मन्त्रपूता मां द्रष्टुमागमिष्यन्ति मत्पदम् ।

मूर्तिं द्रष्टुं च सुव्यक्तां यदीच्छत सुरेश्वराः ॥ ६२ ॥

करोतुशम्भुस्तत्रैवं मदीयं वाक्यपालनम् । स्वयं विधातस्त्वंब्रह्मन्नाज्ञांकुरुजगद्गुरुम्
कर्तुं शास्त्रविशेषं च वेदाङ्गं सुमनोहरम् । अपूर्वमन्त्रनिकरैः सर्वाभीष्टफलप्रदैः ॥
स्तोत्रैश्च निकरैर्ध्यानैर्युतं पूजाविधिक्रमैः । मन्मन्त्रकवचस्तोत्रंकृत्वायत्नेनगोपनम्

भवन्ति विमुखा येन जना मां तत्करिष्यति ।

सहस्रेषु शतेष्वेको मन्मन्त्रोपासको भवेत् ॥ ६७ ॥
जना मन्मन्त्रपूताश्च गमिष्यन्ति च मत्पदम् ।
अन्यथा न भविष्यन्ति सर्वे गोलोकवासिनः ॥ ६८ ॥

निष्फलं भविता सर्वं ब्रह्माण्डं चैव ब्रह्मणः । जनाः पञ्चप्रकाराश्च युक्ताःस्रष्टुं भवे भवे पृथिवीवासिनः केचित्केचित्स्वर्गनिवासिनः । इदं कर्तुं महहादेवःकरोतिदेवसंसदि प्रतिज्ञां सुदृढांसद्यस्ततो मूर्ति च द्रक्ष्यति । इत्येवमुक्त्वा गगने विरराम सनातनः तच्छ्रुत्वा जगतां धाता तमुवाच शिवं मुदा । ब्रह्मणो वचनंश्रुत्वाज्ञानेशोज्ञानिनांवरः

गङ्गातोयं करे कृत्वा स्वीकारं च चकार सः ।
संयुक्तं विष्णुमायाया मन्त्रौघैःशास्त्रमुत्तमम् ॥ ७२ ॥

वेदसारं करिष्यामि प्रतिज्ञापालनाय च । गङ्गातोयमुपस्पृश्य मिथ्या यदि वदेज्जनः स याति कालसूत्रं च यावद्वै ब्रह्मणोवयः । इत्युक्ते शङ्करे ब्रह्मन्गोलोके सुरसंसदि आविर्बभूव श्रीकृष्णोराधयासहितस्ततः । तं सुदृष्ट्वा च संहृष्टास्तुष्टुवुःपुरुषोत्तमम् परमानन्दपूर्णाश्च चक्रुश्च पुनरुत्सवम् । कालेन शम्भुर्भगवान्मुक्तिदीपं चकार सः ॥ इत्येवं कथितं सर्वं सुगोप्यं च सुदुर्लभम् । स एव द्रवरूपा सा गङ्गागोलोकसम्भवा राधाकृष्णाङ्गसम्भूताभुक्तिमुक्तिफलप्रदा । स्थानेस्थानेस्थापितासाकृष्णेनचपरमात्मना

कृष्णस्वरूपा परमा सर्वब्रह्माण्डपूजिता ।

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायांनवमस्कन्धे गङ्गोपाख्यानं नाम द्वादशोऽध्यायः ॥ १२ ॥

---

# त्रयोदशोऽध्यायः

## गङ्गोपाख्यानवर्णनम्

नारद उवाच

कलेः पञ्चसहस्राब्दे समतीते सुरेश्वर !। क गता सा महाभाग! तन्मेव्याख्यातुमर्हसि

नारायण उवाच

भारतं भारतीशापात्समागत्येश्वरेच्छया । जगाम तत्र वैकुण्ठे शापान्ते पुनरेव सा ॥

भारती भारतं त्यक्त्वा तज्जगाम हरेः पदम् । पद्मावती च शापान्ते गङ्गा सा चैवनारद

गङ्गासरस्वतीलक्ष्मीश्चैतास्तिस्रःप्रियाहरेः । तुलसीसहिताब्रह्मंश्चतस्रःकीर्तिताःश्रुतौ

नारद उवाच

केनोपायेन सादेवीविष्णुपादाब्जसम्भवा । ब्रह्मकमण्डलुस्थाच श्रुताशिवप्रियाचसा

बभूव सा मुनिश्रेष्ठ! गङ्गा नारायणप्रिया । अहो केन प्रकारेणतन्मे व्याख्यातुमर्हसि॥

श्रीनारायण उवाच

पुरा बभूव गोलोके सा गङ्गा द्रवरूपिणी । राधाकृष्णाङ्गसम्भूतातदंशातत्स्वरूपिणी

द्रवाधिष्ठातृदेवी या रूपेणाऽप्रतिमा भुवि । नवयौवनसम्पन्ना सर्वाऽऽभरणभूषिता

शरन्मध्याह्नपद्मास्या सस्मिता सुमनोहरा । तप्तकाञ्चनवर्णाभा शरच्चन्द्रसमप्रभा ॥ ९

स्निग्धप्रभाऽतिसुस्निग्धा शुद्धसत्त्वस्वरूपिणी ।

सुपीनकठिनश्रोणिः सुनितम्बयुगम्बरा ॥ १० ॥

पीनोन्नतं सुकठिनं स्तन युग्मं सुवर्तुलम् । सुचारु नेत्रयुगलं सुकटाक्षं सुवङ्क्मिम्

वङ्क्मिंकबरीभारंमालतीमाल्यसंयुतम् । सिन्दूरबिन्दुललितं सार्धंचन्दनबिन्दुभिः

कस्तूरीपत्रिकायुक्तं गण्डयुग्मं मनोरमम् । बन्धूककुसुमाकारमधरोष्ठं च सुन्दरम् ॥

पक्वदाडिमबीजाभदन्तपङ्क्तिसमुज्ज्वलम् । वाससी वह्निशुद्धे च नीवीयुक्तेचबिभ्रती

सा सकामा कृष्णपार्श्वे समुवास सुलज्जिता ।

वाससा मुखमाच्छाद्य लोचनाभ्यां विभोर्मुखम् ॥ १५ ॥
निमेषरहिताभ्यां च पिबन्ता सततं मुदा । प्रफुल्लवदना हर्षान्नवसङ्गमलालसा ॥
मूर्च्छिता प्रभुरूपेण पुलकाङ्कितविग्रहा । एतस्मिन्नन्तरे तत्र विद्यमाना च राधिका
गोपीत्रिंशत्कोटियुक्ता चन्द्रकोटिसमप्रभा । कोपेनाऽऽरक्तपद्मास्या रक्तपङ्कजलोचना
पीताचम्पकवर्णाभा गजेन्द्रमन्दगामिनी । अमूल्यरत्ननिर्माणनानाभूषणभूषिता ॥ १९
अमूल्यरत्नखचितममूल्यं वह्निशौचकम् । पीतवस्त्रस्य युगलं नीवीयुक्तं च बिभ्रती
स्थलपद्मप्रभामुष्टं कोमलं च सुरञ्जितम् । कृष्णदत्तार्घ्यसंयुक्तंविन्यसन्ती पदाम्बुजम्
रत्नेन्द्रसारनिर्माणविमानादवरुह्य सा । सेव्यमाना च ऋषिभिः श्वेतचामरवायुना ॥
कस्तूरीबिन्दुभिर्युक्तं चन्दनेनसमन्वितम् । दीप्तदीपप्रभाकारं सिन्दूरबिन्दुशोभितम्
दधती भालमध्ये च सीमन्ताधःस्थलोज्ज्वले ।
पारिजातप्रसूनानांमालायुक्तं सुवङ्किमम् ॥ २४ ॥
सुचारुकबरीभारं कम्पयन्ती सुकम्पिता । सुचारुरागसंयुक्तमोष्ठं कम्पयती रुषा ॥
गत्वोवास कृष्णपार्श्वे रत्नसिंहासने शुभे । सखीनां च समूहैश्चपरिपूर्णाविभोःप्रिया
तांदृष्ट्वाचसमुत्तस्थौकृष्णःसादरपूर्वकम् । सम्भाष्यमधुरालापैःसस्मितश्च ससम्भ्रमः
प्रणेमुरतिसन्त्रस्ता गोपा नम्राऽऽत्मकन्धराः ।
तुष्टुवुस्ते च भक्त्या च तुष्टाव परमेश्वरः ॥ २८ ॥
उत्थाय गङ्गा सहसा स्तुतिं बहुचकार सा । कुशलं परिपप्रच्छ भीताऽतिविनयेन च
नम्रभागस्थिता त्रस्ता शुष्ककण्ठोष्ठतालुका । ध्यानेनशरणायत्ताश्रीकृष्णचरणाम्बुजे
तां हृत्पद्मस्थितां कृष्णोभीतायै चाऽभयंददौ । बभूवस्थिरचित्तासासर्वेश्वरवरेणच
ऊर्ध्वसिंहासनस्थांचराधां गङ्गाददर्शसा । सुस्निग्धांसुखदृश्यांचज्वलन्तींब्रह्मतेजसा
असंख्यब्रह्मणः कर्त्रीमादिसृष्टेःसनातनीम् । सदाद्वादशवर्षीयांकन्याऽभिनवयौवनाम्
विश्ववृन्दे निरुपमां रूपेणच गुणेन च । शान्तांकान्तामनन्तांतामाद्यन्तरहितांसतीम्
शुभां सुभद्रां सुभगां स्वामिसौभाग्यसंयुताम् ।
सौन्दर्यसुन्दरीं श्रेष्ठां सर्वासु सुन्दरीषु च ॥ ३५ ॥

कृष्णार्धाङ्गां कृष्णसमां तेजसा वयसा त्विषा ।
पूजितां च महालक्ष्मीं लक्ष्म्या लक्ष्मीश्वरेण च ॥ ३६ ॥
प्रच्छादयमानां प्रभया सभामीशस्य सुप्रभाम् ।
सखीदत्तञ्च ताम्बूलं भुक्तवन्तीञ्च दुर्लभम् ॥ ३७ ॥

अजन्यांसर्वजननींधन्यांमान्यांचमानिनीम् । कृष्णप्राणाधिदेवीञ्चप्राणप्रियतमांरमाम् दृष्ट्वा रासेश्वरीं तृप्तिं न जगाम सुरेश्वरी । निमेषरहिताभ्याञ्चलोचनाभ्यांपपौचं ताम् एतस्मिन्नन्तरे राधा जगदीशमुवाच सा । वाचा मधुरयाशान्ताविनीतासस्मितामुने

राधोवाच

केयं प्राणेश! कल्याणी सस्मिता त्वन्मुखाम्बुजम् ।
पश्यन्ती सस्मितं पार्श्वे सकामा वक्रलोचना ॥ ४१ ॥

मूर्च्छां प्राप्नोति रूपेण पुलकाङ्कितविग्रहा । वस्त्रेण मुखमाच्छाद्यनिरीक्षन्तीपुनःपुनः त्वंचापितांसंनिरीक्ष्यसकामःसस्मितःसदा । मयिजीवतिगोलोकेभूतादुर्वृत्तिरीदृशी त्वमेव चैव दुर्वृत्तं वारं वारं करोषिच । क्षमांकरोमिप्रेम्णाचस्त्रीजातिःस्निग्धमानसा संगृह्येमां प्रियामिष्टां गोलोकाद्गच्छलम्पट । अन्यथा न हितेभद्रंभविष्यतिव्रजेश्वर दृष्टस्त्वं विरजायुक्तो मयाचन्दनकानने । क्षमाकृतामया पूर्वं सखीनां वचनादहो ॥ त्वया मच्छब्दमात्रेण तिरोधानं कृतं पुरा । देहं तत्याज विरजा नदीरूपा बभूव सा कोटियोजनविस्तीर्णाततोदैर्घ्येचतुर्गुणा । अद्यापिविद्यमानासातवसत्कीर्तिरूपिणी गृहं मयि गतायां च पुनर्गत्वा तदन्तिके । उच्चै रुरोद विरजे विरजे चेति संस्मरन् तदातोयात्समुत्थायसायोगात्सिद्धयोगिनी । सालङ्कारामूर्तिमतीददौतुभ्यंचदर्शनम् ततस्तां च समाक्षिप्य वीर्याधानं कृतं त्वया । ततो बभूवुस्तस्यांचसमुद्राःसप्तएवच

दृष्टस्त्वं शोभया गोप्या युक्तश्चम्पककानने ।
सद्यो मच्छब्दमात्रेण तिरोधानं कृतं त्वया ॥ ५२ ॥

शोभा देहं परित्यज्य जगाम चन्द्रमण्डले । ततस्तस्याः शरीरंचस्निग्धंतेजोबभूवह सम्विभज्य त्वया दत्तं हृदयेनविदूयता । रत्नायकिञ्चित्स्वर्णायकिञ्चिन्मणिवरायच

किञ्चित्स्त्रीणां मुखाब्जेभ्यः किञ्चिद्राज्ञे च किञ्चन ।
किञ्चित्किसलेभ्यश्च पुष्पेभ्यश्चाऽपि किञ्चन ॥ ५५ ॥

किञ्चित्फलेभ्यःपक्वेभ्यःसस्येभ्यश्चापिकिञ्चन।नृपदेवगृहेभ्यश्चसंस्कृतेभ्यश्चकिञ्चन
किञ्चिन्नूतनपत्रेभ्योदुग्धेभ्यश्चाऽपि किञ्चन । दृष्टस्त्वं प्रभया गोप्यायुक्तोवृन्दावनेवने
सद्यो मच्छब्दमात्रेण तिरोधानंकृतं त्वया । प्रभादेहं परित्यज्य जगाम सूर्यमण्डले
ततस्तस्याः शरीरं च तीव्रं तेजो बभूव ह । सम्विभज्यत्वया दत्तं प्रेम्णाप्ररुदतापुरा
विसृष्टं चक्षुषोः कृष्ण! लज्जया मद्भयेन च । हुताशनायकिञ्चिच्च यक्षेभ्यश्चापिकिञ्चन

किञ्चित्पुरुषसिंहेभ्यो देवेभ्यश्चाऽपि किञ्चन ।
किञ्चिद्विष्णुजनेभ्यश्च नागेभ्योऽपि च किञ्चन ॥ ६१ ॥
ब्राह्मणेभ्यो मुनिभ्यश्च तपस्विभ्यश्च किञ्चन ।
स्त्रीभ्यः सौभाग्ययुक्ताभ्यो यशस्विभ्यश्च किञ्चन ॥ ६२ ॥

तत्तु दत्त्वा चसर्वेभ्यःपूर्वंप्ररुदितंत्वया । शान्तिगोप्यायुतस्त्वंचदृष्टोऽसिरासमण्डले
वसन्तेपुष्पशय्यायां माल्यवांश्चन्दनोक्षितः । रत्नप्रदीपैर्युक्ते च रत्ननिर्माणमन्दिरे॥
रत्नभूषणभूषाढ्यो रत्नभूषितया सह । तया दत्तं च च ताम्बूलं भुक्तवांश्च पुराविभो
सद्यो मच्छब्दमात्रेणतिरोधानंकृतंत्वया । शान्तिर्देहंपरित्यज्यभियालीनात्वयिप्रभो
ततस्तस्याः शरीरञ्च गुण श्रेष्ठं बभूव ह । सम्विभज्य त्वयादत्तं प्रेम्णा प्ररुदतापुरा
विश्वेतुविपिनकिञ्चिद्ब्रह्मणेचमयिप्रभो । शुद्धसत्त्वस्वरूपायैकिञ्चिल्लक्ष्म्यैपुराविभो

त्वन्मन्त्रोपासकेभ्यश्च शाक्तेभ्यश्चापि किञ्चन ।
तपस्विभ्यश्च धर्माय धर्मिष्ठेभ्यश्च किञ्चन ॥ ६६ ॥

मया पूर्वं च त्वं दृष्टो गोप्या च क्षमया सह । सुवेषयुक्तोमालावान्गन्धचन्दनचर्चितः
रत्नभूषितया गन्धचन्दनोक्षितया सह । सुखेन मूर्च्छितस्तल्पे पुष्पचन्दनचर्चिते ॥
श्लिष्टो निद्रितया सद्यः सुखेन नवसङ्गमात् । मयाप्रबोधिता साचभवांश्चस्मरणंकुरु
गृहीतं पीतवस्त्रञ्च मुरली च मनोहरा । वनमालाकौस्तुभश्चाप्यमूल्यं रत्नकुण्डलम् ॥
पश्चात्प्रदत्तं प्रेम्णा च सखीनां वचनादहो । लज्जया कृष्णवर्णोऽभूद्भुक्त्वापापेनयःप्रभो

क्षमा देहं परित्यज्य लज्जया पृथिवीं गता। ततस्तस्याः शरीरञ्च गुणश्रेष्ठं बभूवह
सम्विभज्य त्वया दत्तं प्रेम्णाप्रहृतापुनः। किञ्चिद्दत्तं विष्णवेचवैष्णवेभ्यश्चकिञ्चन
धार्म्मिकेभ्यश्चधर्मायदुर्बलेभ्यश्चकिञ्चन। तपस्विभ्योऽपिदेवेभ्यःपण्डितेभ्यश्चकिञ्चन
एतत्ते कथितं सर्वं किं भूयःश्रोतुमिच्छसि। त्वद्गुणं चैत्र बहुशोनजानामिपरंप्रभो
इत्येवमुक्त्वा साराधारक्तपङ्कजलोचना। गङ्गांवक्तुंसमारेभेनम्रास्यांलज्जितांसतीम्
गङ्गा रहस्यं विज्ञाय योगेन सिद्धयोगिनी। तिरोभूय सभामध्येस्वजलं प्रविवेशसा
राधा योगेनविज्ञायसर्वत्राऽवस्थिताञ्च ताम्। पानंकर्तुंसमारेभेगण्डूषात्सिद्धयोगिनी
गङ्गा रहस्यं विज्ञाय योगेन सिद्धयोगिनी। श्रीकृष्णचरणाम्भोजे विवेशशरणं ययौ
गोलोके सा च वैकुण्ठे ब्रह्मलोकादिके तथा। ददर्श राधा सर्वत्र नैव गङ्गां ददर्श सा

सर्वत्र जलशून्यं च शुष्कपङ्कञ्च गोलकम्।
जलजन्तुसमूहैश्च मृतदेहैः समन्वितम् ॥ ८४ ॥

ब्रह्मविष्णुशिवानन्तधर्मेन्द्रेन्दुदिवाकराः। मनवोमुनयः सर्वे देवसिद्धतपस्विनः॥८५
गोलोकञ्च समाजग्मुः शुष्ककण्ठोष्ठतालुकाः। सर्वे प्रणेमुर्गोविन्दं सर्वेशंप्रकृतेःपरम्
वरं वरेण्यं वरदं वरिष्ठं वरकारणम्। गोपिकागोपवृन्दानां सर्वेषां प्रवरं प्रभुम् ॥
निरीहं च निराकारंनिर्लिप्तं च निराश्रयम्। निर्गुणञ्च निरुत्साहंनिर्विकारंनिरञ्जनम्
स्वेच्छामयंचसाकारं भक्तानुग्रहकारकम्। सत्त्वस्वरूप सत्यंशंसाक्षिरूपसनातनम्
परं परेशं परमं परमात्मामनीश्वरम्। प्रणम्य तुष्टुवुः सर्वे भक्तिनम्रात्मकन्धराः ॥
सगद्गदाः साश्रुनेत्राः पुलकाङ्कितविग्रहाः। सर्वे संस्तूय सर्वेशं भगवन्तं परात्परम् ॥
ज्योतिर्मयं परं ब्रह्म सर्वकारणकारणम्। अमूल्यरत्ननिर्माणचित्रसिंहासनस्थितम्
सेव्यमानं च गोपालैः श्वेतचामरवायुना। गोपालिकानृत्यगीतं पश्यन्तंसस्मितंमुदा

प्राणाधिकप्रियतमाराधावक्षःस्थलस्थितम्।
तया प्रदत्तं ताम्बूलं भुक्तवन्तं सुवासितम् ॥ ९४ ॥

परिपूर्णतमं रासे ददृशुश्च सुरेश्वरम्। मुनयोमानवाः सिद्धास्तपसा च तपस्विनः
प्रहृष्टमनसः सर्वे जग्मुः परमविस्मयम्। परस्परंस मालोच्य प्रोचुस्तेच चतुर्मुखम्

निवेदितंजगन्नाथंस्वाभिप्रायमभीप्सितम् । ब्रह्मातद्वचनंश्रुत्वाविष्णुंकृत्वास्वदक्षिणे
वामतो वामदेवञ्च जगाम कृष्णसन्निधिम् । परमानन्दयुक्तश्च परमानन्दरूपिणीम्
सर्वं कृष्णमयं धाता ददर्श रासमण्डले । सर्वं समानवेषञ्च समानासनसंस्थितम् ॥
द्विभुजं मुरलीहस्तं वनमालाविभूषितम् । मयूरपिच्छचूडं च कौस्तुभेनविराजितम्
अतीव कमनीयं च सुन्दरं शान्तविग्रहम् । गुणभूषणरूपेणतेजसावयसा त्विषा ॥
परिपूर्णतमं सर्वं सर्वैश्वर्यसमन्वितम् । किं सेव्यं सेवकं किं वा दृष्ट्वा निर्वक्तुमक्षमः
क्षणं तेजः स्वरूपं च रूपं तत्र स्थितं क्षणम् । निराकारंचसाकारंददर्शद्विविधंक्षणम्

एकमेव क्षणं कृष्णं राधया रहितं परम् ।
प्रत्येकासनसंस्थञ्च तया सार्धं च तत्क्षणम् ॥ १०४ ॥

राधारूपधरं कृष्णं कृष्णरूपं कलत्रकम् । किं स्त्रीरूपं च पुरुषं विधाता ध्यातुमक्षमः
हृत्पद्मस्थं श्रीकृष्णं ध्यात्वा ध्यानेन चक्षुषा चकार स्तवनं भक्त्या परिहारमनेकधा
ततः स्वचक्षुरुन्मील्य पुनश्च तदनुज्ञया । ददर्श कृष्णमेकं च राधावक्षःस्थलस्थितम्
स्वपार्षदैः परिवृतं गोपीमण्डलमण्डितम् । पुनः प्रणेमुस्तं दृष्ट्वा तुष्टुवुः परमेश्वरम्
तदभिप्रायमाज्ञाय तानुवाच रमेश्वरः । सर्वात्मा स च सर्वज्ञः सर्वेशः सर्वभावनः ॥

श्रीभगवानुवाच

आगच्छ कुशलं ब्रह्मन्नागच्छ कमलापते ! इहागच्छ महादेव ! शश्वत्कुशलमस्तु वः
आगता हि महाभागा गङ्गानयनकारणात् । गङ्गा च चरणाम्भोजे भयेन शरणं गता
राधेमां पातुमिच्छन्तीदृष्ट्वा मत्सन्निधानतः । दास्यामीमांचभवतांयूयकुरुतनिर्भयाम्

श्रीकृष्णस्य वचः श्रुत्वा सस्मितः कमलोद्भवः ।
तुष्टाव राधामाराध्यां श्रीकृष्णपरिपूजिताम् ॥ ११३ ॥

वक्त्रैश्चतुर्भिः संस्तूय भक्तिनम्रात्मकन्धरः । धाता चतुर्णां वेदानामुवाच चतुराननः

चतुरानन उवाच

गङ्गा त्वदङ्गसम्भूता प्रभोश्च रासमण्डले । युवयोर्द्रवरूपा सा मुग्धयोः शङ्करस्वनात्
कृष्णांशा च त्वदंशाचत्वत्कन्यासदृशीप्रिया । त्वन्मन्त्रग्रहणंकृत्वाकरोतुतवपूजनम्

भविष्यतिपतिस्तस्यावैकुण्ठेशश्चतुर्भुजः । भूस्थायाकलयातस्याःपतिर्लवणवारिधिः
गोलोकस्था च या गङ्गा सर्वत्रस्था तथाऽम्बिके ।
तदम्बिका त्वं देवेशी सर्वदा सा त्वदात्मजा ॥ ११८ ॥
ब्रह्मणो वचनं श्रुत्वा स्वीचकारच सस्मिता । बहिर्बभूवसाकृष्णपादाङ्गुष्ठनखाग्रतः
तत्रैव सत्कृता शान्ता तस्थौ तेषां च मध्यतः । उवासतोयादुत्थायतदधिष्ठातृदेवता
तत्तोयं ब्रह्मणाकिञ्चित्स्थापितं चकमण्डलौ । किञ्चिद्दधारशिरसिचन्द्रार्धकृतशेखरः
गङ्गायैराधिकामन्त्रं प्रददौ कमलोद्भवः । तत्स्तोत्रं कवचं पूजां विधानं ध्यानमेवच
सर्वं तत्सामवेदोक्तं पुरश्चर्याक्रमं तथा । गङ्गा तामेव सम्पूज्य वैकुण्ठं प्रययौ सह ॥
लक्ष्मी सरस्वती गङ्गा तुलसी विश्वपावनी । एतानारायणस्यैव चतस्रोयोषितोमुने
अथ तं सस्मितःकृष्णोब्रह्माणंसमुवाचसः । सर्वकालस्यवृत्तान्तंदुर्बोधमविपश्चितम्

श्रीकृष्ण उवाच

गृहाण गङ्गांहेब्रह्मन्! हेविष्णो! हेमहेश्वर !। शृणुकालस्य वृत्तान्तं मत्तोब्रह्मन्निशामय
यूयं च येऽन्ये देवाश्च मुनयो मनवस्तथा । सिद्धा यशस्विनश्चैवये येऽत्रैवसमागताः
एते जीवन्ति गोलोके कालचक्रविवर्जिते । जलप्लुते सर्वविश्वंजातंकल्पक्षयोऽधुना
ब्रह्माद्यायेऽन्यविश्वस्थास्तेविलीनाऽधुना मयि । वैकुण्ठं च विनासर्वंजलमग्नंचपद्मज
गत्वा सृष्टिं कुरु पुनर्ब्रह्मलोकादिकं भवम् ।
स्वं ब्रह्माण्डंविरचयपश्चाद्गङ्गा प्रयास्यति ॥ १३० ॥
एवमन्येषु विश्वेषु सृष्टौ ब्रह्मादिकम्पुनः । करोम्यहं पुनः सृष्टिं गच्छशीघ्रं सुरैः सह
गतो बहुतरः कालो युष्माकंचचतुर्मुखाः । गताःकतिविधास्तेचभविष्यन्तिचवेधसः
इत्युक्त्वाराधिकानाथो जगामाऽन्तःपुरे मुने । देवा गत्वापुनः सृष्टिं चक्रुरेवप्रयत्नतः
गोलोके च स्थितागङ्गा वैकुण्ठे शिवलोकके ।
ब्रह्मलोके स्थिताऽन्यत्र यत्रयत्र पुरः स्थितः ॥ १३४ ॥
तत्रैव सा गता गङ्गा चाज्ञयापरमात्मनः । निर्गताविष्णुपादाब्जात्तेनविष्णुपदीस्मृता
इत्येवं कथितं ब्रह्मन्गङ्गोपाख्यानमुत्तमम् ।

सुखदं मोक्षदं सारं किं भूयः श्रोतुमिच्छसि ॥ १३६॥
इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायांनवमस्कन्धे
गङ्गोपाख्यानं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

## चतुर्दशोऽध्यायः

### कृष्णेनगङ्गाविवाहवर्णनम्

नारद उवाच

लक्ष्मी सरस्वती गङ्गा तुलसी विश्वपावनी । एतानारायणस्यैव चतस्रश्चप्रियाइति
गङ्गा जगाम वैकुण्ठमिदमेव श्रुतं मया । कथं सा तस्य पत्नी च बभूवेति चनःश्रुतम्

श्रीनारायण उवाच

गङ्गाजगामवैकुण्ठं तत्पश्चाज्जगता विधिः । गत्वोवाच तया सार्धंप्रणम्यजगदीश्वरम्

ब्रह्मोवाच

राधाकृष्णाङ्गसम्भूता या देवी द्रवरूपिणी । नवयौवनसम्पन्ना सुशीला सुन्दरी वरा
शुद्धसत्त्वस्वरूपा च क्रोधाऽहङ्कारवर्जिता । तदङ्गसम्भवा नाऽन्यं वृणोतीयं चतंविना
तत्राऽतिमानिनी राधासा चतेजस्विनीवरा । समुद्यक्तापातुमिमांभीतेयंबुद्धिपूर्वकम्
विवेश चरणाम्भोजे कृष्णस्य परमात्मनः । सर्वत्र गोलकं शुष्कं दृष्ट्वाऽहमगमं तदा
गोलोके यत्र कृष्णश्च सर्ववृत्तान्तप्राप्तये । सर्वान्तरात्मासर्वेषाञ्ज्ञात्वाऽऽभिप्रायमेवच
बहिश्चकार गङ्गाञ्च पादाङ्गुष्ठनखाग्रतः । दत्त्वाऽस्यैराधिकामन्त्रंपूरयित्वाचगोलकम्
प्रणम्य तां च राधेशंगृहीत्वाऽत्रागमं प्रभो !। गान्धर्वेणविवाहेन गृहाणेमांसुरेश्वरीम्
सुरेश्वरेषु रसिको रसिकेयं समागता । त्वं रत्नंपुंसु देवेश! स्त्रीरत्नं स्त्रीष्वियं सती
विदग्धायाविदग्धेनसङ्गमोगुणवान्भवेत् । उपस्थितांस्वयंकन्यांनगृह्णातीहयः पुमान्
तं विहाय महालक्ष्मी रुष्टा याति न संशयः ।

यो भवेत्पण्डितः सोऽपि प्रकृतिं नाऽवमन्यते ॥ १३ ॥

सर्वे प्राकृतिकाः पुंसः कामिन्य प्रकृतेः कलाः । त्वमेव भगवान्नाथोनिर्गुणःप्रकृतेःपरः अर्धाङ्गं द्विभुजः कृष्णो योऽर्धाङ्गेनचतुर्भुजः । कृष्णवामाङ्गसम्भूताबभूव राधिकापुरा दक्षिणांशः स्वयंसाचवामांशःकमलातथा । तेनेयं त्वां वृणोत्येवयतस्त्वद्देहसम्भवा एकाङ्गं चैव स्त्रीपुंसोर्यथा प्रकृतिपूरुषौ । इत्येवमुक्त्वाधाता तां तं समर्प्य जगामसः गान्धर्वेणविवाहेन तां जग्राहहरिःस्वयम् । नारायणः करं धृत्वा पुष्पचन्दनचर्चितम् रेमेरमापतिस्तत्र गङ्गया सहितो मुदा । गङ्गा पृथ्वीं गतायासा स्वस्थानं पुनरागता निर्गताविष्णुपादाब्जात्तेनविष्णुपदीतिच । मूर्च्छासम्प्रापसादेवी नवसङ्गमलीलया रसिका सुखसम्भोगाद्रसिकेश्वरसंयुता । तां दृष्ट्वादुःखिता वाणीपद्मयावर्जिताऽपिच

नित्यमीर्ष्यति तां वाणी न च गङ्गा सरस्वतीम् ।
गङ्गा शशाप कोपेन भारते च हरिप्रिया ॥ २२ ॥

गङ्गया सह तस्यैव तिस्रो भार्यारमापतेः ।। सार्धं तुलस्यापश्चाच्चचतस्रश्चाऽभवन्मुने

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्त्र्यां संहितायां नवमस्कन्धे
गङ्गायाःकृष्णपत्नीत्ववर्णनंनामचतुर्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः

## तुलस्याआख्यानवर्णनम्

### नारद उवाच

नारायणप्रिया साध्वी कथंसाचबभूवह । तुलसी कुत्र सम्भूता का वासापूर्वजन्मनि कस्यवासाकुले जाताकस्यकन्याकुलेसती । केनवातपसा सा च सम्प्राप्ताप्रकृतेःपरम् निर्विकारं निरीहञ्च सर्वविश्वस्वरूपकम् । नारायणं परं ब्रह्म परमेश्वरमीश्वरम् ॥ ३॥ सर्वाराध्यञ्च सर्वेशं सर्वज्ञंसर्वकारणम् । सर्वाधारं सर्वरूपं सर्वेषां परिपालकम्

कथमेतादृशी देवी वृक्षत्वं समवाप ह । कथं साऽप्यसुरग्रस्ता सम्बभूव तपस्विनी॥
सुस्निग्धं मे मनो लोलं प्रेरयन्मां मुहुर्मुहुः । छेत्तुमर्हसि सन्देहं सर्वसन्देहभञ्जन !॥६

नारायण उवाच

मनुश्चदक्षसावर्णिःपुण्यवान्वैष्णवःशुचिः । यशस्वी कीर्तिमांश्चैवविष्णोरंशसमुद्भवः
तत्पुत्रो ब्रह्मसावर्णिर्धर्मिष्ठोवैष्णवःशुचिः । तत्पुत्रोधर्मसावर्णिर्वैष्णवश्चजितेन्द्रियः
तत्पुत्रो रुद्रसावर्णिर्भक्तिमान्विजितेन्द्रियः । तत्पुत्रो देवसावर्णिर्विष्णुव्रतपरायणः
तत्पुत्र इन्द्रसावर्णिर्महाविष्णुपरायणः । वृषध्वजश्च तत्पुत्रो वृषध्वजपरायणः ॥
यस्याऽऽश्रमे स्वयंशम्भुरासीद्देवयुगत्रयम् । पुत्रादपिपरःस्नेहोनृपेतस्मिञ्छिवस्यच
न च नारायणंमेने न लक्ष्मीं न सरस्वतीम् । पूजां च सर्वदेवानां दूरीभूताश्चकारसः
भाद्रे मासि महालक्ष्मीपूजां मत्तो बभञ्जह । तथामाघीयपञ्चम्यां विस्तृतांसर्वदैवतैः
पापः सरस्वतीपूजां दूरीभूताश्चकार सः । यज्ञंचविष्णुपूजांच निन्दन्तं तं दिवाकरः
चुकोप देवो भूपेन्द्रं शशापशिवकारणात् । भ्रष्टश्रीस्त्वंच भवेति तं शशापदिवाकरः
शूलं गृहीत्वा तं सूर्यमधावच्छङ्करःस्वयम् । पित्रा सार्द्धं दिनेशश्च ब्रह्माणंशरणंययौ
शिवस्त्रिशूलहस्तश्च ब्रह्मलोकं ययौक्रुधा । ब्रह्मा सूर्यम्पुरस्कृत्य वैकुण्ठञ्च ययौभिया
ब्रह्मकश्यपमार्तण्डाः सन्त्रस्ता शुष्कतालुकाः । नारायणञ्चसर्वेशं ते ययुःशरणं भिया
मूर्ध्ना प्रणेमुस्ते गत्वा तुष्टुवुश्च पुनः पुनः । सर्वं निवेदनं चक्रुर्भयस्य कारणं हरौ
नारायणश्च कृपया तेभ्यश्च ह्यभयं ददौ । स्थिरा भवत हे भीताभयंकिंवमयिस्थिते

स्मरन्ति ये यत्र तत्र मां विपत्तौ भयान्विताः ।
तांस्तत्र गत्वा रक्षामि चक्रहस्तस्त्वरान्वितः ॥ २१ ॥

पाताऽहं जगतां देवाः कर्ताच सततं सदा । स्रष्टाच ब्रह्मरूपेण संहर्ता शिवरूपतः ॥
शिवोऽहंत्वमहञ्चापिसूर्योऽहंत्रिगुणात्मकः । विधायनानारूपञ्च करोमिसृष्टिपालनम्
यूयं गच्छत भद्रं वोभविष्यतिभयंकुतः । अद्यप्रभृतिमद्वरेण भयं वो नास्तिशङ्करात्
सर्वेशो वैसभगवाञ्छंकरश्च सताम्पतिः । भक्ताधीनश्चभक्तानां भक्तात्मा भक्तवत्सलः
सुदर्शनः शिवश्चैव मम प्राणाधिकः प्रियः । ब्रह्माण्डेषु न तेजस्वी हे ब्रह्मन्नयोः परः

शक्तः स्रष्टुं महादेवः सूर्यकोटिश्चलीलया । कोटिश्च ब्रह्मणामेवंनासाध्यंशूलिनःप्रभोः

बाह्यज्ञानं नैव किञ्चिद्ध्यायते मां दिवानिशम् ।

मन्मन्त्रान्मद्गुणान्भक्त्या पञ्चवक्त्रेण गायति ॥ २८ ॥

अहमेवंचिन्तयामितत्कल्याणंदिवानिशम । यथात्वमां प्रपद्यन्ते तांस्तथैवभजाम्यहम्

शिवस्वरूपोभगवाञ्छिवाधिष्ठातृदेवता । शिवं भवति तस्माच्च शिवं तेन विदुर्बुधाः

एतस्मिन्नन्तरे तत्र जगाम शङ्करः स्थितः । शूलहस्तो वृषारूढो रक्तपङ्कजलोचनः ॥

अवरुह्यवृषात्तूर्णंभक्तिनम्रात्मकन्धरः । ननाम भक्त्या तं शान्तं लक्ष्मीकान्तंपरात्परम्

रत्नसिंहासनस्थं च रत्नालङ्कारभूषितम् । किरीटिनं कुण्डलिनं चक्रिणं वनमालिनम्

नवीननीरदश्यामं सुन्दरञ्च चतुर्भुजम् । चतुर्भुजैः सेवितं च श्वेतचामरवायुना ॥

चन्दनोक्षितसर्वाङ्गं भूषितं पीतवाससम् । लक्ष्मीप्रदत्तताम्बूलं भुक्तवन्तञ्च नारद !॥

विद्याधरीनृत्यगीतं पश्यन्तं सस्मितंसदा । ईश्वरं परमात्मानं भक्तानुग्रहविग्रहम् ॥

तं ननाम महादेवो ब्रह्मणा नमितश्च सः । ननाम सूर्यो भक्त्या च संत्रस्तश्चन्द्रशेखरम्

कश्यपश्च महाभक्त्या तुष्टाव च ननाम च । शिवः संस्तूय सर्वेशं समुवास सुखासने

सुखासने सुखासीनं विश्रान्तं चन्द्रशेखरम् ।

श्वेतचामरवातेन सेवितं विष्णुपार्षदैः ॥ ३९ ॥

पीयूषतुल्यमधुरं वचनं सुमनोहरम् ।

विष्णुरुवाच

आगतोऽसि कथं चाऽत्र वद कोपस्य कारणम् ॥ ४० ॥

महादेव उवाच

वृषध्वजश्च मद्भक्तो मम प्राणाधिकप्रियम् । सूर्यः शशाप इति मे प्रकोपस्यतुकारणम्

पुत्रवत्सलशोकेन सूर्यं हन्तुं समुद्यतः । स ब्रह्माणं प्रपन्नश्च सूर्यश्च स विधिस्त्वयि

त्वयि ये शरणापन्नाध्यानेनवचसाऽपिवा । निरापदोविशङ्कास्ते जरामृत्युश्चतैर्जितः

प्रत्यक्षं शरणापन्नास्तत्फलं किं वदामि भोः । हरिस्मृतिश्चाभयदा सर्वमङ्गलदासदा

किं मे भक्तस्य भविता तन्मे ब्रूहि जगत्प्रभो !।

श्रीहतस्याऽस्य मूढस्य सूर्यशापेन हेतुना ॥ ४५ ॥

विष्णुरुवाच

कालोऽतियातो दैवेन युगानामेकविंशतिः । वैकुण्ठंवटिकार्थेनशीघ्रंगच्छत्वमालयम्

वृषध्वजो मृतः कालाद्दुर्निवार्यात्सुदारुणात् ।

रथध्वजश्च तत्पुत्रो मृतः सोऽपि श्रिया हतः ॥ ४७ ॥

तत्पुत्रौ च महाभागौ धर्मध्वजकुशध्वजौ । हतश्रियौसूर्यशापात्स्मृतौपरमवैष्णवौ

राज्यभ्रष्टौ श्रियाभ्रष्टौ कमलातपसारतौ । तयोश्च भार्ययोर्लक्ष्मीःकलयाचभविष्यति

सम्पद्युक्तौतदा तौ च नृपश्रेष्ठौभविष्यतः । मृतस्ते सेवकःशम्भोगच्छयूयञ्चगच्छत

इत्युक्त्वा च सलक्ष्मीकःसभातोऽभ्यन्तरङ्गतः । देवाजग्मुःसम्प्रहृष्टाःस्वाश्रमंपरमंमुदा

शिवश्च तपसे शीघ्रं परिपूर्णतमो ययौ ॥ ५२ ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे नारायण-
नारदसम्वादे शक्तिप्रादुर्भावोनाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

## षोडशोऽध्यायः

### सीताचरित्रेरामवृत्तवर्णनम्

श्रीनारायण उवाच

लक्ष्मीं तौ च समाराध्यचोग्रेणतपसामुने !। वरमिष्टञ्चप्रत्येकं सम्प्रापतुरभीप्सितम्

महालक्ष्मीवरेणैव तौ पृथ्वीशौबभूवतुः । पुण्यवन्तौ पुत्रवन्तौ धर्मध्वजकुशध्वजौ

कुशध्वजस्य पत्नीचदेवीमालावतीसती । सा सुषावचकालेन कमलांशांसुतांसतीम्

सा च भूयिष्ठकालेन ज्ञानयुक्ता बभूव ह । कृत्वावेदध्वनिम्पष्टमुत्तस्थौसूतिकागृहात्

वेदध्वनिं सा चकार जातमात्रेणकन्यका । तस्मात्तां चवेदवतींप्रवदन्ति मनीषिणः

जातमात्रेणसुस्नाता जगाम तपसे वनम् । सर्वैर्निषिद्धायत्नेन नारायणपरायणा ॥

एकमन्वन्तरं चैव पुष्करे च तपस्विनी । अत्युग्रां च तपस्यां चलीलयाहिचकारसा
तथाऽपिपुष्टा न क्लिष्टा नवयौवनसंयुता । शुश्राव सा च सहसा सुवाचमशरीरिणीम्
जन्मान्तरे च ते भर्ता भविष्यति हरिः स्वयम् ।
ब्रह्मादिभिर्दुराराध्यं पतिं लप्स्यसि सुन्दरि ॥ ६ ॥
इतिश्रुत्वाच सा हृष्टा चकार ह पुनस्तपः । अतीवनिर्जनस्थाने पर्वते गन्धमादने ॥
तत्रैव सुचिरं तप्त्वा विश्वस्य समुवास सा । ददर्श पुरतस्तत्र रावणं दुर्निवारणम्
दृष्ट्वा साऽतिथिभक्त्याचपाद्यंतस्मैददौकिल । सुस्वादभूतंचफलंजलंचापिसुशीतलम्
तच्च भुक्त्वा स पापिष्ठश्चोवासतत्समीपतः । चकारप्रश्नमितिताकात्वंकल्याणिवर्तसे
तां दृष्ट्वा स वरारोहां पीनश्रोणिपयोधराम् ।
शरत्पद्मोत्सवास्यां च सस्मितां सुदतीं सतीम् ॥ १४ ॥
मूर्च्छामवाप कृपणः कामबाणप्रपीडितः । स करेण समाकृष्यशृङ्गारंकर्तुमुद्यतः ॥
सती चुकोप दृष्ट्वा त स्तम्भितं च चकार ह ।
स जडो हस्तपादैश्च किञ्चिद्वक्तुं न च क्षमः ॥ १६ ॥
तुष्टाव मनसा देवीं प्रययौ पद्मलोचनाम् । सा तुष्टा तस्यस्तवनंसुकृतंचचकार ह
सा शशाप मदर्थे त्वं विनङ्क्ष्यसि सबान्धवः ।
स्पृष्टाऽहं च त्वया कामाद् बलं चाप्यवलोकय ॥ १८ ॥
इत्युक्त्वा सा च योगेन देहत्यागञ्चकार सा । गङ्गायांतांवसंन्यस्यस्वगृहंरावणोययौ
अहोकिमद्भुतंदृष्टं किंकृतंवाऽनयाऽधुना । इतिसञ्चिन्त्यसञ्चिन्त्य विललाप पुनः पुनः
सा च कालान्तरे साध्वी बभूव जनकात्मजा ।
सीतादेवीति विख्याता यदर्थे रावणो हतः ॥ २१ ॥
महातपस्विनी सा च तपसा पूर्वजन्मतः । लेभे रामञ्च भर्तारं परिपूर्णतमं हरिम् ॥
सम्प्राप तपसाऽऽराध्यं दुराराध्यं जगत्पतिम् । सारमासुचिरंरेमेरामेण सह सुन्दरी
जातिस्मरा न स्मरति तपसश्च क्लमं पुरा । सुखेनतज्जहौसर्वंदुःखंचापि सुखं फले ॥
नानाप्रकारविभवं चकार सुचिरं सती । सम्प्राप्य सुकुमारंतमतीवनवयौवना ॥२५॥

गुणिनं रसिकं शान्तं कान्तं देवमनुत्तमम् ।
स्त्रीणां मनोज्ञं रुचिरं तथा लेभे यथेप्सितम् ॥ २६ ॥

पितुः सत्यपालनार्थं सत्यसन्धो रघूद्वहः । जगाम काननंपश्चात्कालेन च बलीयसा
तस्थौ समुद्रनिकटे सीतया लक्ष्मणेन च । ददर्श तत्र वह्निश्च विप्ररूपधरं हरिः ॥
रामश्च दुःखितं दृष्ट्वा स च दुःखी बभूव ह । उवाचकिञ्चित्सत्येष्टं सत्यंसत्यपरायणः

द्विज उवाच

भगवञ्छ्रूयतां राम कालोऽयं यदुपस्थितः । सीताहरणकालोऽयं तवैवसमुपस्थितः
दैवञ्च दुर्निवार्यञ्च न च दैवात्परोबली । जगत्प्रसूं मयिन्यस्य छायांरक्षान्तिकेऽधुना
दास्यामिसीतां तुभ्यञ्च परीक्षासमये पुनः । देवैःप्रस्थापितोऽहञ्चनचविप्रोहुताशनः
रामस्तद्वचनं श्रुत्वा न प्रकाश्य च लक्ष्मणम् । स्वीकारंवचसश्चक्रेहृदयेन विदूयता
वह्नियोगेनसीतायाः मायासीतां चकार ह । तत्तुल्यगुणसर्वाङ्गीं ददौ रामाय नारद !

सीतां गृहीत्वा स ययौ गोप्यं वक्तुं निषिध्य च ।
लक्ष्मणो नैव बुबुधे गोप्यमन्यस्य का कथा ॥ ३० ॥

एतस्मिन्नन्तरे रामो ददर्शकानकं मृगम् । सीता तं प्रेरयामास तदर्थे यत्नपूर्वकम् ॥
संन्यस्य लक्ष्मणोरामो जानक्या रक्षणेवने । स्वयं जगाम तूर्णं तंविव्याधसायकेनच

लक्ष्मणेति च शब्दं स कृत्वा च मायया मृगः ।
प्राणांस्तत्याज सहसा पुरो दृष्ट्वा हरिं स्मरन् ॥ ३८ ॥

मृगदेहं परित्यज्य दिव्यरूपं विधाय च । रत्ननिर्माणयानेन वैकुण्ठं स जगाम ह ॥
वैकुण्ठंलोकद्वार्यासीत्किङ्करो द्वारपालयोः । पुनर्जगाम तद्द्वारमादेशाद्द्वारपालयोः
अथ शब्दं च सा श्रुत्वालक्ष्मणेतिचविक्लवम् । तंहिसाप्रेरयामासलक्ष्मणंरामसन्निधौ
गते च लक्ष्मणे रामं रावणो दुर्निवारणः । सीतां गृहीत्वाप्रययौलङ्कामेव स्वलीलया
विषसाद च रामश्च वने दृष्ट्वा च लक्ष्मणम् । तूर्णं च स्वाश्रमंगत्वा सीतांनैवददर्शसः
मूर्च्छां सम्प्राप सुचिरं विललाप भृशं पुनः । पुनः पुनश्च बभ्राम तदन्वेषणपूर्वकम्
कालेनप्राप्य तद्वार्तां गोदावरीनदीतटे । सहायान्वानरान्कृत्वाबबन्ध सागरं हरिः

लङ्कां गत्वा रघुश्रेष्ठो जघान सायकेन च । कालेन प्राप्य तं हत्वारावणंबान्धवैः सह
तां च वह्निपरीक्षां च कारयामाससत्वरम् । हुताशस्तत्रकालेतुवास्तवींजानकींददौ
उवाच छायावह्निं च रामश्च विनयान्विता । करिष्यामीति किमहं तदुपायंवदस्व मे

श्रीरामाग्नी ऊचतुः

त्वं गच्छ तपसे देवि! पुष्करञ्च सुपुण्यदम् ।
कृत्वा तपस्या तत्रैव स्वर्गलक्ष्मीर्भविष्यसि ॥ ४६ ॥

सा च तद्वचनं श्रुत्वा प्रतप्य पुष्करे तपः । दिव्यं त्रिलक्षवर्षञ्च स्वर्गलक्ष्मीर्बभूव ह

सा च कालेन तपसा यज्ञकुण्डसमुद्भवा ।
कामिनी पाण्डवानाञ्च द्रौपदी द्रुपदात्मजा ॥ ५१ ॥

कृते युगे वेदवती कुशध्वजसुता शुभा । त्रेतायां रामपत्नी च सीतेति जनकात्मजा
तच्छाया द्रौपदीदेवी द्वापरे द्रुपदात्मजा । त्रिहायिणीच सा प्रोक्ताविद्यमानायुगत्रये

नारद उवाच

प्रियाः पञ्च कथं तस्या बभूवुर्मुनिपुङ्गव !। इति मच्चित्तसन्देहं भञ्ज सन्देहभञ्जन !॥

नारायण उवाच

लङ्कायां वास्तवी सीतारामंसम्प्रापनारद !। रूपयौवनसम्पन्ना छाया च बहुचिन्तया
रामाग्न्योराज्ञया तप्तुमुपास्ते शङ्करं पदम् । कामातुरा पतिव्यग्रा प्रार्थयन्ती पुनःपुनः
पतिं देहि पतिं देहि पतिं देहि त्रिलोचन !। पतिं देहि पतिं देहि पञ्चवारञ्चकार सा
शिवस्तत्प्रार्थनां श्रुत्वाप्रहस्यरसिकेश्वरः । प्रिये तव प्रियाः पञ्च भविष्यन्तिवरंददौ
तेन सा पाण्डवानाञ्चबभूवकामिनीप्रिया । इति ते कथितं सर्वं प्रस्तावंवास्तवंश्रृणु

अथ सम्प्राप्य लङ्कायां सीतां रामो मनोहराम् ।
विभीषणाय तां लङ्कां दत्त्वाऽयोध्यां ययौ पुनः ॥ ६० ॥

एकादशसहस्राब्दं कृत्वा राज्यं च भारते । जगामसर्वलोकैश्च सार्धं वैकुण्ठमेव च ॥
कमलांशा वेदवती कमलायां विवेश सा । कथितं पुण्यमाख्यानंपुण्यदं पापनाशनम्
सततं मूर्तिमन्तश्च वेदाश्चत्वार एव च । सन्ति यस्याश्चजिह्वाग्रे सा च वेदवतीश्रुता

धर्मध्वजसुताख्यानं निबोध कथयामि ते ॥ ६४ ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे महालक्ष्म्यावेदवतीरूपेणराजगृहेजन्मवर्णनं नामषोडशोऽध्यायः ॥ १६ ॥

---

# सप्तदशोऽध्यायः

## धर्मध्वजसुतायास्तुलस्याःकथावर्णनम्

श्रीनारायण उवाच

धर्मध्वजस्य पत्नी च माधवीतिचविश्रुता। नृपेण सार्धं साऽऽरामेरेमे च गन्धमादने
शय्यां रतिकरीं कृत्वा पुष्पचन्दनचर्चिताम्। चन्दनालिप्तसर्वाङ्गी पुष्पचन्दनवायुना
स्त्रीरत्नमतिचार्वङ्गी रत्नभूषणभूषिता। कामुकी रसिका सृष्टा रसिकेन च संयुता ॥
सुरते विरतिर्नास्ति तयोः सुरतिविज्ञयोः। गतं दैवं वर्षशतं न ज्ञातञ्च दिवानिशम्
ततो राजा मतिं प्राप्य सुरताद्विरराम च। कामुकीसुन्दरीकिञ्चिन्नच तृप्तिं जगामसा
दधार गर्भं सा सद्यो दैवाद्ब्दशतंसती। श्रीगर्भा श्रीयुता सा च सम्बभूव दिनेदिने
शुभेक्षणे शुभदिने शुभयोगे च संयुते। शुभलग्ने शुभांशे च शुभस्वामिग्रहान्विते ॥
कार्त्तिकीपूर्णिमायान्तु सितवारेचपाद्मज !। सुषावसावपद्मांशां पद्मिनींतांमनोहराम्

शरत्पार्वणचन्द्रास्यां शरत्पङ्कजलोचनाम्।
पक्वबिम्बाधरोष्ठीञ्च पश्यन्तीं सस्मितां गृहम् ॥ ९ ॥

हस्तपादतलारक्तां निम्ननाभिं मनोरमाम्। तदधस्त्रिवलीयुक्तां नितम्बयुगवर्तुलाम् ॥

शीते सुखोष्णसर्वाङ्गी ग्रीष्मे च सुखशीतलाम्।
श्यामां सुकेशीं रुचिरां न्यग्रोधपरिमण्डलाम् ॥ ११ ॥

पीतचम्पकवर्णाभां सुन्दरीष्वेव सुन्दरीम्। नरानार्यश्च तां दृष्ट्वा तुलनांदातुमक्षमाः
तेन नाम्नाच तुलसींतांवदन्तिमनीषिणः। साच भूमिष्ठमात्रेण योग्या स्त्रीप्रकृतिर्यथा

सर्वैर्निषिद्धा तपसे जगाम बदरीवनम् । तत्र देवाब्दलक्षञ्च चकार परमं तपः ॥ १४॥
मनसानारायणःस्वामीभवितेतिचनिश्चिता । ग्रीष्मेपञ्चतपाःशीते तोयवस्त्राचप्रावृषि
आसनस्था वृष्टिधारा सहन्तीतिदिवानिशम् । विंशत्सहस्रवर्षञ्च फलतोयाशनाचसा
त्रिंशत्सहस्रवर्षञ्च पत्राहारातपस्विनी । चत्वारिंशत्सहस्राब्दं वाय्वाहारा कृशोदरी
ततो दशसहस्राब्दं निराहारा बभूव सा । निर्लक्ष्याञ्चैकपादस्थां दृष्ट्वा तां कमलोद्भवः
समाययौ परं दातुं वरं बदरिकाश्रमम् । चतुर्मुखञ्च सा दृष्ट्वा ननाम हंसवाहनम् ॥

तामुवाच जगत्कर्ता विधाता जगतामपि ।

ब्रह्मोवाच

वरं वृणीष्व तुलसि! यत्ते मनसि वाञ्छितम् ॥ २० ॥
हरिभक्तिं हरेर्दास्यमजरामरतामपि ।

तुलस्युवाच

शृणु तात! प्रवक्ष्यामि यन्मे मनसि वाञ्छितम् ॥ २१ ॥

सर्वज्ञस्यापि पुरतः कालज्ञाममसाम्प्रतम् । अहंतु तुलसीगोपीगोलोकेऽहंस्थितापुरा
कृष्णप्रियाकिङ्करीचतदंशातत्सखीप्रिया॥ गोविन्दरतिसम्भुक्तामतृमांमांचमूर्च्छिताम्
रासेश्वरी समागत्य ददर्शरासमण्डले । गोविन्दंभर्त्सयामासमां शशाप रुषाऽन्विता

याहि त्वं मानवीं योनिमित्येवं च शशाप ह ।
मामुवाच स गोविन्दो मदंशं च चतुर्भुजम् ॥ २५ ॥

लभिष्यसितपस्तप्त्वाभारतेब्रह्मणोवरात् । इत्येवमुक्त्वा देवेशोऽप्यन्तर्धानञ्चकारसः
देव्या भियातनुं त्यक्त्वाप्राप्तंजन्मगुरो! भुवि । अहंनारायणंकान्तं शान्तंसुन्दरविग्रहम्

साम्प्रतं तं पतिं लब्धुं वरये त्वं च देहि मे ।

ब्रह्मदेव उवाच

सुदामा नाम गोपश्च श्रीकृष्णाङ्गसमुद्भवः ॥ २८ ॥

तदंशश्चातितेजस्वी लेभे जन्म च भारते । साम्प्रतं राधिकाशापाद्दनुवंशसमुद्भवः ॥
शङ्खचूडेति विख्यातस्त्रैलोक्येनचतत्समः । गोलोकेत्वांपुरादृष्ट्वा कामोन्मथितमानसः

विलम्भितुंनशशाकराधिकायाःप्रभावतः। सचजातिस्मरस्तस्मात्सुदामाऽभूच्चसागरे

जातिस्मरा त्वमपि सा सर्वं जानासि सुन्दरि ।।

अधुना तस्य पत्नी त्वं सम्भविष्यति शोभने ।। ३२ ।।

पश्चान्नारायणं शान्तं कान्तमेव वरिष्यसि। शापान्नारायणस्यैव कलया दैवयोगतः ।।

भविष्यसि वृक्षरूपा त्वं पूता विश्वपावनी।

प्रधाना सर्वपुष्पेषु विष्णुप्राणाधिका भवेः ।। ३४ ।।

त्वया विना च सर्वेषां पूजाचविफलाभवेत। वृन्दावनेवृक्षरूपा नाम्नावृन्दावनीति च

त्वत्पत्रैर्गोपिगोपाश्च पूजयिष्यन्तिमाधवम्। वृक्षाधिदेवीरूपेणसार्धं कृष्णेनसन्ततम्

विहरिष्यसि गोपेन स्वच्छन्दं मद्वरेण च। इत्येवं वचनं श्रुत्वा सस्मिताहृष्टमानसा

प्रणनाम च ब्रह्माणं तं च किञ्चिदुवाच सा।

तुलस्युवाच

यथा मे द्विभुजे कृष्णे वाञ्छा च श्यामसुन्दरे ।। ३८ ।।

सत्यम्ब्रवीमि हे तात! न तथा च चतुर्भुजे। अतृप्ताऽहञ्चगोविन्दे दैवाच्छृङ्गारभङ्गतः

गोविन्दस्यैव वचनात्प्रार्थयामिचतुर्भुजम्। त्वत्प्रसादेनगोविन्दं पुनरेव सुदुर्लभम्

ध्रुवमेव लभिष्यामि राधाभीति प्रमोचय।

ब्रह्मदेव उवाच

गृहाण राधिकामन्त्रं ददामि षोडशाक्षरम् ।। ४१ ।।

तस्याश्चप्राणतुल्यात्वंमद्वरेणभविष्यसि। शृङ्गारंयुवयोर्गोप्यंन ज्ञास्यति च राधिका

राधासमात्वंसुभगेगोविन्दस्यभविष्यसि। इत्येवमुक्त्वादत्त्वा च देव्यावैषोडशाक्षरम्

मन्त्रञ्चैव जगद्धाता स्तोत्रञ्च कवचम्परम्। सर्वम्पूजाविधानञ्च पुरश्चर्याविधिक्रमम्

परां शुभाशिषञ्चैव पूजाञ्चैव चकार सा।

बभूव सिद्धा सा देवी तत्प्रसादाद्रमा यथा ।। ४५ ।।

सिद्धं मन्त्रेण तुलसी वरम्प्राप यथोदितम्। बुभुजे चमहाभोगं यद्विश्वेषुच दुर्लभम्

प्रसन्नमनसा देवी तत्याज तपसः क्लमम्। सिद्धे फले नराणाञ्च दुःखञ्च सुखमुत्तमम्

भुक्त्वा पीत्वा च सन्तुष्टा शयनञ्च चकार सा । तल्पे मनोरमे तत्र पुष्पचन्दनचर्चिते

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायांनवमस्कन्धे नारायणनारद-
सम्वादे धर्मध्वजसुतातुलस्युपाख्यानं नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

# अष्टादशोऽध्यायः

## शङ्खचूडेनसहतुलस्याःसङ्गतिवर्णनम्

श्रीनारायण उवाच

तुलसी परितुष्टा च सुष्वाप हृष्टमानसा । नवयौवनसम्पन्ना वृषध्वजवराङ्गना ॥१॥
चिक्षेप पञ्चबाणश्च पञ्च बाणांश्चताम्प्रति । पुष्पायुधेन सा दग्धा पुष्पचन्दनचर्चिता
पुलकाञ्चितसर्वाङ्गीकम्पितारक्तलोचना । क्षणं सा शुष्कतां प्राप क्षणंमूर्च्छामवापह
क्षणमुद्विग्नताम्प्राप क्षणं तन्द्रां सुखावहाम् । क्षणञ्च दहनं प्राप क्षणंप्रापप्रसन्नताम्
क्षणं सा चेतनाम्प्राप क्षणम्प्राप विषण्णताम् ।
उत्तिष्ठन्ती क्षणं तल्पाद्गच्छन्ती निकटे क्षणम् ॥ ५ ॥
भ्रमन्ती क्षणमुद्वेगान्निवसन्ती क्षणं पुनः । क्षणमेव समुद्वेगात्सुष्वाप पुनरेव सा ॥
पुष्पचन्दनतल्पञ्च तद्बभूवातिकण्टकम् । विषहारि सुखं दिव्यं सुन्दरञ्च फलंजलम्
निलयञ्च बिलाकारं सूक्ष्मवस्त्रं हुताशनः । सिन्दूरपत्रकञ्चैव व्रणतुल्यञ्च दुःखदम् ॥
क्षणं ददर्श तन्द्रायां सुवेषं पुरुषं सती । सुन्दरं च युवानं च सस्मितं रसिकेश्वरम्
चन्दनोक्षितसर्वाङ्गं रत्नभूषणभूषितम् । आगच्छन्तंमाल्यवन्तंपिबन्तंतन्मुखाम्बुजम्
कथयन्तं रतिकथां ब्रुवन्तंमधुरं मुहुः । सम्भुक्तवन्तंतल्पेचसमाश्लिष्यन्तर्मार्प्सितम्
पुनरेवतु गच्छन्तमनागच्छन्तं च सन्निधौ । यान्तंक यासिप्राणेशतिष्ठत्येवमुवाचसा
पुनश्च चेतनां प्राप्य विललापपुनःपुनः । एवं सा यौवनं प्राप्य तस्थौ तत्रैव नारद!
शङ्खचूडो महायोगीजैगीषव्यान्मनोहरम् । कृष्णमन्त्रञ्च सम्प्राप्य कृत्वासिद्धंतुपुष्करे

कवचञ्च गलेबद्ध्वा सर्वमङ्गलमङ्गलाम् । ब्रह्मणश्च वरम्प्राप्य यत्ते मनसिवाञ्छितम्
आज्ञया ब्रह्मणः सोऽपि बदरीञ्च समाययौ । आगच्छन्तं शङ्खचूडं ददर्श तुलसी मुने
नवयौवनसम्पन्नं कामदेवसमप्रभम् । श्वेतचम्पकवर्णाभं रत्नभूषणभूषितम् ॥ १७ ॥
शरत्पार्वणचन्द्रास्यं शरत्पङ्कजलोचनम् । रत्नसारविनिर्माणविमानस्थं मनोहरम् ॥
रत्नकुण्डलयुग्मेन गण्डस्थलविराजितम् । पारिजातप्रसूनानांमालावन्तञ्चसुस्मितम्
कस्तूरीकुङ्कुमायुक्तंसुगन्धिचन्दनान्वितम् । सा दृष्ट्वासन्निधावेनंमुखमाच्छाद्यवाससा
सस्मिता तं निरीक्षन्ती सकटाक्षम्पुनः पुनः । बभूवाऽतिनम्रमुखीनवसङ्गमलज्जिता
शरदिन्दुविनिन्द्यैकस्वमुखेन्दुविराजिता । अमूल्यरत्ननिर्माणयावकावलिसंयुता ॥
मणीन्द्रसारनिर्माणक्वणन्मञ्जीररञ्जिता । दधती कबरीभारं मालतीमाल्यसंयुतम्
अमूल्यरत्ननिर्माणमकराकृतिकुण्डला । चित्रकुण्डलयुग्मेन गण्डस्थलविराजिता ॥
रत्नेन्द्रसारहारेण स्तनमध्यस्थलोज्ज्वला । रत्नकङ्कणकेयूरशङ्खभूषणभूषिता ॥
रत्नाङ्गुलीयकैर्दिव्यैरङ्गुल्यावलिराजिता । दृष्ट्वातांललितांरम्यांसुशीलांसुन्दरींसतीम्

उवास तत्समीपे च मधुरं तामुवाच सः ।

शङ्खचूड उवाच

का त्वं कस्य च कन्या च धन्या मान्या च योषिताम् ॥ २७ ॥
का त्वं मानिनि! कल्याणि! सर्वकल्याणदायिनि !।
मौनीभूते किङ्करे मां सम्भाषां कुरु सुन्दरि !॥ २८ ॥

इत्येवं वचनं श्रुत्वा सकामा वामलोचना । सस्मिता नम्रवदना सकामं तमुवाच सा

तुलस्युवाच

धर्मध्वजसुताऽहञ्च तपस्यायांतपोवने । तपस्विन्यहंतिष्ठामिकस्त्वंगच्छयथासुखम्
कामिनीं कुलजाताञ्चरहस्येकाकिनींसतीम् । न पृच्छतिकुलेजातइत्येवंमेश्रुतौश्रुतम्

लम्पटोऽसत्कुले जातो धर्मशास्त्रार्थवर्जितः ।
येनाऽश्रुतः श्रुतेरर्थः स कामीच्छति कामिनीम् ॥ ३२ ॥

आपातमधुरामन्तामन्तकां पुरुषस्य ताम् । विषकुम्भाकाररूपाममृतास्याञ्च सन्ततम्

हृदये क्षुरधाराभां शश्वन्मधुरभाषिणीम् । स्वकार्यपरिनिष्पत्त्यै तत्परां सततं च ताम्
कार्यार्थे स्वामिवशगामन्यथैवावशां सदा । स्वान्तर्मलिनरूपाञ्च प्रसन्नवदनेक्षणाम्
श्रुतौ पुराणे यासाञ्च चरित्रमतिदूषितम् । तासुकोविश्वसेत्प्राज्ञःप्रज्ञावांश्चदुराशयः
तासां कोवा रिपुर्मित्रं प्रार्थयन्ति नवं नवम् । दृष्ट्वा सुवेषं पुरुषमिच्छन्तिहृदये सदा

बाह्ये स्वार्थं सतीत्वञ्च ज्ञापयन्ती प्रयत्नतः ।

शश्वत्कामा च रामा च कामाधारा मनोहरा ॥ ३८ ॥

बाह्येछलात्खेदयन्ती स्वान्तर्मैथुनमानसा । कान्तं हसन्तीरहसिबाह्येऽतीवसुलज्जिता
मानिनी मैथनाभावे कोपनाकलहाङ्कुरा । सुप्रीता भूरिसम्भोगात्स्वल्पमैथुनदुःखिता

सुमिष्टान्नाच्छीततोयादाकाङ्क्षन्ती च मानसे ।

सुन्दरं रसिकं कान्तं युवानं गुणिनं सदा ॥ ४१ ॥

सुतात्परमभिस्नेहं कुर्वन्ती रसिकोपरि । प्राणाधिकं प्रियतमं सम्भोगकुशलं प्रियम्
पश्यन्ती रिपुतुल्यञ्च वृद्धं वा मैथुनाक्षमम् । कलहं कुर्वतीशश्वत्तेन सार्धं सुकोपना
वाचया भक्षयन्ती तं सर्पमाखुमिवोल्वणम् ।दुःसाहसस्वरूपा च सर्वदोषाश्रयासदा

ब्रह्मविष्णुशिवादीनां दुःसाध्या मोहरूपिणी ।

तपोमार्गार्गलाशश्वन्मोक्षद्वारकपाटिका ॥ ४५ ॥

हरेर्भक्तिव्यवहिता सर्वमायाकरण्डिका । संसारकारागारे च शश्वन्निगडरूपिणी ॥

इन्द्रजालस्वरूपा च मिथ्या च स्वप्नरूपिणी ।

बिभ्रती बाह्यसौन्दर्यमधोऽङ्गमतिकुत्सितम् ॥ ४७ ॥

नानाविण्मूत्रपूयानामाधारं मलसंयुतम् । दुर्गन्धि दोषसंयुक्तंरक्तारक्तमसंस्कृतम् ॥
मायारूपामायिनांचविधिनानिर्मितापुरा । विषरूपामुमुक्षूणामदृश्याऽप्यभिवाञ्छताम्
इत्युक्त्वा तुलसी तं च विरराम च नारद ।। सस्मितः शङ्खचूडश्च प्रवक्तुमुपचक्रमे

शङ्खचूड उवाच

त्वयायत्कथितंदेविनचसर्वमलीककम् । किञ्चित्सत्यमलीकंचकिञ्चिन्मत्तोनिशामय
निर्मितं द्विविधं धात्रा स्त्रीरूपं सर्वमोहनम् । कृत्वारूपंवास्तवंचप्रशस्यंचाप्रशंसितम्

लक्ष्मीः सरस्वती दुर्गा सावित्री राधिकादिका ।
सृष्टिसूत्रस्वरूपा च आद्या सृष्टिर्विनिर्मिता ॥ ५३ ॥
एतासामंशरूपं च स्त्रीरूपं वास्तवं स्मृतम् । तत्प्रशस्यं यशोरूपं सर्वमङ्गलकारकम्
शतरूपा देवहूर्तास्वधा स्वाहा च दक्षिणा । छायावर्तारोहिणीचवरुणानीशर्चातथा
कुबेरस्यचपर्त्नायाऽप्यदितिश्चदितिस्तथा । लोपामुद्राऽनसूयाचकोटवीतुलसी तथा
अहल्याऽरुन्धती मेना तारा मन्दोदरी तथा । दमयन्ती वेदवतीगङ्गा चमनसा तथा
पुष्टिस्तुष्टिः स्मृतिर्मेधा कालिकाचवसुन्धरा । षष्ठीमङ्गलचण्डीचमूर्तिश्चधर्मकामिनी
स्वस्ति श्रद्धा च शान्तिश्च कान्तिः क्षान्तिस्तथा परा ।
निद्रा तन्द्रा क्षुत्पिपासा सन्ध्या रात्रिदिनानि च ॥ ५६ ॥
सम्पत्तिर्धृतिकीर्तौ च क्रिया शोभाप्रभाशिवा । यत्स्त्रीरूपञ्चसम्भूतमुत्तमन्तुयुगेयुगे
कलाकलांशरूपञ्च स्वर्वेश्यादिकमेव च । तदप्रशस्यं विश्वेषु पुंश्चलीरूपमेव च ॥
सत्त्वप्रधानं यद्रूपं तद्युकञ्च प्रभावतः । तदुत्तमं च विश्वेषु साध्वीरूपं च शंसितम्
तद्वास्तवं च विज्ञेयं प्रवदन्ति मनीषिणः । रजोरूपं तमोरूपं कलासुविविधं स्मृतम्
मध्यमा रजसश्चांशास्तास्तु भोगेषु लोलुपाः ।
सुखसम्भोगवश्याश्च स्वकार्ये निरताः सदा ॥ ६४ ॥
कपटामोहकारिण्यो धर्मार्थविमुखाः सदा । रजोरूपस्य साध्वीत्वमतो नैवोपजायते
इदं मध्यमरूपं च प्रवदन्ति मनीषिणः । तमोरूपं दुर्निवार्यमधमं तद्विदुर्बुधाः ॥ ६६॥
नपृच्छतिकुलेजातः पण्डितश्चपरस्त्रियम् । निर्जनेनिर्जले वाऽपि रहस्यपिपरस्त्रियम्
आगच्छामि त्वत्समीपमाज्ञयाब्रह्मणोऽधुना । गान्धर्वेणविवाहेनत्वांग्रहीष्यामिशोभने
अहमेव शङ्खचूडो देवविद्रावकारकः । दनुवंश्यो विशेषेण सुदामाऽहं हरेः पुरा ॥
अहमष्टसु गोपेषु गोपोऽपि पार्षदेषु च । अधुना दानवेन्द्रोऽहं राधिकायाश्च शापतः
जातिस्मरोऽहंजानामिकृष्णमन्त्रप्रभावतः । जातिस्मरात्वंतुलसीसम्भुक्ताहरिणापुरा
त्वमेव राधिका कोपाज्जातासि भारते भुवि ।
त्वां सम्भोक्तुमुत्सुकोऽहं नाऽलं राधाभयात्ततः ॥ ७२ ॥

इत्येवमुक्त्वा स पुमानतिष्ठरराम महामुने । सस्मितं तुलसीतुष्टा प्रवक्तुमुपचक्रमे ॥

तुलस्युवाच

एवम्विधोबुधोनित्यंविश्वेषुचप्रशंसितः । कान्तमेवंविधंकान्ताशश्वदिच्छतिकामतः
त्वयाऽहमधुनासत्यं विचारेणपराजिता । सनिन्दितश्चाप्यशुचिर्यःपुमांश्चस्त्रियाजितः
निन्दतिपितरोदेवाबान्धवाःस्त्रीजितंनरम् । स्त्रीजितंमनसामातापिताभ्राताचनिन्दति
शुद्धो विप्रो दशाहेन जातके मृतके यथा । भूमिपो द्वादशाहेन वैश्यः पञ्चदशाहतः ॥
शूद्रो मासेन वेदेषु मातृवद्धीनसङ्करः । अशुचिः स्त्रीजितः शुद्ध्ये च्चितादहनकालतः
नगृह्णन्तीच्छयातस्यपितरःपिण्डतर्पणम् । न गृह्णन्त्येव देवाश्च तस्यपुष्पजलादिकम्
किं वा ज्ञानेन तपसा जपहोमप्रपूजनैः । किं विद्यया च यशसास्त्रीभिर्यस्यमनोहृतम्
विद्याप्रभावज्ञानार्थंमयात्वंचपरीक्षितः । कृत्वापरीक्षांकान्तस्यवृणोतिकामिनी वरम्
वराय गुणहीनाय वृद्धायाज्ञानिने तथा । दरिद्राय च मूर्खाय रोगिणे कुत्सिताय च ॥

अत्यन्तकोपयुक्ताय वाऽत्यन्तदुर्मुखाय च ।
पङ्गवे चाङ्गहीनाय चान्धाय बधिराय च ॥ ८३ ॥

जडाय चैव मूकाय क्लीवतुल्यायपापिने । ब्रह्महत्यांलभेत्सोऽपिस्वकन्यांप्रददातियः
शान्ताय गुणिने चैव यूने च विदुषेऽपि च । साधवे च सुतां दत्वादशयज्ञफलंलभेत्
यः कन्यापालनं कृत्वा करोतियदिविक्रयम् । विक्रेताधनलोभेनकुम्भीपाकंसगच्छति
कन्यामूत्रं पुरीषं च तत्र भक्षति पातकी । कृमिभिर्दंशितः काकैर्यावदिन्द्राश्चतुर्दश ८७

तदन्ते व्याधिसंयुक्तः सलभेज्जन्म निश्चितम् ।
विक्रीणाति मांसभारं वहत्येव दिवानिशम् ॥ ८८ ॥
इत्येवमुक्त्वा तुलसी विरराम तपोनिधे !।

ब्रह्मोवाच

किं करोषि शङ्खचूड! संवादमनया सह ॥८९ ॥

गान्धर्वेण विवाहेन त्वं चास्या ग्रहणं कुरु । पुरुषेष्वसि रत्नंत्वंस्त्रीषुरत्नंत्वियंसती
विदग्धायाविदग्धेनसङ्गमोगुणमान्भवेत् । निर्विरोधसुखं राजन्कोवात्यजतिदुर्लभम्

योऽविरोधसुखत्यागी स पशुर्नात्रसंशयः। किंपरीक्षसित्वंकान्तमीदृशंगुणिनंसति

देवानामसुराणाञ्च दानवानां विमर्दकम्।

यथा लक्ष्मीश्च लक्ष्मीशे यथा कृष्णे च राधिका ॥ ६३ ॥

यथामयि च सावित्री भवानी च भवेयथा। यथाधरावराहेचदक्षिणाच यथाऽध्वरे

यथाऽत्रेरनसूया च दमयन्ती यथा नले। रोहिणी च यथा चन्द्रेयथाकामेरतिःसती

यथा दितिः कश्यपे च वसिष्ठेऽरुन्धती सती। यथाऽहल्या गौतमेचदेवहूतिश्चकर्दमे

यथा बृहस्पतौ तारा शतरूपा मनौ यथा। यथा च दक्षिणा यज्ञे यथास्वाहाहुताशने

यथा शची महेन्द्रे च यथा पुष्टिर्गणेश्वरे। देवसेना यथा स्कन्दे धर्ममूर्तिर्यथासती

सौभाग्या सुप्रिया त्वं च शङ्खचूडे तथा भव। अनेन सार्धं सुचिरंसुन्दरेणचसुन्दरि

स्थाने स्थाने विहारं च यथेच्छं कुरु सन्ततम्।

पश्चात्प्राप्स्यसि गोलोके श्रीकृष्णं पुनरेव च ॥ १०० ॥

चतुर्भुजं च वैकुण्ठे शङ्खचूडे मृते सति।

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायांनवमस्कन्धे

शङ्खचूडेनसहतुलस्याःसङ्गतिवर्णनंनामाऽष्टादशोऽध्यायः ॥ १८ ॥

---

## एकोनविंशोऽध्यायः

### शङ्खचूडेनसहतुलसीसङ्गमवर्णनम्

नारद उवाच

विचित्रमिदमाख्यानं भवता समुदाहृतम्। श्रुतेन येन मे तृप्तिर्न कदाऽपि हि जायते

ततः परं तु यज्जातं तत्त्वं वद महामते !।

नारायण उवाच

इत्येवमाशिषं दत्त्वा स्वालयं च ययौ विधिः ॥ २ ॥

गान्धर्वेण विवाहेन जगृहे तां च दानवः। स्वर्गे दुन्दुभिवाद्यश्च पुष्पवृष्टिर्बभूव ह ॥

स रेमे रामया सार्धं वासगेहे मनोरमे । मूर्च्छां सा प्राप तुलसी नवसङ्गमसङ्गता ॥
निमग्ना निर्जलेसाध्वीसम्भोगसुखसागरे । चतुःषष्टिकमलामानंचतुःषष्टिविधंसुखम्
कामशास्त्रे यन्निरुक्तं रसिकानां यथेप्सितम् । अङ्गप्रत्यङ्गसंश्लेषपूर्वकं स्त्रीमनोहरम्
तत्सर्वं रसशृङ्गारं चकार रसिकेश्वरः । अतीवरम्यदेशे च सर्वजन्तुविवर्जिते ॥७॥
पुष्पचन्दनतल्पे च पुष्पचन्दनवायुना । पुष्पोद्याने नदीतीरे पुष्पचन्दनचर्चिते ॥ ८
गृहीत्वा रसिको रासे पुष्पचन्दनचर्चिताम् । भूषितो भूषणेनैव रत्नभूषण भूषिताम्
सुरते विरतिर्नास्ति तयोः सुरतिविज्ञयोः । जहार मानसं भर्तुर्लोलया लीलया सती
चेतनां रसिकायाश्च जहार रसभाववित् । वक्षसश्चन्दनं राज्ञस्तिलकं विजहार सा॥
सचजहार तस्याश्च सिन्दूरंबिन्दुपत्रकम् । तद्वक्षस्युरोजे च नखरेखां ददौ मुदा ॥
सा ददौ तद्वामपार्श्वे करभूषणलक्षणम् । राजा तदोष्ठपुटके ददौ रदनदंशनम् ॥१३॥
तद्गण्डयुगले सा च प्रददौ तच्चतुर्गुणम् । आलिङ्गनं चुम्बनं च जङ्घादिमर्दनं तथा ॥
एवं परस्परं क्रीडां चक्रतुस्तौ विजानतौ । सुरते विरते तौ चसमुत्थाय परस्परम्
सुवेषं चक्रतुस्तत्रयद्यन्मनसि वाञ्छितम् । चन्दनैः कुङ्कुमारक्तैः सातस्यतिलकंददौ
सर्वाङ्गे सुन्दरे रम्ये चकार चानुलेपनम् । सुवासं चैव ताम्बूलं वह्निशुद्धे चवाससी
पारिजातस्य कुसुमं जरारोगहरं परम् । अमूल्यरत्ननिर्माणमङ्गुलीयकमुत्तमम् १८॥
सुन्दरं च मणिवरं त्रिषु लोकेषु दुर्लभम् । दासी तवाहमित्येवं समुच्चार्य पुनः पुनः

ननाम परया भक्त्या स्वामिनं गुणशालिनम् ।
सस्मिता तन्मुखाम्भोजं लोचनाभ्यां पुनः पुनः ॥ २० ॥
निमेषरहिताभ्यां चाऽप्यपश्यत्कामसुन्दरम् ।
स च तां च समाकृष्य चकार वक्षसि प्रियाम् ॥ २१ ॥

सस्मितं वातयाऽऽच्छन्नं ददर्शमुखपङ्कजम् । चुचुम्ब कठिने गण्डेबिम्बोष्ठौपुनरेवच
ददौ तस्यै वस्त्रयुग्मं वरुणादाहृतं चयत् । तदाहृतां रत्नमालां त्रिषुलोकेषुदुर्लभाम्

ददौ मञ्जीरयुग्मं च स्वाहाया आहृतं च यत् ।
केयूरयुग्मं छायाया रोहिण्याश्चैव कुण्डलम् ॥ २४ ॥

अङ्गुलीयकरत्नानि रत्याश्च करभूषणम् । शङ्खश्च रुचिरं चित्रं यद्दतं विश्वकर्मणा ॥
विचित्रपद्मकश्रेणीं शय्याश्चापि सुदुर्लभाम् । भूषणानि च रत्वाच्च भूपोहासं चकारह
निर्ममे कवरीभारे तस्यामाङ्गल्यभूषणम् । सुचित्रं पत्रकं गण्डमण्डलेऽस्याः समं तथा
चन्द्रलेखात्रिभिर्युक्तं चन्दनेन सुगन्धिना । परीतं परितश्चित्रैः सार्धं कुङ्कुमबिन्दुभिः
ज्वलत्प्रदीपाकारञ्च सिन्दूरतिलकं ददौ । तत्पादपद्मयुगले स्थलपद्मविनिन्दिते ॥
चित्रालक्तकराग्रञ्च नखरेषु ददौ मुदा । स्ववक्षसि मुहुर्न्यस्य सरागं चरणाम्बुजम्
हे देवि! तव दासोऽहमित्युच्चार्य पुनः पुनः । रत्नभूषितहस्तेनतां च कृत्वास्ववक्षसि
तपोवनं परित्यज्य राजा स्थानान्तरं ययौ । मलये देवनिलये शैले शैले तपोवने ॥
स्थानेस्थानेऽतिरम्येचपुष्पोद्याने च निर्जने । कन्दरे कन्दरे सिन्धुतीरेचैवातिसुन्दरे
पुष्पभद्रानदीतीरे नीरवातमनोहरे । पुलिने पुलिने दिव्ये नद्यां नद्यां नदे नदे ॥३४॥
मधौमधुकराणाञ्च मधुरध्वनिनादिते । विस्पन्दने सुरसने नन्दने गन्धमादने ॥३५॥
देवोद्याने नन्दनेच चित्रचन्दनकानने । चम्पकानां केतकीनां माधवीनाञ्च माधवे ॥
कुन्दानां मालतीनाञ्च कुमुदाम्भोजकानने । कल्पवृक्षे कल्पवृक्षे पारिजातवने वने ॥
निर्जने काञ्चने स्थाने धन्ये काञ्चनपर्वते । काञ्चीवने किञ्जलके कञ्चुके काञ्चनाकरे
पुष्पचन्दनतल्पेषु पुंस्कोकिलरुतश्रुते । पुष्पचन्द्रसंयुक्तः पुष्पचन्दनवायुना ॥ ३६ ॥
कामुकयाकामुकःकामात्सरेमे रामयासह । न हितृप्तो दानवेन्द्रस्तृप्ति नैव जगाम सा
हविषा कृष्णवर्त्मेव ववृधे मदनस्तयोः । तया सह समागत्य स्वाश्रमं दानवस्ततः
रम्यं क्रीडालयंगत्वा विजहार पुनः पुनः । एवं स बुभुजेराज्यं शङ्खचूडः प्रतापवान् ॥
एकमन्वन्तरं पूर्णं राजा राजेश्वरो महान् । देवानामसुराणाञ्च दानवानाञ्च सन्ततम्
गन्धर्वाणांकिन्नराणांराक्षसानाञ्च शान्तिदः । हृताधिकारादेवाश्चचरन्तिभिक्षुकायथा
ते सर्वेऽतिविषण्णाश्च प्रजग्मुर्ब्रह्मणःसभाम् । वृत्तान्तं कथयामासू रुरुदुश्चभृशं मुहुः
तदा ब्रह्मा सुरैः सार्धं जगाम शङ्करालयम् । सर्वेशं कथयामास विधाता चन्द्रशेखरम्
ब्रह्मा शिवश्च तैः सार्धं वैकुण्ठञ्च जगामह । दुर्लभं परमं धाम जरामृत्युहरं परम् ॥
सम्प्राप च वरं द्वारमाश्रमाणां हरे रहो । ददर्श द्वारपालांश्च रत्नसिंहासनस्थितान्

शोभितान्पीतवस्त्रैश्चरत्नभूषणभूषितान् । वनमालान्वितान्सर्वाञ्श्यामसुन्दरविग्रहान्
शङ्खचक्रगदापद्मधरांश्चैवचतुर्भुजान् । सस्मितान्स्मेरवक्त्रास्यान्पद्मनेत्रान्मनोहरान्
ब्रह्मा तान्कथयामास वृत्तान्त गमनार्थकम् । तेऽनुज्ञाश्च ददुस्तस्मै प्रविवेश तदाज्ञया
एवं षोडश द्वाराणि निरीक्ष्य कमलोद्भवः । देवैः सार्धं तानतीत्यप्रविवेश हरेःसभाम्
देवर्षिभिः परिवृतां पार्षदैश्च चतुर्भजैः । नारायणस्वरूपैश्च सर्वैः कौस्तुभभूषितैः ॥
नवेन्दुमण्डलाकारां चतुरस्त्रांमनोहराम् । मणीन्द्रहारनिर्माणां हीरासारसुशोभिताम्

अमूल्यरत्नखचितां रचितां स्वेच्छया हरेः ।
माणिक्यमालाजालाभां मुक्तापङ्क्तिविभूषिताम् ॥ ५५ ॥
मण्डिताम्मण्डलाकारं रत्नदर्पणकोटिभिः ।
विचित्रैश्चित्ररेखाभिर्नानाचित्रविचित्रिताम् ॥ ५६ ॥

पद्मरागेन्द्ररचितां रुचिरां मणिपङ्कजैः । सोपानशतकैर्युक्तां स्यमन्तकविनिर्मितैः ॥
पट्टसूत्रग्रन्थियुक्तैश्चारुचन्दनपल्लवैः । इन्द्रनीलस्तम्भवर्यैर्वेष्टितां सुमनोहराम् ॥५८॥
सद्रत्नपूर्णकुम्भानां समूहैश्चसमन्विताम् । पारिजातप्रसूनानांमालाजालैर्विराजिताम्
कस्तूरीकुङ्कुमारक्तैः सुगन्धिचन्दनद्रुमैः । सुसंस्कृतां तु सर्वत्र वासितां गन्धवायुना

विद्याधरीसमूहानां नृत्यजालैर्विराजिताम् ।

सहस्त्रयोजनायामां परिपूर्णाञ्च किङ्करैः । ददर्श श्रीहरिं ब्रह्मा शङ्करश्च सुरैः सह ॥

वसन्तं तन्मध्यदेशे यथेन्दुं तारकावृतम् ॥ ६२ ॥

अमूल्यरत्ननिर्माणचित्रसिंहासनेस्थितम् । किरीटिनंकुण्डलिनं वनमालाविभूषितम्
चन्दनोक्षितसर्वाङ्गं बिभ्रतं केलिपङ्कजम् । पुरतो नृत्यगीतञ्च पश्यन्तं सस्मितम्मुदा
शान्तंसरस्वतीकान्तंलक्ष्मीधृतपदाम्बुजम् । लक्ष्म्याप्रदत्तताम्बूलंभुक्तवन्तंसुवासितम्
गङ्गया परया भक्त्या सेवितं श्वेतचामरैः । सर्वैश्च स्तूयमानञ्च भक्तिनम्रात्मकन्धरैः
एवं विशिष्टं तं दृष्ट्वा परिपूर्णतमं प्रभुम् । ब्रह्मादयः सुराः सर्वे प्रणम्य तुष्टुवुस्तदा
पुलकाञ्चितसर्वाङ्गाःसाश्रुनेत्राश्चगद्गदाः । भक्ताश्च परयाभक्त्या भीतानम्रात्मकन्धराः
कृताञ्जलिपुटो भूत्वा विधाता जगतामपि । वृत्तान्तं कथयामास विनयेन हरेः पुरः

हरिस्तद्वचनं श्रुत्वा सर्वज्ञः सर्वभावचित् । प्रहस्योवाच ब्रह्माणं रहस्यञ्च मनोहरम्

श्रीभगवानुवाच

शङ्खचूडस्य वृत्तान्तं सर्वं जानामि पद्मज !। मद्भक्तस्य च गोपस्य महातेजस्विनःपुरा

शृणु तत्सर्वं वृत्तान्तमितिहासम्पुरातनम् ।
गोलोकस्यैव चरितं पापघ्नं पुण्यकारकम् ॥ ७२ ॥

सुदामा नाम गोपश्च पार्षदप्रवरो मम । स प्राप दानवीं योनिं राधाशापात्सुदारुणात्
तत्रैकदाऽहमगमं स्वालयाद्रासमण्डलम् । विरजामपिनीत्वा च मम प्राणाधिकापरा
सामांविरजया सार्धंविज्ञायकिङ्करीमुखात् । पश्चात्क्रुद्धासाऽऽजगामनददर्शचतत्रमाम्
विरजाञ्चनदीरूपांमांज्ञात्वाचतिरोहितम् । पुनर्जगाम सा दृष्ट्वा स्वालयंसखिभिःसह
मांदृष्ट्वामन्दिरेदेवीसुदाम्नासहितम्पुरा । भृशं सा भर्त्सयामासमौनीभूतञ्चसुस्थिरम्

तच्छ्रुत्वाऽसहमानश्च सुदामा तां चुकोप ह ।
स च ताम्भर्त्सयामास कोपेन मम सन्निधौ ॥ ७८ ॥

तच्छ्रुत्वा कोपयुक्ता सा रक्तपङ्कजलोचना । बहिष्कर्तुञ्चकाराज्ञांमन्त्रस्तंममसंसदि
सखीलक्षं समुत्तस्थौ दुर्वारं तेजसोल्वणम् । बहिश्चकार तं तूर्णञ्जल्पन्तञ्च पुनःपुनः

सा च तत्ताडनं तासां श्रुत्वा रुष्टा शशाप ह ।
याहि रे दानवीं योनिमित्येवं दारुणम्वचः ॥ ८१ ॥

तं गच्छन्तं शपन्तञ्च रुदन्तं मां प्रणम्य च । वारयामासतुष्टासारुदती कृपया पुनः
हे वत्स तिष्ठ मा गच्छ क्वयासीतिपुनःपुनः । समुच्चार्यचतत्पश्चाज्जगामसाचविक्लवम्

गोप्यश्च रुरुदुः सर्वा गोपाश्चाऽपि सुदुःखिताः ।
ते सर्वे राधिका चापि तत्पश्चाद्बोधिता मया ॥ ८४ ॥
आयास्यति क्षणार्धेन कृत्वा शापस्य पालनम् ।
सुदामंस्त्वमिहागच्छेत्युक्त्वा सा च निवारिता ॥ ८५ ॥

गोलोकस्य क्षणार्धेनचैकं मन्वन्तरम्भवेत् । पृथिव्या जगतां धातरित्येववचनं ध्रुवम्
इत्येवं शङ्खचूडश्च पुरस्तत्रैव यास्यति । महाबलिष्ठोयोगेशः सर्वमायाविशारदः ॥

मम शूलं गृहीत्वा च शीघ्रंगच्छत भारतम् । शिवः करोतु संहारं मम शूलेन रक्षसः
ममैव कवचं कण्ठे सर्वमङ्गलकारकम् । बिभर्त्ति दानवःशश्वत्संसारे विजयी ततः ॥

तस्मिन्ब्रह्मन्स्थिते चैव न कोऽपि हिंसितुं क्षमः ।
तद्याचनां करिष्यामि विप्ररूपोऽहमेव च ॥ ६० ॥
सतीत्वहानिस्तत्पत्न्या यत्र काले भविष्यति ।
तत्रैव काले तन्मृत्युरिति दत्तो वरस्त्वया ॥ ६१ ॥

तत्पत्न्याश्चोदरेवीर्यमर्पयिष्यामि निश्चितम् । तत्क्षणेचैवतन्मृत्युर्भविष्यतिनसंशयः
पश्चात्सा देहमुत्सृज्य भविष्यति ममप्रिया । इत्युक्त्वाजगतांनाथो ददौशूलंहराय च
शूलं दत्त्वा ययौ शीघ्रं हरिरभ्यन्तरे मुदा । भारतञ्च ययुर्देवा ब्रह्मरुद्रपुरोगमाः ॥६४

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायांनवमस्कन्धे
शङ्खचूडेनसहतुलसीसङ्गमवर्णनंनामैकोनविंशोऽध्यायः ॥ १६ ॥

---

# विंशोऽध्यायः

## शङ्खचूडेनदेवानांसङ्ग्रामोद्योगवर्णनम्

### श्रीनारायण उवाच

ब्रह्माशिवं संनियोज्य संहारे दानवस्य च । जगामस्वालयंतूर्णं यथास्थानं सुरोत्तमाः
चन्द्रभागानदीतीरे वटमूले मनोहरे । तत्रतस्थौ महादेवो देवविस्तारहेतवे ॥ २ ॥
दूतं कृत्वाचित्ररथंगन्धर्वेश्वरमीप्सितम् । शीघ्रं प्रस्थापयामासशङ्खचूडान्तिकंमुदा
सर्वेश्वराज्ञया शीघ्रं ययौ तन्नगरं परम् । महेन्द्रनगरोत्कृष्टं कुबेरभवनाधिकम् ॥
पञ्चयोजनविस्तीर्णंदैर्घ्येतद्द्विगुणंभवेत् । स्फटिकाकारमणिभिर्निर्मितंयानवेष्टितम्

सप्तभिः परिखाभिश्च दुर्गमाभिः समन्वितम् ।
ज्वलदग्निनिभैः शश्वत्कल्पितं रत्नकोटिभिः ॥ ६ ॥

युक्तश्च वीथिशतकैर्मणिवेदिविचित्रितैः । परितो वणिजांसौधैर्नानावस्तुविराजितैः
सिन्दूराकारमणिभिर्निर्मितैश्च विचित्रितैः । भूषितंभूषितैर्दिव्यैराश्रमैः शतकोटिभिः
गत्वा ददर्श तन्मध्ये शङ्खचूडालयं परम् । अतीववलयाकारं यथा पूर्णेन्दुमण्डलम् ॥
ज्वलदग्निशिखाकाभिः परिखाभिश्चतसृभिः । तद्दुर्गमञ्चशत्रूणामन्येषांसुगमंसुखम्
अत्युच्चैर्गगनस्पर्शिमणिश्रृङ्गविराजितम् । राजितंद्वादशद्वारैर्द्वारपालसमन्वितम् ॥
मणीन्द्रसारनिर्माणैः शोभितं लक्षमन्दिरैः । शोभितंरत्नसोपानैरत्नस्तम्भविराजितम्
तद्दृष्ट्वा पुष्पदन्तोऽपि वरं द्वारं ददर्श सः । द्वारेनियुक्तं पुरुषंशूलहस्तञ्च सस्मितम्
तिष्ठन्तं पिङ्गलाक्षं च ताम्रवर्णं भयङ्करम् । कथयामासवृत्तान्तं जगाम तदनुज्ञया ॥
अतिक्रम्य च तद्द्वारं जगामाभ्यन्तरं पुनः । न कोऽपि रक्षतिश्रुत्वादूतरूपंरणस्यच
गत्वासोऽभ्यन्तरद्वारं द्वारपालमुवाच ह । रणस्यसर्ववृत्तान्तं विज्ञापयत माचिरम्
स च तं कथयित्वा च दूतो गन्तुमुवाच ह । सगत्वा शङ्खचूडं तं ददर्श सुमनोहरम्

राजमण्डलमध्यस्थं स्वर्णसिंहासने स्थितम् ।
मणीन्द्ररचितं दिव्यं रत्नदण्डसमन्वितम् ॥ १८ ॥

रत्नकृत्रिमपुष्पैश्च प्रशस्तैः शोभितं सदा । भृत्येनमस्तकन्यस्तं स्वर्णच्छत्रं मनोहरम्
सेवितं पार्षदगणै रुचिरैः श्वेतचामरैः । सुवेषं सुन्दरं रम्यं रत्नभूषणभूषितम् ॥
माल्येन लेपनं सूक्ष्मं सुवस्त्रं दधतं मुने !। दानवेन्द्रैः परिवृतं सुवेषैश्च त्रिकोटिभिः ॥
शतकोटिभिरन्यैश्च भ्रमद्भिरस्त्रपाणिभिः । एवम्भूतं च तं दृष्ट्वा पुष्पदन्तःसविस्मयः

उवाच स च वृत्तान्तं यदुक्तं शङ्करेण च ।

पुष्पदन्त उवाच

राजेन्द्र ! शिवभृत्योऽहं पुष्पदन्ताभिधः प्रभो !॥ २३ ॥

यदुक्तं शङ्करेणैव तद्ब्रवीमि निशामय । राज्यं देहि च देवानामधिकारं च साम्प्रतम्
देवाश्च शरणापन्ना देवेशं श्रीहरिं परम् । हरिर्दत्त्वाऽस्य शूलं च तेनप्रस्थापितःशिवः
पुष्पभद्रानदीतीरे वटमूले त्रिलोचनः । विषयं देहि तेषाञ्च युद्धं वा कुरुनिश्चितम्
गत्वा वक्ष्यामि किं शम्भुमथ तद्वद मामपि । दूतस्य वचनं श्रुत्वाशङ्खचूडःप्रहस्यच

प्रभातेऽहं गमिष्यामि त्वं च गच्छेत्युवाचह । सगत्वोवाचतंतूर्णं वटमूलस्थमीश्वरम्
शङ्खचूडस्यवचनंतदीयंतन्मुखोदितम् । एतस्मिन्नन्तरेस्कन्द! आजगामशिवान्तिकम्
वीरभद्रश्च नन्दी च महाकालः सुभद्रकः । विशालाक्षश्चबाणश्चपिङ्गलाक्षो विकम्पनः

विरूपो विकृतिश्चैव मणिभद्रश्च बाष्कलः ।
कपिलाख्यो दीर्घदंष्ट्रो विकटस्ताम्रलोचनः ॥ ३१ ॥

कालकण्ठो बली भद्रःकालजिह्वः कुटीचरः । बलोन्मत्तोरणश्लाघीदुर्जयोदुर्गमस्तथा
अष्टौ चभैरवा रौद्राख्द्राश्चैकादशस्मृताः । वसवोऽष्टौवासवश्चआदित्याद्वादशस्मृताः
हुताशनश्च चन्द्रश्च विश्वकर्माऽश्विनौ च तौ । कुबेरश्च यमश्चैव जयन्तो नलकूबरः ॥
वायुश्च वरुणश्चैव बुधश्च मङ्गलस्तथा । धर्मश्च शनिरीशानः कामदेवश्च वीर्यवान् ॥
उग्रदंष्ट्रा चोग्रदण्डा कोटरा कैटभी तथा । स्वयं चाष्टभुजा देवी भद्रकालीभयङ्करी ॥
रत्नेन्द्रसारनिर्माणविमानोपरि संस्थिता । रक्तवस्त्रपरीधाना रक्तमाल्यानुलेपना ॥३७

नृत्यन्ती च हसन्ती च गायन्ती सुस्वरं मुदा ।
अभयं ददाति भक्तेभ्योऽभया सा च भयं रिपुम् ॥ ३८ ॥

बिभ्रतीं विकटां जिह्वां सुलोलांयोजनायताम् । शङ्खचक्रगदापद्मखड्गचर्मधनुःशरान्
खर्परं वर्तुलाकारं गम्भीरं योजनायतम् । त्रिशूलं गगनस्पर्शि शक्तिं च योजनायतम्
मुद्गरं मुसलं वज्रं खेटं फलकमुज्ज्वलम् । वैष्णवास्त्रं वारुणास्त्रं वाह्नेयंनागपाशकम्
नारायणास्त्रं गान्धर्वं ब्रह्मास्त्रं गारुडं तथा । पर्जन्यास्त्रं पाशुपतंजृम्भणास्त्रं च पार्वतम्
माहेश्वरास्त्रं वायव्यं दण्डं सम्मोहनं तथा । अव्यर्थमस्त्रकं दिव्यंदिव्यास्त्रशतकंपरम्

आगत्य तत्र तस्थौ च योगिनीनां त्रिकोटिभिः ।
सार्धं च डाकिनीनां च विकटानां त्रिकोटिभिः ॥ ४४ ॥

भूतप्रेतपिशाचाश्च कूष्माण्डा ब्रह्मराक्षसाः । वेतालाराक्षसाश्चैव यक्षाश्चैव तु किन्नराः
ताभिश्चैव सह स्कन्दः प्रणम्य चन्द्रशेखरम् । पितुः पार्श्वेसहायार्थंसमुवासतदाज्ञया
अथ दूते गते तत्रशङ्खचूडः प्रतापवान् । उवाच तुलसीं वार्ता गत्वाऽभ्यन्तरमेव च ॥
रणवार्तांश्च सा श्रुत्वा शुष्ककण्ठोष्ठतालुका । उवाचमधुरं साध्वी हृदयेन विदूयता

तुलस्युवाच

हे प्राणबन्धो ! हे नाथ ! तिष्ठ मे वक्षसि क्षणम् ।
हे प्राणाधिष्ठातृदेव! रक्ष मे जीवितं क्षणम् ॥ ४९ ॥
भुङ्क्ष्व जन्म समासाद्य यन्मे मनसि वाञ्छितम् ।
पश्यामि त्वां क्षणं किञ्चिल्लोचनाभ्यां च सादरम् ॥ ५० ॥
आन्दोलयन्ते प्राणा मे मनोदग्धश्च सन्ततम् । दुःस्वप्नश्चमयाद्दृष्टश्चाद्यैव चरमे निशि
तुलसी वचनं श्रुत्वा भुक्त्वा पीत्वा नृपेश्वरः । उवाचवचनंप्राज्ञोहितंसत्यंयथोचितम्

शङ्खचूड उवाच

कालेन योजितं सर्वं कर्मभोगनिबन्धनम् । शुभं हर्षः सुखं दुःखं भयंशोकश्च मङ्गलम्
काले भवन्ति वृक्षाश्च स्कन्धवन्तश्च कालतः ।
क्रमेण पुष्पवन्तश्च फलवन्तश्च कालतः ॥ ५४ ॥
तेषां फलानि पक्वानि प्रभवन्त्येव कालतः । तेसर्वे फलिताःकालेनाशंयान्तिचकालतः
काले भवन्ति विश्वानि काले नश्यन्ति सुन्दरि !।
कालात्स्रष्टा च सृजति पाता पाति च कालतः ॥ ५६ ॥
संहर्ता संहरेत्काले क्रमेण सञ्चरन्ति ते । ब्रह्मविष्णुशिवादीनामीश्वरः प्रकृतिः परा
स्रष्टा पाता च संहर्ता स चात्मा कालनर्तकः ।
काले स एव प्रकृति स्वाभिन्ना स्वेच्छया प्रभुः ॥ ५८ ॥
निर्माय कृतवान्सर्वान्विश्वस्थांश्च चराचरान् । सर्वेशःसर्वरूपश्च सर्वात्मा परमेश्वरः
जनं जनेन जनिता जनं पाति जनेन यः । जनं जनेन हरते तं देवं भज साम्प्रतम् ॥
यस्याज्ञया वातिवातःशीघ्रगामीचसाम्प्रतम् । यस्याज्ञयाचतपनस्तपत्येव यथाक्षणम्
यथाक्षणं वर्षतीन्द्रो मृत्युश्चरति जन्तुषु । यथाक्षणं दहत्यग्निश्चन्द्रो भ्रमतिशीतवान्
मृत्योर्मृत्युं कालकालं यमस्यचयमम्परम् । विभुं स्रष्टुश्च स्रष्टारं मातुश्चमातृकम्भवे
संहर्तारश्च संहर्तुस्तं देवं शरणम्व्रज । को वा बन्धुश्च केषां वा सर्वबन्धुं भज प्रिये
अहं को वा च त्वं का वा विधिना योजितः पुरा ।

त्वया सार्धं कर्मणा च पुनस्तेन नियोजितः ॥ ६५ ॥

अज्ञानी कातरः शोके विपत्तौन च पण्डितः । सुखे दुःखे भ्रमत्येव कालनेमिक्रमेणच नारायणं तं सर्वेशं कान्तं यास्यसि निश्चितम् । तपः कृतं यदर्थे च पुरा बदरिकाश्रमे मया त्वं तपसालब्धाब्रह्मणस्तु वरेण च । हर्यर्थे यत्तव तपोहरिं प्राप्स्यसिकामिनि

वृन्दावने च गोविन्दं गोलोके त्वं लभिष्यसि ।

अहं यास्यामि तल्लोकं तनुं त्यक्त्वा च दानवीम् ॥ ६६ ॥

तत्र द्रक्ष्यसि मां त्वं च द्रक्ष्यामि त्वां च साम्प्रतम् ।

अगमं राधिकाशापाद्भारतं च सुदुर्लभम् ॥ ७० ॥

पुनर्यास्यामि तत्रैवकः शोको मे शृणुमेप्रिये !। त्वञ्चदेहंपरित्यज्यदिव्यंरूपंविधायच तत्कालं प्राप्स्यसिहरिमा कान्तेकातराभव । इत्युक्त्वाचदिनान्तेचतयासार्धंमनोहरम् सुष्वाप शोभने तल्पे पुष्पचन्दनचर्चिते । नानाप्रकारविभवं चकार रत्नमन्दिरे ॥ रत्नप्रदीपसंयुक्ते स्त्रीरत्नं प्राप्यसुन्दरीम् । निनाय रजनीं राजा क्रीडाकौतुकमङ्गलैः

कृत्वा वक्षसि तां कान्तां रुदतीमतिदुःखिताम् ।

कृशोदरीं निराहारां निमग्नां शोकसागरे ॥ ७५ ॥

पुनस्तां बोधयामास दिव्यज्ञानेन ज्ञानवित् । पुराकृष्णेन यद्दत्तं भाण्डीरेतत्त्वमुत्तमम् स च तस्यैददौसर्वं सर्वशोकहरं परम् । ज्ञानं सम्प्राप्य सा देवी प्रसन्नवदनेक्षणा ॥

क्रीडां चकार हर्षेण सर्वं मत्वेति नश्वरम् ।

तौ दम्पती च क्रीडन्तौ निमग्नौ सुखसागरे ॥ ७८ ॥

पुलकाञ्चितसर्वाङ्गौ मूर्च्छितौ निर्जने मुने !। अङ्गप्रत्यङ्गसंयुक्तौसुप्रीतौसुरतोत्सुकौ एकाङ्गौ च तथा तौ द्वौ चार्धनारीश्वरोयथा । प्राणेश्वरञ्च तुलसीमेनेप्राणाधिकंपरम्

प्राणाधिकाञ्च तां मेने राजा प्राणेश्वरीं सतीम् ।

तौ स्थितौ सुखसुप्तौ च तन्द्रितौ सुन्दरौ समौ ॥ ८१ ॥

सुवेषौ सुखसम्भोगादचेष्टौ सुमनोहरौ । क्षणं सुचेतनौ तौ च कथयन्तौरसाश्रयात् कथां मनोरमां दिव्यां हसन्तौ चक्षणंपुनः । क्षणञ्चकेलिसंयुक्तौ रसभावसमन्वितौ

सुरते विरतिर्नास्ति तौ तद्विषयपण्डितौ । सततं जययुक्तौ द्वौ क्षणंनैव पराजितौ

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे नारायणनारदसम्वादे शङ्खचूडेनसहदेवानांसङ्ग्रामोद्योगवर्णनं नाम विंशोऽध्यायः ॥ २० ॥

---

## एकविंशोऽध्यायः

### शङ्करशङ्खचूडसमागमवर्णनम्

श्रीनारायण उवाच

श्रीकृष्णं मनसा ध्यात्वारक्षः कृष्णपरायणः । ब्राह्ममुहूर्त उत्थाय पुष्पतल्पान्मनोहरात्

रात्रिवासः परित्यज्य स्नात्वा मङ्गलवारिणा ।

धौते च वाससी धृत्वा कृत्वा तिलकमुज्ज्वलम् ॥ २ ॥

चकाराह्निकमावश्यमभीष्टदेववन्दनम् । दध्याज्यमधुलाजांश्चददर्श वस्तु मङ्गलम् ॥

रत्नश्रेष्ठं मणिश्रेष्ठं वस्त्रश्रेष्ठञ्च काञ्चनम् । ब्राह्मणेभ्यो ददौ भक्त्यायथानित्यंचनारद!

अमूल्यरत्नं यत्किञ्चिन्मुक्तामाणिक्यहीरकम् । ददौविप्राय गुरवे यात्रामङ्गलहेतवे

गजरत्नमश्वरत्नं धनरत्नं मनोहरम् । ददौ सर्वं दरिद्राय विप्राय मङ्गलाय च ॥ ६ ॥

भाण्डाराणां सहस्राणि नगराणां द्विलक्षकम् ।

ग्रामाणां शतकोटिश्च ब्राह्मणाय ददौ मुदा ॥ ७ ॥

पुत्रं कृत्वा तु राजेन्द्रंसर्वेषु दानवेषु च । पुत्रं समर्प्यभार्यां तां राज्यं च सर्वसम्पदम्

प्रजानुचरसङ्घञ्च भाण्डारं वाहनादिकम् । स्वयंसन्नाहयुक्तश्च धनुष्पाणिर्बभूव ह ॥

भृत्यद्वारा क्रमेणैव चकारसैन्यसञ्चयम् । अश्वानाञ्च त्रिलक्षेण लक्षेण वरहस्तिनाम्

रथानामयुतेनैव धानुष्काणां त्रिकोटिभिः ।

त्रिकोटिभिर्चर्मिणाञ्च शूलिनाञ्च त्रिकोटिभिः ॥ ११ ॥

कृतासेनाऽपरिमिता दानवेन्द्रेण नारद !। तस्यां सेनापतिश्चैव युद्धशास्त्रविशारदः ॥

महारथः स विज्ञेयो रथिनां प्रवरो रणे । त्रिलक्षाक्षौहिणीसेनापतिंकृत्वा नराधिपः
त्रिंशदक्षौहिणीबाधं भाण्डौघञ्च चकार ह । बहिर्बभूव शिबिरान्मनसाश्रीहरिंस्मरन्
रत्नेन्द्रसारनिर्माणविमानमारुरोह सः । गुरुवर्गान्पुरस्कृत्यप्रययौ शङ्करान्तिकम् ॥
पुष्पभद्रानदीतीरे यत्राऽक्षयवटः शुभः । सिद्धाश्रमञ्च सिद्धानां सिद्धिक्षेत्रं च नारद!
कपिलस्य तपःस्थानं पुण्यक्षेत्रञ्च भारते ॥ पश्चिमोदधिपूर्वेच मलयस्यच पश्चिमे ॥
श्रीशैलोत्तरभागे च गन्धमादनदक्षिणे । पञ्चयोजनविस्तीर्णादैर्घ्येशतगुणा तथा ॥
शुद्धस्फटिकसङ्काशा भारते च सुपुण्यदा । शाश्वती जलपूर्णाच पुष्पभद्रा नदी शुभा

लवणाब्धि प्रियाभार्या शश्वत्सौभाग्यसंयुता ।
शरावतीमिश्रिता च निर्गता सा हिमालयात् ॥ २० ॥

गोमतीं वामतः कृत्वा प्रविष्टा पश्चिमोदधौ । तत्रगत्वाशङ्खचूडो ददर्श चन्द्रशेखरम्
वटमूले समासीनं सूर्यकोटिसमप्रभम् । कृत्वा योगासनंदृष्टामुद्रायुक्तञ्च सस्मितम्
शुद्धस्फटिकसङ्काशं ज्वलन्तं ब्रह्मतेजसा । त्रिशूलपट्टिशधरं व्याघ्रचर्माम्बरं वरम्
भक्तमृत्युहरं शान्तं गौरीकान्तं मनोहरम् । तपसां फलदातारं दातारं सर्वसम्पदाम्
आशुतोषं प्रसन्नास्यं भक्तानुग्रहकातरम् । विश्वनाथं विश्वबीजंविश्वरूपञ्चविश्वजम्
विश्वम्भरं विश्ववरं विश्वसंहारकारकम् । कारणं कारणानाञ्च नरकार्णवतारणम् ॥
ज्ञानप्रदं ज्ञानबीजं ज्ञानानन्दं सनातनम् । अवरुह्य विमानाच्च तं दृष्ट्वा दानवेश्वरः ॥

सर्वैः सार्धं भक्तियुक्तः शिरसा प्रणनाम सः ।
वामतो भद्रकालीञ्च स्कन्दञ्च तत्पुरः स्थितम् ॥ २८ ॥

आशिषं च ददौ तस्मै कालीस्कन्दश्चशङ्करः । उत्तस्थुरागतंदृष्ट्वा सर्वेनन्दीश्वरादयः

परस्परञ्च भाषन्ते चक्रुस्तत्र च साम्प्रतम् ।
राजा कृत्वा च सम्भाषामुवास शिवसन्निधौ ॥ ३० ॥
प्रसन्नात्मा महादेवो भगवांस्तमुवाच ह ।

महादेव उवाच

विधाता जगतां ब्रह्मा पिता धर्मस्य धर्मवित् ॥ ३१ ॥

मरीचिस्तस्य पुत्रश्चवैष्णवश्चापिधार्मिकः। कश्यपश्चापि तत्पुत्रोधर्मिष्ठश्चप्रजापतिः

दक्षः प्रीत्या ददौ तस्मै भक्त्या कन्यास्त्रयोदश।

तास्वेका च च दनुः साध्वी तत्सौभाग्यविवर्धिता ॥ २३ ॥

चत्वारिंशद्दनोः पुत्रा दानवास्तेजसोल्वणाः। तेष्वेकोविप्रचित्तिश्च महाबलपराक्रमः तत्पुत्रो धार्मिको दम्भोविष्णुभक्तोजितेन्द्रियः। जजापपरमंमन्त्रंपुष्करेलक्षवत्सरम् शुक्राचार्यं गुरुं कृत्वा कृष्णस्य परमात्मनः। तदा त्वां तनयं प्रापपरंकृष्णपरायणम् पुरा त्वं पार्षदो गोपीगोपेष्वपि सुधार्मिकः। अधुना राधिकाशापाद्भारतेदानवेश्वरः आब्रह्मस्तम्बपर्यन्तं तुच्छं मेनेचवैष्णवः। सालोक्यसार्ष्टिसायुज्यसामीप्यंच हरेरपि दीयमानं नगृह्णन्ति वैष्णवाः सेवनं विना। ब्रह्मत्वममरत्वं वा तुच्छं मेने चवैष्णवः इन्द्रत्वं वा मनुत्वं वा नमेने गणनासु च। कृष्णभक्तस्य ते किं वादेवानांविषये भ्रमे देहि राज्यं च देवानां मत्प्रीतिंरक्षभूमिप !। सुखं स्वराज्ये त्वंतिष्ठदेवास्तिष्ठन्तुवैपदे अलं भूतविरोधेन सर्वे कश्यपवंशजाः। यानि कानि च पापानि ब्रह्महत्यादिकानि च

ज्ञातिद्रोहस्य पापानि कलां नार्हन्ति षोडशीम्।

स्वसम्पदाञ्च हानिं च यदि राजेन्द्र! मन्यसे ॥ ४३ ॥

सर्वावस्था च समतां केषां याति च सर्वदा। ब्रह्मणश्चतिरोभावोलयेप्राकृतिकेसदा आविर्भावःपुनस्तस्यप्रभावादीश्वरेच्छया। ज्ञानवृद्धिश्चतपसास्मृतिलोपश्चनिश्चितम् करोति सृष्टिं ज्ञानेन स्रष्टा सोऽपि क्रमेण च। परिपूर्णतमो धर्मःसत्येसत्याश्रयेसदा त्रिभागः सोऽपि त्रेतायां द्विभागो द्वापरेस्मृतः। एकभागःकलौपूर्वंतदंशश्चक्रमेणच कलामात्रं कलेः शेषे कुह्वां चन्द्रकला यथा। यादृक्तेजो रवेर्ग्रीष्मेनतादृक्छिशिरेपुनः दिनेषु यादृङ्मध्याह्नेसायं प्रातर्न तत्समम्। उदयं याति कालेनबालतां च क्रमेण च प्रकाण्डतां चतत्पश्चात्कालेऽस्तं पुनरेति सः। दिने प्रच्छन्नतांयातिकालेनदुर्दिनेघने राहुग्रस्ते कम्पितश्च पुनरेव प्रसन्नताम्। परिपूर्णतमश्चन्द्रः पूर्णिमायां च जायते ॥ तादृशो न भवेन्नित्यं क्षयं याति दिने दिने। पुनश्च पुष्टिमायाति परं कुह्वा दिनेदिने॥ सम्पद्युक्तः शुक्लपक्षे कृष्णे म्लानश्च यक्ष्मणा। राहुग्रस्तेदिनेम्लानोदुर्दिनेनविरोचिते

काले चन्द्रोभवेच्छुक्रोभ्रष्टश्रीःकालभेदतः । भविष्यतिवलिश्चेन्द्रोभ्रष्टश्रीःसुतलेऽधुना

काले न पृथ्वी सस्याढ्या सर्वाधारा वसुन्धरा ।

काले जले निमग्ना सा तिरोभूताऽम्बुविप्लुता ॥ ५९ ॥

काले नश्यन्ति विश्वानि प्रभवन्त्येव कालतः । चराचरश्च कालेननश्यन्तिप्रभवन्तिच

ईश्वरस्यैव समता ब्रह्मणः परमात्मनः । अहं मृत्युञ्जयो यस्मादसङ्ख्यं प्रकृतं लयम्

अदर्शं चापि द्रक्ष्यामि वारम्वारं पुनः पुनः । स च प्रकृतिरूपं च स एव पुरुषःस्मृतः

स चात्मा स च जीवश्च नानारूपधरः परः । करोति सततं योहितन्नामगुणकीर्तनम्

काले मृत्युं स जयति जन्म रोगभयं जराम् ।

स्रष्टा कृतो विधिस्तेन पाता विष्णुः कृतो भवेत् ॥ ६० ॥

अहं कृतश्च संहर्ता भयं विषयिणः कृताः । कालाग्निरुद्रंसंहारे नियोज्य विषये नृप!॥

अहं करोमि सततं तन्नामगुणकीर्तनम् । तेन मृत्युञ्जयोऽहं च ज्ञानेनाऽनेन निर्भयः ॥

मृत्युर्मृत्युभयाद्याति वैनतेयादिवोरगाः । इत्युक्त्वा स च सर्वेशः सर्वभावेनतत्परः

विरराम च शम्भुश्च सभामध्ये च नारद । राजातद्वचनं श्रुत्वा प्रशशंस पुनः पुनः ॥

उवाच मधुरं देवं परं विनयपूर्वकम् ।

शङ्खचूड उवाच

त्वया यत्कथितं देव! नान्यथा वचनं स्मृतम् ॥ ६१ ॥

तथाऽपि किञ्चिद्यथार्थं श्रूयतां मन्निवेदनम् । ज्ञातिद्रोहेमहत्पापंत्वयोक्तमधुनाचयत्

गृहीत्वातस्यसर्वस्वंकुतःप्रस्थापितो बलिः । मया समुद्धृतंसर्वमूर्ध्वमैश्वर्यमीश्वर

सुतलाचसमुद्धर्तुं नालं तत्र गदाधरः । सभ्रातृको हिरण्याक्षः कथं देवैश्च हिंसितः ॥

शुम्भादयश्चासुराश्चकथं देवैर्निपातिताः । पुरा समुद्रमथने पीयूषं भक्षितं सुरैः ॥ ६६

क्लेशभाजो वयं तत्र ते सर्वे फलभोगिनः । क्रीडाभाण्डमिदं विश्वंप्रकृतेःपरमात्मनः

यस्मै यत्र स ददाति तस्यैश्वर्यं भवेत्तदा । देवदानवयोर्वादः शश्वन्नैमित्तिकः सदाः

पराजयो जयस्तेषां कालेऽस्माकंक्रमेण च । तदाऽऽवयोर्विरोधेवागमनंनिष्फलंपरम्

समसम्बन्धिनो बन्धोरीश्वरस्यमहात्मनः । इयं तेमहतीलज्जायुद्धेऽस्माभिःसहाधुना

जये ततोऽधिका कीर्तिर्हानिश्चैव पराजये। इत्येतद्वचनं श्रुत्वा प्रहस्य च त्रिलोचनः
यथोचितमुत्तरं तमुवाच दानवेश्वरम्।

महादेव उवाच

युष्माभिः सह युद्धे मे ब्रह्मवंशसमुद्भवैः॥ ७५॥
का लज्जा महती राजन्न कीर्तिर्वा पराजये। युद्धमादौ हरेरेव मधुना कैटभेन च॥७६
हिरण्यकशिपोश्चैव सह तेनाऽऽत्मना नृप!। हिरण्याक्षस्य युद्धं च पुनस्तेनगदाभृता
त्रिपुरैः सह युद्धं च मयाऽपि च पुराकृतम्।
सर्वेश्वर्याः सर्वमातुः प्रकृत्याश्च बभूव ह॥ ७८॥
सह शुम्भादिभिः पूर्वं समरः परमाद्भुतः। पार्षदप्रवरस्त्वं च कृष्णस्य परमात्मनः॥
येये हताश्च दैतेया न हि केऽपि त्वया समाः। का लज्जामहतीराजन्ममयुद्धेत्वयासह
सुराणां शरणस्यैव प्रेषितश्च हरेरहो। देहि राज्यं च देवानामिति मे निश्चितं वचः
युद्धं वा कुरु मत्सार्धं वाव्यये किं प्रयोजनम्। इत्युक्त्वा शङ्करस्तत्रविरराम चनारद
उत्तस्थौ शङ्खचूडश्च ह्यमात्यैः सह सत्वरम्॥ ८२॥
इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे नारायण-
नारदसम्वादे शङ्खचूडकृतेप्रबोधवाक्यवर्णनंनामैकविंशोऽध्यायः॥ २१॥

---

# द्वाविंशोऽध्यायः

## देवासुरपराक्रमवर्णनम्

श्रीनारायण उवाच

शिवं प्रणम्य शिरसा दानवेन्द्रः प्रतापवान्। समारुरोह यानं चसहामात्यैःस सत्वरः
शिवः स्वसैन्यं देवांश्च प्रेरयामास सत्वरम्। दानवेन्द्रः ससैन्यश्चयुद्धारम्भेबभूव ह
स्वयं महेन्द्रो युयुधे सार्धं च वृषपर्वणा। भास्करो युयुधेविप्रचित्तिना सह सत्वरः

दम्भेन सह चन्द्रश्च चकार परमं रणम् । कालस्वरेण कालश्च गोकर्णेन हुताशनः ॥
कुबेरः कालकेयेन विश्वकर्मा मयेन च । भयङ्करेण मृत्युश्च संहरेण यमस्तथा ॥ ५ ॥
विकङ्कणेन वरुणश्चञ्चलेन समीरणः । बुधश्च घृतपृष्ठेन रक्ताक्षेण शनैश्चरः ॥ ६ ॥
जयन्तो रत्नसारेण वसवो वर्चसाङ्गणैः । अश्विनौ च दीप्तिमता धूम्रेण नलकूबरः॥
धुरन्धरेण धर्मश्च उषाक्षेण च मङ्गलः । शोभाकरेण वै भानुः पिठरेण च मन्मथः ॥
गोधामुखेनचूर्णेनखड्गेन च ध्वजेनच । काञ्चीमुखेन पिण्डेन धूम्रेणसह नन्दिना
विश्वेन च पलाशेनादित्याद्या युयुधुःपरे । एकादश च रुद्रा वै एकादशभयङ्करैः॥१०
महामारी च युयुधे चोग्रचण्डादिभिःसह । नन्दीश्वरादयः सर्वे दानवानां गणैः सह
युयुधुश्च महायुद्धे प्रलयेऽपि भयङ्करे । वटमूले च शम्भुश्च तस्थौ काल्या सुतेन च
सर्वे च युयुधुः सैन्यसमूहाः सततं मुने !। रत्नसिंहासने रम्ये कोटिभिर्दानवैः सह
उवास शङ्खचूडश्च रत्नभूषणभूषितः । शङ्करस्य च ये योधा दानवैश्च पराजिताः ॥
देवाश्च दुद्रुवुः सर्वे भीताश्च क्षतविग्रहाः । चकार कोपं स्कन्दश्च देवेभ्यश्चाभयंददौ
बलञ्च स्वगणानाञ्च वर्धयामास तेजसा । सोऽयमेकश्च युयुधे दानवानां गणैः सह
अक्षौहिणीनां शतकं समरे च जघान सः । असुरान्पातयामास काली कमललोचना
पपौ रक्तं दानवानामतिक्रुद्धा ततः परम् । दशलक्षगजेन्द्राणां शतलक्षञ्च च कोटिशः
समादायैकहस्तेन मुखे चिक्षेप लीलया । कबन्धानां सहस्रञ्च ननर्त समरे मुने !॥१६
स्कन्दस्य शरजालेन दानवाः क्षतविग्रहाः । भीताश्च दुद्रुवुः सर्वे महारणपराक्रमाः ॥
वृषपर्वा विप्रचित्तिर्दम्भश्चापि विकङ्कणः । स्कन्देन सार्धं युयुधुस्ते सर्वेविक्रमेणच
महामारीचयुयुधे नबभूवपराङ्मुखी । बभूवुस्तेच संक्षुब्धाःस्कन्दस्यशक्तिपीडिताः
न दुद्रुवुर्भयात्स्वर्गे पुष्पवृष्टिर्बभूव ह । स्कन्दस्य समरं दृष्ट्वा महारुद्रसमुल्वणम् ॥
दानवानां क्षयकरं यथा प्राकृतिकोलयः । राजा विमानमारुह्य चकार बाणवर्षणम् ॥
नृपस्य शरवृष्टिश्च घनस्य वर्षणं यथा । महाघोरान्धकारश्च वह्न्युत्थानं बभूव च ॥
देवाः प्रदुद्रुवुः सर्वेऽप्यन्ये नन्दीश्वरादयः । एक एव कार्त्तिकेयस्तथौ समरमूर्धनि

पर्वतानाञ्च सर्पाणां शिलानां शाखिनां तथा ।

नृपश्चकार वृष्टिं च दुर्वाराञ्च भयङ्करीम् ॥ ३७ ॥

नृपस्य शरवृष्ट्या च प्रहितःशिवनन्दनः । नीहारेण च सान्द्रेण प्रहितोभास्करोयथा धनुश्चिच्छेद स्कन्दस्य दुर्वहञ्च भयङ्करः । बभञ्ज रथं दिव्यं चिच्छेद रथपीठकान् मयूरंजर्जरीभूतं दिव्यास्त्रेणचकार सः । शक्तिंचिक्षेपसूर्याभां तस्य वक्षस्यघातिनीम् क्षणं मूर्च्छाञ्च सम्प्राप बभूवचेतनः पुनः । गृहीत्वा तद्धनुर्दिव्यं यद्दत्तं विष्णुना पुरा रत्नेन्द्रसारनिर्माणयानमारुह्य कार्त्तिकः । शस्त्रास्त्रंचगृहीत्वा च चकार रणमुल्वणम् सर्पाश्चपर्वतांश्चैववृक्षांश्चप्रस्तरांस्तथा । सर्वांश्चिच्छेदकोपेनदिव्यास्त्रेणशिवात्मजः वह्निनिर्वापयामास पार्जन्येन प्रतापवान् । रथं धनुश्च चिच्छेद शङ्खचूडस्य लीलया सन्नाहं सारथिञ्चैवकिरीटंमुकुटोज्ज्वलम् । चिक्षेपशक्तिं शुक्लाभां दानवेन्द्रस्यवक्षसि मूर्च्छां सम्प्राप्य राजा च चेतनश्च बभूवह । आरुरोह यानमन्यद्धनुर्जग्राह सत्वरः ॥ चकार शरजालञ्च मायया मायिनाम्वरः । गुहं चच्छाद समरे शरजालेन नारद ॥३९ जग्राह शक्तिमव्यग्रां शतसूर्यसमप्रभाम् । प्रलयाग्निशिखारूपांविष्णोश्चतेजसावृताम् चिक्षेप तां च कोपेन महावेगेन कार्त्तिके । पपातशक्तिस्तद्गात्रे वह्निराशिरिवोज्ज्वला

मूर्च्छां सम्प्राप शक्त्या च कार्त्तिकेयो महाबलः ।

काली गृहीत्वा तं क्रोडे निनाय शिवसन्निधौ ॥ ४० ॥

शिवस्तं चापिज्ञानेनर्जीवयामास लीलया । ददौ बलमनन्तं च समुत्तस्थौप्रतापवान् काली जगाम समरंरक्षितुंकार्त्तिकस्य या । वीरास्तामनुजग्मुश्चते च नन्दीश्वरादयः सर्वे देवाश्च गन्धर्वा यक्षराक्षसकिन्नरा । वाद्यभाण्डाश्च बहुशः शतशो मधुवाहकाः सा च गत्वाऽथ संग्रामंसिंहनादञ्चकार च । देव्याश्चसिंहनादेन प्रापुर्मूर्च्छाञ्चदानवाः अट्टाट्टहासमशिवं चकार च पुनः पुनः । दृष्ट्वा पपौ च माध्वीकं ननर्त रणमूर्धनि ॥ उग्रदंष्ट्रा चोग्रदण्डाकोटवी च पपौ मधु । योगिनीडाकिनीनाञ्च गणाः सुरगणादयः

दृष्ट्वा कालीं शङ्खचूडः शीघ्रमाजौ समाययौ ।

दानवाश्च भयम्प्रापू राजा तेभ्योऽभयं ददौ ॥ ४१ ॥

काली चिक्षेप वह्निञ्च प्रलयाग्निशिखोपमम् । राजा निर्वापयामास पार्जन्येनचलीलया

चिक्षेप वारुणं सा च तीव्रञ्च महदद्भुतम् । गान्धर्वेण चच्छेद दानवेन्द्रश्च लीलया
माहेश्वरं प्रचिक्षेप कालीवह्निशिखोपमम् । राजा जघान तं शीघ्रं वैष्णवेनचलीलया
नारायणास्त्रं सा देवी चिक्षेप मन्त्रपूर्वकम् । राजा ननाम तद्दृष्ट्वा चावरुह्य रथादसौ
ऊर्ध्वंजगाम तच्चास्त्रं प्रलयाग्निशिखोपमम् । पपात शङ्खचूडश्च भक्त्या तं दण्डवद्भुवि

ब्रह्मास्त्रं सा च चिक्षेप यत्नतो मन्त्रपूर्वकम् ।
ब्रह्मास्त्रेण महाराजो निर्वापञ्च चकार स ॥ ५३ ॥

तदा चिक्षेप दिव्यास्त्रं सादेवीमन्त्रपूर्वकम् । राजादिव्यास्त्रजालेन तन्निर्वाणञ्चकारच
देवीचिक्षेपशक्तिं च यत्नतोयोजनायताम् । राजा दिव्यास्त्रजालेन शतखण्डाञ्चकारह
जग्राह मन्त्रपूतञ्च देवी पाशुपतं रुषा । निक्षेपणं निरोद्धुञ्च वाग्बभूवाऽशरीरिणी

मृत्युः पाशुपते नास्ति नृपस्य च महात्मनः ।
यावदस्ति च मन्त्रस्य कवचं च हरेरिति ॥ ५७ ॥

यावत्सतीत्वमस्त्येव सत्याश्चनृपयोषितः । तावदस्यजरामृत्युर्नास्तीतिब्रह्मणोवचः
इत्याकर्ण्य भद्रकाली न तच्चिक्षेपशस्त्रकम् । शतलक्षं दानवानां जग्रासलीलयाक्षुधा
ग्रस्तुं जगाम वेगेन शङ्खचूडं भयङ्करी । दिव्यास्त्रेण सुतीक्ष्णेन वारयामास दानवः
खड्गं चिक्षेपसा देवीग्रीष्मसूर्योपमं यथा । दिव्यास्त्रेण दानवेन्द्रशतखण्डञ्चकारसः
पुनर्ग्रस्तुं महादेवी वेगेनचजगाम तम् । सर्वसिद्धेश्वरः श्रीमान्ववृधे दानवेश्वरः ॥६२
वेगेन मुष्टिना काली कोपयुक्ता भयङ्करी । बभञ्जच रथं तस्य जघान सारथिं सती

सा च शूलं च चिक्षेप प्रलयाग्निशिखोपमम् ।
वामहस्तेन जग्राह शङ्खचूडः स्वलीलया ॥ ६४ ॥

मुष्ट्या जघान तं देवी महाकोपेन वेगतः । बभ्राम च तया दैत्यः क्षणंमूर्च्छामवाप च
क्षणेन चेतनां प्राप्य समुत्तस्थौ प्रतापवान् । न चकार बाहुयुद्धं देव्यासहननामताम्
देव्याश्चास्त्रंसचिच्छेदजग्राहचस्वतेजसा । नास्त्रंचिक्षेप तां भक्त्यामातृभक्तयातुवैष्णवः
गृहीत्वा दानवं देवी भ्रामयित्वापुनः पुनः । ऊर्ध्वं च प्रापयामास महावेगेनकोपिता
ऊर्ध्वात्पपात वेगेनशङ्खचूडःप्रतापवान् । निपत्यचसमुत्तस्थौप्रणम्यभद्रकालिकाम्

रत्नेन्द्रसारनिर्माणं विमानं सुमनोहरम् । आरुरोह हर्षयुक्तो न विश्रान्तो महारणे ॥
दानवानां च क्षतजं सादेवीचपपौक्षुधा । पीत्वाभुक्त्वाभद्रकालीजगामशंकरान्तिकम्
उवाच रणवृत्तान्तं पौर्वापर्यंयथाक्रमम् । श्रुत्वा जहास शम्भुश्चदानवानां विनाशनम्
लक्षं च दानवेन्द्राणामवशिष्टंरणेऽधुना । भुञ्जन्त्यानिर्गतंवक्त्रात्तदन्यं भुक्तमीश्वर ७३
सङ्ग्रामे दानवेन्द्रं च हन्तुंपाशुपतेन वै । अवध्यस्तव राजेतिवाग्बभूवाशरीरिणी७४
राजेन्द्रश्च महाज्ञानी महाबलपराक्रमः । न च चिक्षेप मय्यस्त्रं चिच्छेद मम सायकम्

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे
नारायणनारदसम्वादे कालीशङ्खचूडयुद्धवर्णनंनामद्वाविंशोऽध्यायः ॥ २२ ॥

---

# त्रयोविंशोऽध्यायः

## शङ्खचूडवधवर्णनम्

### श्रीनारायण उवाच

शिवस्तत्त्वं समाकर्ण्य तत्त्वज्ञानविशारदः । ययौ स्वयं च समरे स्वगणैः सहनारद
शङ्खचूडः शिवं दृष्ट्वा विमानादवरुह्य च । ननाम परया भक्त्या शिरसा दण्डवद्भुवि ॥
तम्प्रणम्य च वेगेन विमानमारुरोह सः । तूर्णं चकार सन्नाहं धनुर्जग्राह दुर्वहम् ॥३॥
शिवदानवयोर्युद्धं पूर्णमब्दशतं पुरा । न बभूवतुरन्योन्यं ब्रह्मञ्जयपराजयौ ॥ ४ ॥
न्यस्तशस्त्रश्च भगवान्न्यस्तशस्त्रश्च दानवः । रथस्थः शङ्खचूडश्चवृषस्थोवृषभध्वजः
दानवानां च शतकमुद्धृतं च बभूवह । रणे ये ये मृता शम्भुर्जीवयामास तान्विभुः॥
एतस्मिन्नन्तरे वृद्धोब्राह्मणः परमातुरः । आगत्य च रणस्थानमुवाच दानवेश्वरम् ७

### वृद्धब्राह्मण उवाच

देहि भिक्षांचराजेन्द्रमह्यंविप्रायसाम्प्रतम् । त्वंसर्वसम्पदांदातायन्मेमनसिवाञ्छितम्
निरीहाय च वृद्धायतृषितायचसाम्प्रतम् । पश्चात्त्वांकथयिष्यामिपुरःसत्यंचकुर्विति

ओमित्युवाच राजेन्द्र! प्रसन्नवदनेक्षणः । कवचार्थी जनश्चाहमित्युवाचाऽतिमायया
तच्छ्रुत्वा कवचं दिव्यं जग्राह हरिरेव च । शङ्खचूडस्य रूपेण जगाम तुलसीं प्रति
गत्वा तस्यां मायया च वीर्याधानं चकार च । अथ शम्भुर्हरेः शूलं जग्राह दानवं प्रति
ग्रीष्ममध्याह्नमार्तण्डप्रलयाग्निशिखोपमम् । दुर्निवार्यं च दुर्धर्षमव्यर्थं वैरिघातकम्॥
तेजसा चक्रतुल्यञ्च सर्वशस्त्रास्त्रसारकम् । शिवकेशवयोरन्यदुर्वहं च भयङ्करम् १५
धनुः सहस्रं दैर्घ्येण प्रस्थेण शतहस्तकम् । सजीवं ब्रह्मरूपञ्च नित्यरूपमनिर्दिशम्
संहर्तुं सर्वं ब्रह्माण्डमलंयत्स्वीयलीलया । चिक्षेप तोलनं कृत्वा शङ्खचूडे च नारद !॥

राजा चापं परित्यज्य श्रीकृष्णचरणाम्बुजम् ।
ध्यानं चकार भक्त्या च कृत्वा योगासनं धिया ॥ १७ ॥

शूलं च भ्रमणं कृत्वा पपात दानवोपरि । चकार भस्मसात्तं च सरथं चाऽथ लीलया
राजा धृत्वा दिव्यरूपं किशोरं गोपवेषकम् । द्विभुजं मुरलीहस्तं रत्नभूषणभूषितम्
रत्नेन्द्रसारनिर्माणं वेष्टितं गोपकोटिभिः । गोलोकादागतं यानमारुरोह पुरं ययौ

गत्वा ननाम शिरसा स राधाकृष्णयोर्मुने !।
भक्त्या च चरणाम्भोजं रासे वृन्दावने वने ॥ २१ ॥

सुदामानं च तौ दृष्ट्वा प्रसन्नवदनेक्षणौ । क्रोडे चक्रतुरत्यन्तं प्रेम्णाऽतिपरिसंयुतौ
अथ शूलं च वेगेन प्रययौ तं च सादरम् । अस्थिभिः शङ्खचूडस्य शङ्खजातिर्बभूव ह
नानाप्रकाररूपेण शश्वत्पूता सुरार्चने । प्रशस्तं शङ्खतोयं च देवानां प्रीतिदं परम् २४
तीर्थतोयस्वरूपं च पवित्रं शम्भुनाविना । शङ्खशब्दोभवेद्यत्रतत्रलक्ष्मीःसुसंस्थिरा
स स्नातः सर्वतीर्थेषु यः स्नातः शङ्खवारिणा । शङ्खो हरेरधिष्ठानंयत्रशङ्खस्ततोहरिः
तत्रैववसतेलक्ष्मीर्दूरीभूतममङ्गलम् । स्त्रीणां च शङ्खध्वनिभिःशूद्राणांचविशेषतः

भीता रुष्टा याति लक्ष्मीस्तत्स्थलादन्यदेशतः ।
शिवोऽपि दानवं हत्वा शिवलोकं जगाम ह ॥ २८ ॥

प्रहृष्टो वृषभारूढः स्वगणैश्च समावृतः । सुराः स्वविषयं प्रापुः परमानन्दसंयुताः
नेदुर्दुन्दुभयः स्वर्गे जगुर्गन्धर्वकिन्नराः । बभूव पुष्पवृष्टिश्च शिवस्योपरि सन्ततम्

प्रशशंसुः सुरास्तं च मुनीन्द्रप्रवरादयः ।

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यांसंहितायां नवमस्कन्धे शङ्खचूडवधवर्णनं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## चतुर्विंशोऽध्यायः

### तुलसीमाहात्म्यकीर्तनम्

नारद उवाच

नारायणश्च भगवान्वीर्याधानं चकार ह । तुलस्यां केन रूपेण तन्मे व्याख्यातुमर्हसि

श्रीनारायण उवाच

नारायणश्च भगवान्देवानां साधनेषु च । शङ्खचूडस्य कवचं गृहीत्वा विष्णुमायया पुनर्विधाय तद्रूपं जगाम तत्सतीगृहम् । पातिव्रत्यस्य नाशेन शङ्खचूडजिघांसया दुन्दुभिं वादयामास तुलसीद्वारसन्निधौ । जयशब्दं च तद्द्वारे बोधयामास सुन्दरीम् तच्छ्रुत्वा च रवं साध्वी परमानन्दसंयुता । राजमार्गं गवाक्षेण ददर्श परमादरात्

ब्राह्मणेभ्यो धनं दत्त्वा कारयामास मङ्गलम् ।
बन्दिभ्यो भिक्षुकेभ्यश्च वाचिभ्यश्च धनं ददौ ॥ ६ ॥

अवरुह्य रथाद्देवो देव्याश्च भवनं ययौ । अमूल्यरत्ननिर्माणं सुन्दरं सुमनोहरम् ॥

तं दृष्ट्वा च पुरतः कान्तं सा तं कान्तं मुदाऽन्विता ।
तत्पादं क्षालयामास ननाम च रुरोद च ॥ ८ ॥

रत्नसिंहासने रम्ये वासयामास कामुकी । ताम्बूलं च ददौ तस्मै कर्पूरादिसुवासितम् अद्य मे सफलं जन्म जीवनं च बभूव ह । रणे गतं च प्राणेशं पश्यन्त्याश्च पुनर्गृहे ॥ सस्मिता सकटाक्षं च सकामा पुलकाङ्किता । पप्रच्छ रणवृत्तान्तं कान्तं मधुरया गिरा

तुलस्युवाच

असंख्यविश्वसंहर्त्रा सार्धमाजौ तव प्रभो ! । कथं बभूव विजयस्तन्मे ब्रूहि कृपानिधे तुलसीवचनं श्रुत्वा प्रहस्य कमलापतिः । शङ्खचूडस्य रूपेण तामुवाचाऽमृतं वचः ॥

श्रीभगवानुवाच

आवयोः समरः कान्ते पूर्णमब्दं बभूव ह । नाशो बभूव सर्वेषां दानवानां चकामिनि
प्रीतिं च कारयामास ब्रह्मा च स्वयमावयोः । देवानामधिकारश्चप्रदत्तोब्रह्मणाऽऽज्ञया
मयाऽऽगतं स्वभवनं शिवलोकं शिवो गतः । इत्युक्त्वा जगतां नाथःशयनंचचकारह
रेमे रमापतिस्तत्र रमया सह नारद !। सा साध्वी सुखसम्भोगादाकर्षणव्यतिक्रमात्
सर्वं वितर्कयामास कस्त्वमेवेत्युवाच सा ।

तुलस्युवाच

को वा त्वं वद मायेश! भुक्ताऽहं मायया त्वया ॥ १८ ॥
दूरीकृतं मत्सतीत्वं यदतस्त्वां शपामि हे । तुलसीवचनं श्रुत्वा हरिः शापभयेन च॥
दधार लीलया ब्रह्मन्स्वमूर्तिं सुमनोहराम् । ददर्श पुरतो देवी देवदेवं सनातनम् ॥ २०
नवीननीरदश्यामं शरत्पङ्कजलोचनम् । कोटिकन्दर्पलीलाभं रत्नभूषणभूषितम् ॥ २१
ईषद्धास्यंप्रसन्नास्यं शोभितंपीतवाससम् । तंदृष्ट्वाकामिनीकामंमूर्च्छांसम्प्रापलीलया
पुनश्च चेतनाम्प्राप्य पुनः सा तमुवाच ह ।

तुलस्युवाच

हे नाथ! ते दया नास्ति पाषाणसदृशस्य च ॥ २३ ॥
छलेन धर्मभङ्गेन ममस्वामी त्वया हतः । पाषाणहृदयस्त्वं हि दयाहीनो यतः प्रभो!
तस्मात्पाषाणरूपस्त्वं भवे देव भवाधुना । येवदन्ति चसाधुं त्वांतेभ्रान्ताहिनसंशयः
भक्तोविनाऽपराधेन परार्थे च कथं हतः । भृशं रुरोद शोकार्ता विललाप मुहुर्मुहुः
ततश्च करुणां दृष्ट्वा करुणारससागरः । नयेन तां बोधयितुमुवाच कमलापतिः ॥ २७

श्रीभगवानुवाच

तपस्त्वया कृतं भद्रे! मदर्थे भारते चिरम् । त्वदर्थे शङ्खचूडश्च चकार सुचिरं तपः ॥
कृत्वा त्वां कामिनीं सोऽपि विजहार च तत्क्षणात् ।
अधुना दातुमुचितं तवैव तपसः फलम् ॥ २६ ॥
इदं शरीरं त्यक्त्वा चदिव्यदेहं विधाय च । रामे! रम मया सार्धं त्वं रमासदृशी भव

इयं तनुर्नदीरूपा गण्डकीति च विश्रुता। पूता सुपुण्यदा नृणां पुण्ये भवतु भारते
तव केशसमूहश्च पुण्यवृक्षो भविष्यति। तुलसीकेशसम्भूता तुलसीतिच विश्रुता॥
त्रिषु लोकेषु पुष्पाणां पत्राणां देवपूजने। प्रधानरूपातुलसी भविष्यति वरानने॥
स्वर्गे मर्त्ये च पाताले गोलोके ममसन्निधौ। भवत्वं तुलसी वृक्षवरा पुष्पेषु सुन्दरी
गोलोके विरजातीरे रासे वृन्दावने वने। भाण्डीरे चम्पकवने रम्ये चन्दनकानने॥
माधवीकेतकीकुन्दमालिकामालतीवने। वासस्तेऽत्रैव भवतु पुण्यस्थानेषु पुण्यदः
तुलसीतरुमूलेषु पुण्यदेशेषु पुण्यदम्। अधिष्ठानञ्चतीर्थानां सर्वेषाञ्च भविष्यति
तत्रैव सर्वदेवाना ममाधिष्ठानमेव च। तुलसीपत्रपतनप्राप्तये च वरानने॥ ३८॥
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः। तुलसीपत्रतोयेन योऽभिषेकं समाचरेत्॥
सुधाघटसहस्राणां या तुष्टिस्तु भवेद्धरेः। सा च तुष्टिर्भवेन्नूनं तुलसीपत्रदानतः॥
गवामयुतदानेन यत्फलं तत्फलं भवेत्। तुलसीपत्रदानेन तत्फलं कार्त्तिके सति॥
तुलसीपत्रतोयञ्च मृत्युकाले च योलभेत्। मुच्यतेसर्वपापेभ्योविष्णुलोकेमहीयते
नित्यंयस्तुलसीतोयंभुङ्क्तेभक्त्याचमानवः। लक्षाश्वमेधजंपुण्यंसम्प्राप्नोतिसमानवः
तुलसीस्वकरे कृत्वाधृत्वादेहेचमानवः। प्राणांस्त्यजतितीर्थेषुविष्णुलोकसगच्छति
तुलसीकाष्ठनिर्माणमालां गृह्णाति यो नरः। पदे पदेऽश्वमेधस्य लभतेनिश्चितंफलम्
तुलसी स्वकरे कृत्वा स्वीकारं यो नरक्षति। स यातिकालसूत्रञ्चयावचन्द्रदिवाकरौ
करोतिमिथ्याशपथं तुलस्यायोऽत्रमानवः। स यातिकुम्भीपाकचयावदिन्द्राश्चतुर्दश
तुलसीतोयकणिकां मृत्युकाले च योलभेत्। रत्नयानं समारुह्य वैकुण्ठेप्राप्यतेध्रुवम्

पूर्णिमायाममायां च द्वादश्यां रविसङ्क्रमे।
तैलाभ्यङ्गं च कृत्वा च मध्याह्ने निशि सन्ध्ययोः॥ ४९॥
आशौचेऽशुचिकाले ये रात्रिवासोऽन्विता नराः।
तुलसीं ये विचिन्वन्ति ते छिन्दन्ति हरेः शिरः॥ ५०॥

त्रिरात्रं तुलसीपत्रं शुद्धं पर्युषितं सति॥ श्राद्धे व्रते च दाने च प्रतिष्ठायां सुरार्चने॥
भूगतं तोयपतितं यद्दत्तं विष्णवे सति॥ शुद्धं च तुलसीपत्रंक्षालनादन्यकर्मणि॥

वृक्षाधिष्ठातृदेवी या गोलोकेऽत्र निरामये । कृष्णेनसार्धंनित्यंचनित्यक्रीडांकरिष्यसि
नद्यधिष्ठातृदेवीया भारते च सुपुण्यदा । लवणोदस्य सापत्नी मदंशस्य भविष्यति
त्वं च स्वयं महासाध्वी वैकुण्ठेममसन्निधौ । रमासमाचरामाचभविष्यसिनसंशयः
अहं च शैलरूपेण गण्डकीतीरसन्निधौ । अधिष्ठानं करिष्यामि भारते तव शापतः
कोटिसंख्यास्तत्रकीटास्तीक्ष्णदंष्ट्रावरायुधैः। तच्छिलाकुहरेचक्रंकरिष्यन्तिमदीयकम्
एकद्वारंचतुश्चक्रंवनमालाविभूषितम् । नवीननीरदाकारं लक्ष्मीनारायणाभिधम् ॥
एकद्वारं चतुश्चक्रं नवीननीरदोपमम् । लक्ष्मीजनार्दनो ज्ञेयो रहितो वनमालया ॥ ५९
द्वारद्वये चतुश्चक्रं गोष्पदेन विराजितम् । रघुनाथाभिधं ज्ञेयं रहितं वनमालया ॥ ६०
अतिक्षुद्रं द्विचक्रं च नवीनजलदप्रभम् । तद्वामनाभिधं ज्ञेयं रहितं वनमालया ॥ ६१॥
अतिक्षुद्रं द्विचक्रं च वनमालाविभूषितम् । विज्ञेयं श्रीधरं रूपं श्रीप्रदं गृहिणां सदा
स्थूलञ्चवर्तुलाकारं रहितं वनमालया । द्विचक्रं स्फुटमत्यन्तं ज्ञेयं दामोदराभिधम् ॥
मध्यमं वर्तुलाकारं द्विचक्रं बाणविक्षतम् । रणरामाभिधं ज्ञेयं शरतूणसमन्वितम्
मध्यमं सप्तचक्रञ्च च्छत्रभूषणभूषितम् । राजराजेश्वरं ज्ञेयं राजसम्पत्प्रदं नृणाम् ॥
द्विसप्तचक्रं स्थूलञ्च नवनीरदसुप्रभम् । अनन्ताख्यं च विज्ञेय चतुर्वर्गफलप्रदम् ॥
चक्राकारं द्विचक्रञ्च सश्रीक जलदप्रभम् । सगोष्पदं मध्यमञ्च विज्ञेयं मधुसूदनम्॥
सुदर्शनं चकचक्र गुप्तचक्रं गदाधरम् । द्विचक्रं हयवक्त्राभ हयग्रीवं प्रकीर्तितम् ॥
अतीव विस्तृतास्यञ्चद्विचक्रविकटं सति ।। नरसिंहं सुविज्ञेयं सद्योवैराग्यदं नृणाम्
द्विचक्रविस्तृतास्यञ्चवनमालासमन्वितम् । लक्ष्मीनृसिंहंविज्ञेयंगृहिणांचसुखप्रदम्
द्वारदेशे द्विचक्रं च सश्रीकञ्च समं स्फुटम् । वासुदेवं तु विज्ञेयं सर्वकामफलप्रदम् ॥
प्रद्युम्नं सूक्ष्मचक्रञ्च नवीननीरदप्रभम् । सुषिरच्छिद्रबहुलं गृहिणाञ्च सुखप्रदम् ॥७२
द्वे चक्रे चैकलग्ने च पृष्ठं यत्र तुपुष्कलम् । सङ्कर्षणं सुविज्ञेयं सुखदं गृहिणां सदा॥
अनिरुद्धं तु पीताभं वर्तुलं चातिशोभनम् । सुखप्रदं गृहस्थानां प्रवदन्ति मनीषिणः
शालग्रामशिला यत्र तत्र सन्निहितोहरिः । तत्रैव लक्ष्मीर्वसति सर्वतीर्थसमन्विता
यानि कानिच पापानि ब्रह्महत्यादिकानि च ।

तानि सर्वाणि नश्यन्ति शालग्रामशिलार्चनात् ॥ ७६ ॥

छत्राकारे भवेद्राज्यं वर्तुले च महाश्रियः । दुःखं च शकटाकारे शूलाग्रे मरणं ध्रुवम् ॥
विकृतास्ये च दारिद्र्यं पिङ्गले हानिरेवच । भग्नचक्रेभवेद्व्याधिर्विदीर्णेमरणंध्रुवम्
व्रतं दानं प्रतिष्ठा च श्राद्धञ्च देवपूजनम् । शालग्रामस्यसान्निध्यात्प्रशस्तं तद्भवेदिति
स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः । सर्वयज्ञेषु तीर्थेषु व्रतेषु च तपःसु च॥८०

पाठे चतुर्णां वेदानां तपसां करणे सति ।

तत्पुण्यं लभते नूनं शालग्रामशिलार्चनात् ॥ ८१ ॥

"शालग्रामशिलातोयैर्योऽभिषेकं सदाचरेत् । सर्वदानेषुयत्पुण्यं प्रदक्षिणंभुवोयथा"
शालग्रामशिलातोयं नित्यं भुङ्क्ते च योनरः । सुरेप्सितं प्रसादञ्च लभतेनात्रसंशयः

तस्य स्पर्शञ्च वाञ्छन्ति तीर्थानि निखिलानि च ।

जीवन्मुक्तो महापूतोऽप्यन्ते याति हरेः पदम् ॥ ८३ ॥

तत्रैवहरिणासार्धमसङ्ख्यंप्राकृतंलयम् । याम्यत्येव हि दास्येचनियुक्तोदास्यकर्मणि
यानि कानिच पापानि ब्रह्महत्यासमानि च । तं दृष्ट्वा च पलायन्ते वैनतेयादिवोरगाः
तत्पादरजसा देवी सद्यःपूतावसुन्धरा । पुंसां लक्षंतत्पितॄणां निस्तरेत्तस्य जन्मतः

शालग्रामशिलातोयं मृत्युकाले च यो लभेत् ।

सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ ८७ ॥

निर्वाणमुक्तिं लभते कर्मभोगात्प्रमुच्यते । विष्णोः पदे प्रलीनश्च भविष्यतिनसंशयः

शालग्रामशिलां धृत्वा मिथ्यावाक्यं वदेत्तु यः ।

स याति कुम्भीपाके च यावद्वै ब्रह्मणो वयः ॥ ८६ ॥

शालग्रामशिलांधृत्वास्वीकारंयोनपालयेत् । स प्रयात्यसिपत्रञ्च लक्षमन्वन्तरावधि
तुलसीपत्रविच्छेदंशालग्रामेकरोतियः । तस्यजन्मान्तरेकान्तेस्त्रीविच्छेदोभविष्यति
तुलसीपत्रविच्छेदंशङ्खेयोहिकरोति यः । भार्याहीनोभवेत्सोऽपिरोगीचसप्तजन्मसु
शालग्रामञ्चतुलसीं शङ्खं चैकत्रएव च । यो रक्षति महाज्ञानी स भवेच्छ्रीहरेः प्रियः
सकृदेव हि यो यस्यां वीर्याधानंकरोति च । तद्विच्छेदेतस्य दुःखं भवेदेवपरस्परम्

त्वं प्रिया शङ्खचूडस्य चैकमन्वन्तरावधि । शङ्खेनसार्धं त्वद्भेदः केवलं दुःखदस्तथा
इत्युक्त्वाश्रीहरिस्तांचविररामच नारद । सा च देहं परित्यज्य दिव्यरूपम्विधायच
यथाश्रीश्चतथासाचाऽप्युवासहरिवक्षसि । स जगाम तयासार्धम्वैकुण्ठं कमलापतिः
लक्ष्मी सरस्वती गङ्गातुलसा चाऽपि नारद !। हरेःप्रियाश्चतस्रश्चबभूवुरीश्वरस्य च
सद्यस्तद्देहजाता च बभूवगण्डकीनदी । ईश्वरःसोऽपि शैलश्च तत्तीरेपुण्यदोनृणाम्

कुर्वन्ती तत्र कीटाश्च शिलां बहुविधां मुने !।
जले पतन्ति या याश्च फलदास्ताश्च निश्चितम् ॥ १०० ॥

स्थलस्थाःपिङ्गलाज्ञेयाश्चोपतापाद्धवेरिति । इत्येवंकथितंसर्वं किं भूयःश्रोतुमिच्छसि

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे
नारायणनारदसम्वादे तुलसीमाहात्म्येनसहशालग्राममहत्त्ववर्णनंनाम
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

# पञ्चविंशोऽध्यायः

## तुलसीपूजाकथनम्

नारद उवाच

तुलसीचयदापूज्याकृतानारायणप्रिया । अस्याः पूजाविधानश्चस्तोत्रश्चवद साम्प्रतम्
केन पूजा कृता केन स्तुता प्रथमतो मुने । तत्र पूज्या सा बभूव केन वा वद मामहो

सूत उवाच

नारदस्य वचः श्रुत्वा प्रहस्य मुनिपुङ्गवः । कथां कथितुमारेभे पुण्यां पापहरांपराम्

नारायण उवाच

हरिः सम्पूज्य तुलसीं रेमे च रमया सह । रमासमानसौभाग्यां चकार गौरवेण च
सेहे च लक्ष्मीर्गङ्गा च तस्याश्च नवसङ्गमम् । सौभाग्यगौरवंकोपात्तेनसेहेसरस्वती
सा तां जघान कलहे मानिनी हरिसन्निधौ । व्रीडया चापमानेन सान्तर्धानंचकारह

सर्वसिद्धेश्वरी देवी ज्ञानिनांसिद्धियोगिनी । जगामाऽदर्शनं कोपात्सर्वत्र च हरेरहो
हरिर्न दृष्ट्वा तुलसीबोधयित्वासरस्वतीम् । तदनुज्ञां गृहीत्वा च जगाम तुलसीवनम्

तत्र गत्वा च सुस्नातो हरिः स तुलसीं सतीम् ।
पूजयामास तां ध्यात्वा स्तोत्रं भक्त्या चकार ह ॥ १ ॥

लक्ष्मीमायाकामवाणीबीजपूर्वं दशाक्षरम् । वृन्दावनीति ङेन्तञ्च वह्निजायान्तमेव च
अनेन कल्पतरुणा मन्त्रराजेन नारद । पूजयेद्यो विधानेन सर्वसिद्धिं लभेद्ध्रुवम् ॥११
घृतदीपेन धूपेन सिन्दूर चन्दनेन च । नैवेद्येन च पुष्पेण चोपचारेण नारद !॥ १२॥
हरिस्तोत्रेण तुष्टा सा चाभिभूतामहीरुहात् । प्रसन्नाचरणाम्भोजे जगामशरणंशुभा

वरंतस्यै ददौ विष्णुः सर्वपूज्या भवेरिति ।
अहं त्वां धारयिष्यामि स्वरूपां मूर्ध्नि वक्षसि ॥ १४ ॥
सर्वे त्वां धारयिष्यन्ति स्वमूर्ध्नि च सुरादयः ।
इत्युक्त्वा तां गृहीत्वा च प्रययौ स्वालयम्विभुः ॥ १५ ॥

नारद उवाच

किंध्यानंस्तवनंकिंवाकिंवापूजाविधानकम् । तुलस्याश्चमहाभागतन्मेव्याख्यातुमर्हसि

नारायण उवाच

अन्तर्हितायां तस्याञ्चहरिर्वृन्दावनेतदा । तस्याश्चक्रे स्तुतिं गत्वा तुलसींविरहातुरः

श्रीभगवानुवाच

वृन्दरूपाश्चवृक्षाश्चयदैकत्रभवन्तिच । विदुर्बुधास्तेनवृन्दां मत्प्रियां तांभजाम्यहम्
पुराबभूवयादेवीत्वादौवृन्दावनेवने । तेन वृन्दावनी ख्याता सौभाग्यातांभजाम्यहम्
असङ्ख्येषुचविश्वेषुपूजितायानिरन्तरम् । तेनविश्वपूजिताख्यापूजिताञ्चभजाम्यहम्
असङ्ख्यानिचविश्वानिपवित्राणित्वयासदा । ताविश्वपावनींदेवीविरहेणस्मराम्यहम्
देवानतुष्टाःपुष्पाणांसमूहेनययाविना । तां पुष्पसारांशुद्धाञ्च द्रष्टुमिच्छामिशोकतः

विश्वे यत्प्राप्तिमात्रेण भक्तानन्दो भवेद्ध्रुवम् ।
नन्दिनी तेन विख्याता सा प्रीता भवतादिह ॥ २३ ॥

यस्या देव्यास्तुला नास्ति विश्वेषु निखिलेषु च ।
तुलसी तेन विख्याता तां यामि शरणं प्रियाम् ॥ २४ ॥

कृष्णजीवनरूपासा शश्वत्प्रियतमासती । तेनकृष्णजीवनीसा सा मे रक्षतुजीवनम्
इत्येवं स्तवनं कृत्वा तस्थौ तत्ररमापतिः । ददर्श तुलसीं साक्षात्पादपद्मनतांसतीम्
रुदतीमवमानेन मानिनीं मानपूजिताम् । प्रियां दृष्ट्वा प्रियःशीघ्रंवासयामास वक्षसि

भारत्याज्ञां गृहीत्वा च स्वालयञ्च ययौ हरिः ।
भारत्या सह तत्प्रीतिं कारयामास सत्वरम् ॥ २८ ॥

वरं विष्णुर्ददौ तस्यै सर्वपूज्या भवेरिति । शिरोधार्याचसर्वेषांवन्द्यामान्याममेतिच
विष्णोर्वरेण सा देवी परितुष्टा बभूव च । सरस्वती तामाकृष्यवासयामाससन्निधौ
लक्ष्मीर्गङ्गा सस्मिता च तां समाकृष्य नारद !। गृहं प्रवेशयामास विनयेनसतींतदा
वृन्दा वृन्दावनी विश्वपूजिताविश्वपाविनी । पुष्पसारानन्दनीचतुलसीकृष्णजीवनी
एतन्नामाष्टकं चैव स्तोत्रं नामार्थसंयुतम् । यः पठेत्ता चसम्पूज्यसोऽश्वमेधफलंलभेत्
कार्त्तिक्यां पूर्णिमायांचतुलस्याजन्ममङ्गलम् । तत्रतस्याश्चपूजाचविहिताहरिणापुरा

तस्यां यः पूजयेत्तां च भक्त्या च विश्वपावनीम् ।
सर्वपापाद्विनिर्मुक्तो विष्णुलोकं स गच्छति ॥ ३५ ॥

कार्तिके तुलसीपत्रं योददाति च विष्णवे । गवायुतदानस्य फलं प्राप्नोतिनिश्चितम्
अपुत्रो लभते पुत्रं प्रियाहीनोलभेत्प्रियाम् । बन्धुहीनोलभेद्बन्धूं स्तोत्रश्रवणमात्रतः

रोगी प्रमुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ।
भयान्मुच्येत भीतस्तु पापान्मुच्येत पातकी ॥ ३८ ॥

इत्येवं कथितं स्तोत्रं ध्यानं पूजाविधिं श्रृणु । त्वमेववेदेजानासिकण्वशाखोक्तमेवच

तद्वृक्षे पूजयेत्तां च भक्त्या चाऽऽवाहनं विना ।
तां ध्यात्वा चोपचारेण ध्यानं पातकनाशनम् ॥ ४० ॥

तुलसीं पुष्पसारां च सतीं पूतांमनोहराम् । कृतपापेध्मदाहायज्वलदग्निशिखोपमाम्
पुष्पेषु तुलनायस्या नास्ति वेदेषु भाषितम् । पवित्ररूपासर्वासुतुलसीसाचकीर्तिता

शिरोधार्या च सर्वेषामीप्सिता विश्वपावनी ।
जीवन्मुक्तां मुक्तिदां च भजे तां हरिभक्तिदाम् ॥ ४२ ॥
इति ध्यात्वा च सम्पूज्य स्तुत्वा च प्रणमेत्सुधीः ।
उक्तं तुलस्युपाख्यानं किं भूयः श्रोतुमिच्छसि

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायांनवमस्कन्धे
तुलसीपूजाविधिवर्णनंनाम पञ्चविंशोऽध्यायः ॥ २५ ॥

---

## षड्विंशोऽध्यायः

### सावित्र्युपाख्यानवर्णनम्

नारद उवाच

तुलस्युपाख्यानमिदं श्रुतं चाति सुधोपमम् ।
ततः सावित्र्युपाख्यानं तन्मे व्याख्यातुमर्हसि ॥ १ ॥

पुराकेन समुद्भूता सा श्रुता च श्रुतेः प्रसूः । केनवा पूजिता लोकेप्रथमे कैश्च वा परे

नारायण उवाच

ब्रह्मणा वेदजननी प्रथमे पूजिता मुने !। द्वितीये च वेदगणैस्तत्पश्चाद्विदुषां गणैः ॥
तदा चाऽश्वपतिर्भूपः पूजयामास भारते । तत्पश्चात्पूजयामासुर्वर्णाश्चत्वार एव च

नारद उवाच

को वा सोऽश्वपतिर्ब्रह्मन्केन वा तेन पूजिता । सर्वपूज्या च सा देवीप्रथमेकैश्चवापरे

नारायण उवाच

मद्रदेशे महाराजो बभूवाऽश्वपतिर्मुने !। वैरिणां बलहर्ता च मित्राणां दुःखनाशनः ॥
आसीत्तस्य महाराज्ञीमहिषीधर्मचारणी । मालतीतिसमाख्यातायथालक्ष्मीर्गदाभृतः
सा च राज्ञी च वन्ध्या चवसिष्ठस्योपदेशतः । चकाराराधनंभक्तयासावित्र्याश्चैवनारद

प्रत्यादेशं न सा प्राप्ता महिषी न ददर्श ताम् । गृहं जगाम दुःखार्ता हृदयेन विदूयता

राजा तां दुःखितां दृष्ट्वा बोधयित्वा नयेन वै ।

सावित्र्यास्तपसे भक्त्या जगाम पुष्करं तदा ॥ १० ॥

तपश्चकार तत्रैव संयतः शतवत्सरम् । न ददर्श च सावित्र्याः प्रत्यादेशो बभूव च

शुश्रावाऽऽकाशवाणीं च नृपेन्द्रश्च शरीरिणीम् । गायत्र्या दशलक्षं चजपंत्वंकुरुनारद

एतस्मिन्नन्तरे तत्र आजगाम पराशरः । प्रणनाम ततस्तं च मुनिर्नृपमुवाच च ॥१३

मुनिरुवाच

सकृज्जपश्च गायत्र्याः पापं दिनभवं हरेत् । दशवारं जपेनैव नश्येत्पापं दिवानिशम्

शतवारं जपश्चैव पापं मासार्जितं हरेत् । सहस्रधा जपश्चैव कल्मषं मत्सरार्जितम्

लक्षो जन्मकृतं पापं दशलक्षोऽन्यजन्मजम् । सर्वजन्मकृतं पापं शतलक्षाद्विनश्यति

करोति मुक्तिं विप्राणां जपो दशगुणस्ततः । करंसर्पफणाकारंकृत्वातद्रन्ध्रमुद्रितम्

आनम्रमूर्धमचलं प्रजपेत्प्राङ्मुखो द्विजः । अनामिकामध्यदेशादधोऽवामक्रमेण च

तर्जनीमूलपर्यन्तं जपस्यैवं क्रमः करे । श्वेतपङ्कजबीजानांस्फटिकानां च संस्कृताम्

कृत्वा वा मालिकांराजञ्जपेत्तीर्थे सुरालये । संस्थाप्य मालामश्वत्थपत्रे पद्मेच संयतः

कृत्वागोरोचनाक्तांचगायत्र्यास्नापयेत्सुधीः । गायत्रीशतकंतस्यांजपेच्चविधिपूर्वकम्

अथवा पञ्चगव्येन स्नात्वा मालां सुसंस्कृताम् ।

अथ गङ्गोदकेनैव स्नात्वा वाऽतिसुसंस्कृताम् ॥ २२ ॥

एवं क्रमेण राजर्षे ! दशलक्षं जपं कुरु । साक्षाद्द्रक्ष्यसि सावित्रींत्रिजन्मपातकक्षयात्

नित्यं सन्ध्याश्च हे राजन्करिष्यसि दिने दिने ।

मध्याह्ने चापि सायाह्ने प्रातरेव शुचिः सदा ॥ २४ ॥

सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यदह्ना कुरुते कर्म न तस्य फलभाग्भवेत्

नोपतिष्ठति यः पूर्वां नोपास्ते यस्तु पश्चिमाम् ।

स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः ॥ २६ ॥

यावज्जीवनपर्यन्तंत्रिसन्ध्यां यः करोति च । सचसूर्यसमोविप्रस्तेजसातपसासदा

तत्पादपद्मरजसा सद्यः पूतावसुन्धरा । जीवन्मुक्तःसतेजस्वीसन्ध्यापूतोहियोद्विजः
तीर्थानि च पवित्राणि तस्यसंस्पर्शमात्रतः । ततःपापानियान्त्येववैनतेयाद्विवोरगाः
नगृह्णन्तिसुराःपूजांपितरःपिण्डतर्पणम् । स्वेच्छयाचद्विजातेश्चत्रिसन्ध्यारहितस्यच
मूलप्रकृत्यभक्तो यस्तन्मन्त्रस्याप्यनर्चकः । तदुत्सवविहीनश्च विषहीनो यथोरगः
विष्णुमन्त्रविहीनश्च त्रिसन्ध्यारहितोद्विजः । एकादशीविहीनश्चविषहीनोयथोरगः
हरेरनैवेद्यभोजी धावको वृषवाहकः । शूद्रान्नभोजी यो विप्रो विषहीनो यथोरगः ॥
शूद्राणां शवदाही यः स विप्रो वृषलीपतिः । शूद्राणां सूपकारश्च विषहीनो यथोरगः
शूद्राणां च प्रतिग्राही शूद्रयाजीचयोद्विजः । मसिजीवीअसिजीवीविषहीनोयथोरगः

यः कन्याविक्रयी विप्रो यो हरेर्नामविक्रयी ।
यो विप्रोऽवीरान्नभोजी ऋतुस्नातान्नभोजकः ॥ ३६ ॥

भगजीवी वार्धुषिको विषहीनोयथोरगः । यो विद्याविक्रयीविप्रोविषहीनोयथोरगः
सूर्योदये स्वपेद्यो हिमत्स्यभोजीचयोद्विजः । शिवापूजादिरहितोविषहीनोयथोरगः

इत्युक्त्वा च मुनिश्रेष्ठः सर्वपूजाविधिक्रमम् ।
तमुवाच च सावित्र्या ध्यानादिकमभीप्सितम् ॥ ३६ ॥

दत्त्वासर्वं नृपेन्द्राययय‍ौ च स्वाश्रमे मुने । राजा सम्पूज्य सावित्रीं ददर्श वरमाप च

नारद उवाच

किम्वा ध्यानं च सावित्र्याःकिम्वा पूजाविधानकम् ।
स्तोत्र मन्त्रश्च किं दत्त्वा प्रययौ स पराशरः ॥ ४१ ॥

नृपः केन विधानेन सम्पूज्य श्रुतिमातरम् । वरञ्चकम्वा सम्प्रापसम्पूज्यतु विधानतः
तत्सर्वं श्रोतुमिच्छामिसावित्र्याःपरमंमहत् । रहस्यातिरहस्यञ्चश्रुतिसिद्धंसमासतः

नारायण उवाच

जेष्ठकृष्णत्रयोदश्यां शुद्धकाले च यत्नतः । व्रतमेवञ्चतुर्दश्यां व्रतीभक्त्या समाचरेत् ॥
व्रतञ्चतुर्दशाब्दञ्च द्विसप्तफलसंयुतम् । दत्त्वा द्विसप्तनैवेद्यंपुष्पधूपादिकञ्चरेत् ॥ ४५॥
वस्त्रं यज्ञोपवीतञ्च भोजनं विधिपूर्वकम् । संस्थाप्य मङ्गलघटं फलशाखासमन्वितम्

गणेशञ्च दिनेशञ्च वह्निम्विष्णुंशिवंशिवाम् । सम्पूज्य पूजयेदिष्टंघटेआवाहितेद्विजः
शृणु ध्यानञ्च सावित्र्याश्चोक्तं माध्यन्दिने च यत् ।
स्तोत्रं पूजाविधानञ्च मन्त्रञ्च सर्वकामदम् ॥ ४८ ॥
तप्तकाञ्चनवर्णाभां ज्वलन्तीं ब्रह्मतेजसा । ग्रीष्ममध्याह्नमार्तण्डसहस्रसम्मितप्रभाम्
ईषद्धास्यप्रसन्नास्यां रत्नभूषणभूषिताम् । वह्निशुद्धांशुकाधानां भक्तानुग्रहविग्रहाम् ॥
सुखदांमुक्तिदांशान्तांकान्ताञ्चजगतांविधेः।सर्वसम्पत्स्वरूपाञ्चप्रदात्रींसर्वसम्पदाम्
वेदाधिष्ठातृदेवींञ्च वेदशास्त्रस्वरूपिणीम् । वेदबीजस्वरूपाञ्च भजे ताम्वेदमातरम् ॥
ध्यात्वाध्यानेन नैवेद्यंदत्त्वापाणिस्वमूर्धनि । पुनर्ध्यात्वाघटेभक्त्यादेवीमावाहयेद्व्रती
दत्त्वाषोडशोपचारंवेदोक्तं मन्त्रपूर्वकम् । सम्पूज्य स्तुत्वा प्रणमेद्देवदेवी विधानतः ॥
आसनं पाद्यमर्घ्यञ्च स्नानीयञ्चानुलेपनम् । धूपं दीपञ्च नैवेद्यं ताम्बूलंशीतलं जलम्
वसनं भूषणं माल्यं गन्धमाचमनीयकम् । मनोहरं सुतल्पञ्चदेयान्येतानि षोडश ॥५६
दारुसारविकारञ्च हेमादिनिर्मितञ्च वा । देवाधारं पुण्यदञ्च मयातुभ्यं निवेदितम् ॥
तीर्थोदकञ्च पाद्यञ्च पुण्यदं प्रीतिदं महत् । पूजाङ्गभूतं शुद्धञ्च मयातुभ्यं निवेदितम्
पवित्ररूपमर्घ्यञ्च दूर्वापुष्पदलान्वितम् । पुण्यदं शङ्खतोयाक्तं मया तुभ्यं निवेदितम्
सुगन्धंगन्धतोयञ्चस्नेहंसौगन्धकारकम् । मया निवेदितंभक्त्यास्नानीयंप्रतिगृह्यताम्
गन्धद्रव्योद्भवं पुण्यं प्रीतिदंदिव्यगन्धदम् । मयानिवेदितंभक्त्यागन्धतोयं तवाऽम्बिके
सर्वमङ्गलरूपञ्च सर्वञ्च मङ्गलप्रदम् । पुण्यदञ्च सुधूपं तं गृहाण परमेश्वरि !॥ ६२ ॥
सुगन्धयुक्तं सुखदं मया तुभ्यं निवेदितम् । जगतां दर्शनार्थायप्रदीपं दीप्तिकारकम्
अन्धकारध्वंसबीजं मया तुभ्यं निवेदितम् । तुष्टिदं पुष्टिदञ्चैव प्रीतिदं क्षुद्विनाशनम्
पुण्यदं स्वादुरूपञ्च नैवेद्यं प्रतिगृह्यताम् । ताम्बूलप्रवरं रम्यं कर्पूरादिसुवासितम् ॥
तुष्टिदं पुष्टिदं चैव मया तुभ्यं निवेदितम् ।
सुशीतलं वारि शीतं पिपासानाशकारणम् ॥ ६६ ॥
जगतां जीवरूपञ्च जीवनं प्रतिगृह्यताम् । देहशोभास्वरूपञ्च सभाशोभाविवर्धनम् ॥
कार्पासजञ्च कृमिजं वसनं प्रतिगृह्यताम् । काञ्चनादिविनिर्माणंश्रीकरंश्रीयुतं सदा

सुखदं पुण्यदं रत्नभूषणं प्रतिगृह्यताम् । नानावृक्षसमुद्भूतं नानारूपसमन्वितम् ॥६९
फलस्वरूपं फलदं फलञ्च प्रतिगृह्यताम् । सर्वमङ्गलरूपञ्च सर्वमङ्गलमङ्गलम् ॥ ७० ॥
नानापुष्पविनिर्माणं बहुशोभासमन्वितम् । प्रीतिदं पुण्यदञ्चैव माल्यञ्चप्रतिगृह्यताम्
पुण्यदञ्च सुगन्धाढ्यं गन्धञ्च देवि! गृह्यताम् । सिन्दूरञ्चवरंरम्यंभालशोभाविवर्धनम्
भूषणानाञ्च प्रवरं सिन्दूरम्प्रतिगृह्यताम् । विशुद्धग्रन्थिसंयुक्तं पुण्यसूत्रविनिर्मितम्
पवित्रम्वेदमन्त्रेण यज्ञसूत्रञ्चगृह्यताम् । द्रव्याण्येतानि मूलेन दत्त्वास्तोत्रम्पठेत्सुधीः
ततोविप्राय भक्त्याचव्रतीदद्याच्चदक्षिणाम् । सावित्रीतिचतुर्थ्यन्तं वह्निजायान्तमेवच
लक्ष्मीमायाकामपूर्वं मन्त्रमष्टाक्षरम्विदुः । माध्यन्दिनोक्तं स्तोत्रञ्च सर्वकामफलप्रदम्
विप्रजीवनरूपञ्च निबोध कथयामि ते । कृष्णेन दत्तां सावित्रीं गोलोके ब्रह्मणे पुरा
नायाति सा तेन सार्धंब्रह्मलोके च नारद !। ब्रह्माकृष्णाज्ञया भक्त्या तुष्टाव वेदमातरम्
तदा सा परितुष्टा च ब्रह्माणञ्चकमे पतिम् ।

ब्रह्मोवाच

सच्चिदानन्दरूपे ! त्वं मूलप्रकृतिरूपिणि ! ॥ ७९ ॥
हिरण्यगर्भरूपे त्वम्प्रसन्ना भव सुन्दरि !। तेजःस्वरूपे परमे परमानन्दरूपिणि !॥८०
द्विजातीनांजातिरूपे! प्रसन्नाभवसुन्दरि !। नित्येनित्यप्रियेदेविनित्यानन्दस्वरूपिणि
सर्वमङ्गलरूपेचप्रसन्नाभवसुन्दरि !। सर्वस्वरूपे विप्राणां मन्त्रसारे परात्परे ॥ ८२ ॥
सुखदे! मोक्षदे! देवि! प्रसन्ना भव सुन्दरि । विप्रपापेध्मदाहाय ज्वलदग्निशिखोपमे!
ब्रह्मतेजःप्रदे देवि! प्रसन्ना भव सुन्दरि !। कायेन मनसा वाचा यत्पापंकुरुते नरः ॥
तत्वत्स्मरणमात्रेण भस्मीभूतं भविष्यति । इत्युक्त्वाजगतांधातातस्थौतत्रचसंसदि
सावित्री ब्रह्मणासार्धं ब्रह्मलोकं जगाम सा । अनेनस्तवराजेन संस्तूयाऽश्वपतिर्नृपः॥
ददर्शताञ्चसावित्रीम्वरम्प्रापमनोगतम् । स्तवराजमिमंपुण्यं सन्ध्यां कृत्वाचयःपठेत्
पाठे चतुर्णां वेदाना यत्फलं लभते च तत् ।

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे
सावित्रीपूजाविधिकथनंनामषड्विंशोऽध्यायः ॥ २६ ॥

# सप्तविंशोऽध्यायः

## सावित्र्युपाख्यानेयमसावित्रीसम्वादवर्णनम्

श्रीनारायण उवाच

स्तुत्वाऽनेनसोऽश्वपतिःसम्पूज्यविधिपूर्वकम् । ददर्शतत्रतां देवींसहस्रार्कसमप्रभाम्

उवाच सा च राजानंप्रसन्नासस्मितासती । यथामातास्वपुत्रश्चद्योतयन्तीदिशस्त्विषा

सावित्र्युवाच

जानाम्यहंमहाराजयत्तेमनसिवाञ्छितम् । वाञ्छितंतवपत्न्याश्चसर्वंदास्यामिनिश्चितम्

साध्वीकन्याभिलाषञ्च करोति तव कामिनी । त्वंप्रार्थयसिपुत्रञ्चभविष्यतिक्रमेणच

इत्युक्त्वा सातदा देवी ब्रह्मलोकं जगाम ह । राजाजगामस्वगृहंतत्कन्याऽऽदौबभूवह

आराधनाच्च सावित्र्या बभूव कमलापरा । सावित्रीति च तन्नाम चकाराश्वपतिर्नृपः

कालेन सा वर्धमाना बभूव च दिनेदिने । रूपयौवनसम्पन्ना शुक्ले चन्द्रकला यथा

सा वरं वरयामास द्युमत्सेनात्मजं सदा । सत्यवन्तं सत्यशीलं नानागुणसमन्वितम्

राजा तस्मै ददौ ताञ्च रत्नभूषणभूषिताम् । सोऽपिसार्धंकौतुकेनतांगृहीत्वागृहंययौ

स च सम्वत्सरेऽतीते सत्यवान् सत्यविक्रमः ।

जगाम फलकाष्ठार्थं प्रहर्षं पितुराज्ञया ॥ १० ॥

जगाम साध्वी तत्पश्चात्सावित्री दैवयोगतः ।

निपत्य वृक्षाद्दैवेन प्राणांस्तत्याज सत्यवान् ॥ ११ ॥

यमस्तं पुरुषं दृष्ट्वा बद्ध्वाऽङ्गुष्ठसमम्मुने । गृहीत्वा गमनञ्चक्रे तत्पश्चात्प्रययौ सती

पश्चात्तां सुदतीं दृष्ट्वा यमःसंयमनीपतिः । उवाच मधुरं साध्वीं साधूनाम्प्रवरोमहान्

धर्मराज उवाच

अहोक्वयासिसावित्रिगृहीत्वामानुषींतनुम् । यदियास्यसिकान्तेनसार्धं देहं तदात्यज

गन्तुं मर्त्यो न शक्नोति गृहीत्वा पाञ्चभौतिकम् ।

देहश्च ममलोकश्च नश्वरं नश्वरः सदा ॥ १५ ॥

भर्तुस्ते पूर्णकालोवै बभूवभारतेसति ॥ स्वकर्मफलभोगार्थं सत्यवान्यातिमद्गृहम्
कर्मणा जायते जन्तुः कर्मणैव प्रलीयते । सुखं दुःखम्भयं शोकः कर्मणैव प्रणीयते
कर्मणेन्द्रो भवेज्जीवो ब्रह्मपुत्रःस्वकर्मणा । स्वकर्मणा हरेर्दासो जन्मादिरहितोभवेत्

स्वकर्मणा सर्वसिद्धिममरत्वं लभेद् ध्रुवम् ।

लभेत्स्वकर्मणा विष्णोः सालोक्यादिचतुष्टयम् ॥ १६ ॥

सुरत्वञ्च मनुत्वञ्च राजेन्द्रत्वं लभेन्नरः । कर्मणा च शिवत्वञ्च गणेशत्वं तथैव च ॥
कर्मणाचमुनीन्द्रत्वं तपस्वित्वंस्वकर्मणा । स्वकर्मणाक्षत्रियत्वंवैश्यत्वञ्चस्वकर्मणा
कर्मणैवच म्लेच्छत्वं लभते नात्र संशयः । स्वकर्मणा जङ्गमत्वं शैलत्वञ्च स्वकर्मणा
कर्मणा राक्षसत्वञ्च किन्नरत्वंस्वकर्मणा । कर्मणैवाऽऽधिपत्यञ्चवृक्षत्वञ्च स्वकर्मणा
कर्मणैव पशुत्वञ्च वनजीवी स्वकर्मणा । कर्मणा क्षुद्रजन्तुत्वं कृमित्वञ्च स्वकर्मणा
दैतेयत्वं दानवत्वमसुरत्वं स्वकर्मणा । इत्येवमुक्त्वा सावित्री विरराम स वै यमः ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे
सावित्र्युपाख्यानेयमसावित्रीसम्वादवर्णनंनाम सप्तविंशोऽध्यायः ॥ २७ ॥

## अष्टाविंशोध्यायः

### यमसावित्रीसम्वादवर्णनम्

श्रीनारायण उवाच

यमस्य वचनंश्रुत्वासावित्री च पतिव्रता । तुष्टाव परया भक्त्या तमुवाचमनस्विनी

सावित्र्युवाच

किं कर्म तद्भवेत्केन कोवातद्धेतुरेव च । को वादेही च देहः कः कोवाऽत्रकर्मकारकः

किं वा ज्ञानञ्च बुद्धिः का को वा प्राणः शरीरिणाम् ।

कानीन्द्रियाणि किं तेषां लक्षणं देवताश्च काः ॥ ३ ॥
भोक्ता भोजयिता को वा को वा भोगश्च निष्कृतिः ।
को जीवः परमात्मा कस्तन्मे व्याख्यातुमर्हसि ॥ ४ ॥

धर्म उवाच

वेदप्रणिहितो धर्मः कर्म यन्मङ्गलं परम् । अवैदिकं तु यत्कर्म तदेवाऽशुभमेव च ॥५
अहैतुकी देवसेवा सङ्कल्परहिता सती । कर्मनिर्मूलरूपा च सा एव परभक्तिदा ॥६
को वा कर्मफलं भुङ्क्ते को वा निर्लिप्त एव च । ब्रह्मभक्तोयोनरश्चसचमुक्तःश्रुतःश्रुतौ
जन्ममृत्युजराव्याधिशोकभीतिविवर्जितः ।
भक्तिश्च द्विविधा साध्वि! श्रुत्युक्ता सर्वसम्मता ॥ ८ ॥
निर्वाणपददात्री च हरिरूपप्रदा नृणाम् । हरिरूपस्वरूपां च भक्तिवाञ्छन्तिवैष्णवाः
अन्ये निर्वाणमिच्छन्तियोगिनोब्रह्मवित्तमाः । कर्मणो बीजरूपश्च सततं तत्फलप्रदः
कर्मरूपश्च भगवान्परात्मा प्रकृतिः परा । सोऽपि तद्धेतुरूपश्च देहो नश्वर एव च
पृथिवी वायुराकाशो जलं तेजस्तथैव च । एतानि सूत्ररूपाणि सृष्टिरूपविधौ यतः
कर्म कर्ता च देही च आत्माभोजयितासदा । भोगोविभवभेदश्च निष्कृतिर्मुक्तिरेवच
सदसद्भेदर्बीजं च ज्ञानं नानाविधंभवेत् । विषयाणांविभागानां भेदबीजंचकीर्त्तितम्
बुद्धिर्विवेचना सा च ज्ञानबीजं श्रुतौ श्रुतम् । वायुभेदाश्चप्राणाश्चबलरूपाश्चदेहिनाम्
इन्द्रियाणां च प्रवरमीश्वरांशमनूहकम् । प्रेमकं कर्मणां चैव दुर्निवार्यं च देहिनाम्
अनिरूप्यमदृश्यं च ज्ञानभेदो मनः स्मृतम् । लोचनंश्रवणंघ्राणंत्वक्चरसनमिन्द्रियम्
अङ्गिनामङ्गरूपं च प्रेरकं सर्वकर्मणाम् । रिपुरूपं मित्ररूपं सुखरूपं च दुःखदम् ॥१८
सूर्यो वायुश्च पृथिवीब्रह्माद्यादेवताःस्मृताः । प्राणदेहादिभृद्योहिसजीवःपरिकीर्तितः
परमं व्यापकम्ब्रह्म निर्गुणः प्रकृते परः । कारणं कारणानाञ्चपरमात्मास उच्यते ॥
इत्येवं कथितं सर्वं त्वयापृष्टं यथागमम् । ज्ञानिनां ज्ञानरूपञ्चगच्छवत्सेयथासुखम्

सावित्र्युवाच

त्यक्त्वा क्व यामि कान्तं वा त्वां वा ज्ञानार्णवं ध्रुवम् ।

यद्यत्करोमि प्रश्नं च तद्भवान्वक्तुमर्हति ॥ २२ ॥
काकां योनियातिर्जीवः कर्मणाकेनवापुनः । केनवाकर्मणास्वर्गंकेन वा नरकं पितः
केन वाकर्मणामुक्तिःकेनभक्तिर्भवेद्गुरौ । केनवाकर्मणा योगी रोगी वा केन कर्मणा
केनवादीर्घजीवीच केनाल्पायुश्च कर्मणा । केनवा कर्मणादुःखी सुखी वा केन कर्मणा
अङ्गहीनश्चकारणश्चवधिरः केन कर्मणा । अन्धो वा पङ्गुरपि वा प्रमत्तःकेन कर्मणा ॥
क्षिप्तोऽतिलुब्धकश्चौरःकेनवाकर्मणाभवेत् । केनसिद्धिमवाप्नोतिसालोक्यादिचतुष्टयम
केन वा ब्राह्मणत्वञ्च तपस्वित्वञ्च केन वा । स्वर्गभोगादिक केन वैकुण्ठंकेन कर्मणा
गोलोकंकेनवाब्रह्मन्सर्वोत्कृष्टंनिरामयम् । नरकोवाकतिविधःकिंसङ्ख्योनामकिञ्चवा
को वा कं नरकं यातिकियन्ततेषुतिष्ठति । पापिनां कर्मणाकेनयोवाव्याधिःप्रजायते
यद्यत्प्रियं मया पृष्टं तन्मे व्याख्यातुमर्हसि ॥ ३० ॥
इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायांनवमस्कन्धे
नारायणनारदसम्वादे सावित्र्युपाख्यानेयमसावित्रीसम्वादवर्णनं
नामाष्टाविंशोऽध्यायः ॥ २८ ॥

---

# ऊनत्रिंशोऽध्यायः

## सावित्रीम्प्रतियमवरदानं कर्मविपाककथनञ्च

श्रीनारायण उवाच

सावित्रीवचनं श्रुत्वा जगाम विस्मयं यमः । प्रहस्यवक्तुमारेभेकर्मपाकंतुजीविनाम्

धर्म उवाच

कन्या द्वादशवर्षीया वत्से! त्वंवयसाऽधुना । ज्ञानंते पूर्वविदुषांज्ञानिनांयोगिनांपरम्
सावित्रीवरदानेन त्वं सावित्रीकला सती । प्राप्ता पुरा भूभृता च तपसातत्समासुते
यथा श्रीः श्रीपतेःक्रोडेभवानीचभवोरसि । यथाऽदितिःकश्यपेचयथाऽहल्याचगौतमे
यथा शची महेन्द्रे च यथाचन्द्रेचरोहिणी । यथारतिःकामदेवे यथास्वाहा हुताशने

यथा स्वधा च पितृषु यथा संज्ञा दिवाकरे। वरुणानी च वरुणे यज्ञे चदक्षिणायथा
यथा वराहे पृथिवी देवसेना च कार्त्तिके। सौभाग्यासुप्रियात्वंचतथासत्यवतःप्रिये
अयं तुभ्यं वरो दत्तोऽप्यपरञ्च यथेप्सितम्। वृणुदेविमहाभागेददामिसकलेप्सितम्

सावित्र्युवाच

सत्यवत औरसानां पुत्राणां शतकं मम। भविष्यति महाभागवरमेतन्मदीप्सितम्
मत्पितुः पुत्रशतक श्वशुरस्य च चक्षुषी। राज्यलाभो भवत्वेवं वरमेतन्मदीप्सितम्
अन्ते सत्यवता सार्धं यास्यामि हरिमन्दिरम्। समतीते लक्षवर्षे देहीदं मेजगत्प्रभो
जीवकर्मविपाकं च श्रोतुं कौतूहलं मम। विश्वनिस्तारबीजञ्चतन्मेव्याख्यातुर्हस्मि

धर्मराज उवाच

भविष्यतिमहासाध्विसर्वंमानसिकं तव। जीवकर्मविपाकञ्च कथयामि निशामय
शुभानामशुभानाञ्च कर्मणां जन्मभारते। पुण्यक्षेत्रेचन्यान्यत्र सर्वञ्च भुञ्जते जनाः॥
सुरादैत्या दानवाश्च गन्धर्वा राक्षसादयः। नराश्चकर्मजनका न सर्वे जीविनः सति!
विशिष्टजीविनः कर्मभुञ्जते सर्वयोनिषु। शुभाशुभञ्च सर्वत्र स्वर्गेषु नरकेषु च॥१८॥
विशेषतो जीविनश्च भ्रमन्ते सर्वयोनिषु। शुभाऽशुभं भुञ्जते च कर्म पूर्वार्जितं परम्
शुभेन कर्मणा याति स्वर्लोकादिकमेव च। कर्मणा चाशुभेनैव भ्रमन्ति नरकेषु च

कर्मनिर्मूलने भक्तिः सा चोक्ता द्विविधा सति!।
निर्वाणरूपा भक्तिश्च ब्रह्मणः प्रकृतेरिह॥ १६॥

रोगीकुकर्मणाजीवश्चारोगीशुभकर्मणा। दीर्घजीवी चक्षीणायुःसुखीदुःखीचकर्मणा
अन्धादयश्चाङ्गहीनाः कर्मणाकुत्सितेन च। सिद्ध्यादिकमवाप्नोतिसर्वोत्कृष्टेनकर्मणा
सामान्यं कथितं देवि! विशेषंशृणु सुन्दरि!। सुदुर्लभसुगोप्यञ्चपुराणेषुस्मृतिष्वपि
दुर्लभा मानुषी जातिः सर्वजातिषु भारते। सर्वेभ्योब्राह्मणः श्रेष्ठःप्रशस्तःसर्वकर्मसु
ब्रह्मनिष्ठो द्विजश्चैवगरीयान् भारतेसति!। निष्कामश्चसकामश्चब्राह्मणोद्विविधःसति
सकामाच्च प्रधानश्च निष्कामो भक्त एव च। कर्मभोगी सकामश्चनिष्कामोनिरुपद्रवः

स याति देहं त्यक्त्वा च पदं यत्तन्निरामयम्।

पुनरागमनं नाऽस्ति तेषां निष्कामिनां सति !॥ २६ ॥
सेवन्ते द्विभुजं कृष्णं परमात्मानमीश्वरम् ।
गोलोकं प्रति ते भक्ता दिव्यरूपविधारिणः ॥ २७ ॥
सकामिनो वैष्णवाश्च गत्वा वैकुण्ठमेव च । भारतं पुनरायान्तितेषांजन्मद्विजातिषु
कालेन ते च निष्कामा भवन्त्येव क्रमेण च ।
भक्ति च निर्मलां तेभ्यो दास्यामि निश्चितं पुनः ॥ २६ ॥
ब्राह्मणावैष्णवाश्चैव सकामाःसर्वजन्मसु । न तेषानिर्मलाबुद्धिर्विष्णुभक्तिविवर्जिताः
तीर्थाश्रिताद्विजा ये च तपस्यानिरताःसति !। तेयान्तिब्रह्मलोकंचपुनरायान्तिभारते
स्वधर्मनिरता ये च तीर्थान्यत्रनिवासिनः । व्रजन्ति ते सत्यलोकंपुनरायान्तिभारते
स्वधर्मनिरता विप्राः सूर्यभक्ताश्च भारते । व्रजन्ति ते सूर्यलोकं पुनरायान्ति भारते
मूलप्रकृतिभक्ता ये निष्कामा धर्मचारिणः । मणिद्वीपं प्रयान्त्येवपुनरावृत्तिवर्जितम्
स्वधर्मे निरता भक्ताःशैवाःशाक्ताश्चगाणपाः । तेयान्तिशिवलोकंचपुनरायान्तिभारते
ये विप्रा अन्यदेवेज्याः स्वधर्मनिरताःसति । ते यान्ति सर्वलोकंचपुनरायान्तिभारते
हरिभक्ताश्च निष्कामाः स्वधर्मनिरता द्विजाः ।
ते च यान्ति हरेर्लोकं क्रमाद्भक्तिबलादहो ॥ ३७ ॥
स्वधर्मरहिता विप्रा देवान्यसेवनाः सदा । भ्रष्टाचाराश्च कामाश्च तेयान्तिनरकंध्रुवम्
स्वधर्मनिरता एव वर्णाश्चत्वार एव च । भवन्त्यैव शुभस्यैव कर्मणः फलभोगिनः
स्वकर्मरहिता ये च नरक यान्ति ते ध्रुवम् । भारते न भवन्त्येव कर्मणःफलभोगिनः
स्वधर्मनिरता एवं वर्णाश्चत्वार एवच । स्वधर्मनिरता विप्राः स्वधर्मनिरताय च ॥४०॥
कन्या ददाति विप्राय चन्द्रलोकं प्रयान्ति ते ।
वसन्ति लभते साध्वि! यावदिन्द्राश्चतुर्दश ॥ ४२ ॥
सालङ्कृताया दानेनद्विगुणंफलमुच्यते । सकामायान्तितल्लोकंननिष्कामाश्च साधवः
ते प्रयान्ति विष्णुलोकंफलसङ्घातवर्जिताः । गव्यं चरजतंस्वर्णंवस्त्रंसर्पिःफलंजलम्
ये ददत्येव विप्रेभ्यश्चन्द्रलोकं प्रयान्ति ते । वसन्ति ते चतल्लोकेयावन्मन्वन्तरंसति

सुचिरात्सुचिरं वासं कुर्वन्ति तेनतेजनाः । येददतिसुवर्णाश्चगाश्चताम्रादिकंसति!
ते यान्तिसूर्यलोकं च शुचये ब्राह्मणाय च । वसन्ति ते तत्र लोके वर्षाणामयुतंसति

विपुले सुचिरं वासं कुर्वन्ति च निरामयाः ।

ददाति भूमिं विप्रेभ्यो धनानि विपुलानि च ॥ ४८ ॥

स याति विष्णुलोकं च श्वेतद्वीपं मनोहरम् ।तत्रैव निवसत्येव यावच्चन्द्रदिवाकरौ
विपुले विपुलं वासं करोति पुण्यवान्मुने। गृहं ददाति विप्राय ये जनाभक्तिपूर्वकम्
ते यान्ति विष्णुलोकं च सुचिरंसुखदायकम् । गृहरेणुप्रमाणं च विष्णुलोकेमहत्तमे
विपुले विपुलं वासं कुर्वन्तिमानवाः सति । यस्मै यस्मै च देवाय यो ददातिगृहंनरः
स याति तस्यलोकञ्च रेणुमानाब्दमेव च । सौधे चतुर्गुणं पुण्यंदेशेशतगुणं फलम्
प्रकृष्टे द्विगुणंतस्मादित्याह कमलोद्भवः । योददाति तडागञ्च सर्वपापापनुत्तये ॥
स यातिजनलोकञ्च रेणुमानाब्दमेव च । वाप्यां फलं दशगुणं प्राप्नोति मानवः सदा
सत्त वापीप्रदानेन तडागस्य फलं लभेत् । धनुश्चतुःसहस्रेण दैर्घ्यमानेननिश्चितम्

न्यूना वा तावती प्रस्थे सा वापी परिकीर्तिता ।

दशवापीसमा कन्या यदि पात्रे प्रदीयते ॥ ५७ ॥

फलं ददाति द्विगुण यदि साऽलङ्कृता भवेत् ।

यत्फलञ्च तडागे च तदुद्धारे च तत्फलम् ॥ ५८ ॥

वाप्याश्च पङ्कोद्धरणे वापीतुल्यफल लभेत् । अश्वत्थवृक्षमारोप्य प्रतिष्ठांयःकरोतिच
स प्रयाति तपोलोकं वर्षाणामयुतं सति । पुष्पोद्यानंयो ददातिसावित्रि! सर्वभूतये
स वसेद्ध्रुवलोकञ्च वर्षाणामयुत ध्रुवम् । यो ददाति विमानञ्च विष्णवेभारतेसति

विष्णुलोके वसेत्सोऽपि यावन्मन्वन्तरं परम् ।

चित्रयुक्ते च विपुले फलं तस्य चतुर्गुणम् ॥ ६२ ॥

तस्यार्धं शिबिकादाने फलमेव लभेद्ध्रुवम् । योददाति भक्तियुक्तो हरयेदोलमन्दिरम्
विष्णुलोके वसेत्सोऽपि यावन्मन्वन्तरंशतम् । राजमार्गंसौधयुक्तंयःकरोतिपतिव्रते
वर्षाणामयुतं सोऽपि शक्रलोके महीयते । ब्राह्मणेभ्योऽथ देवेभ्यो दानेसमफलंलभेत

यद्धि दत्तश्च तद् भुङ्क्ते न दत्तं नोपतिष्ठते ।

भुक्त्वा स्वर्गादिजं सौख्यं पुण्यवाञ्जन्म भारते ॥ ६६ ॥

लभेद्विप्रकुलेष्वेव क्रमेणैवोत्तमादिषु । भारते पुण्यवान्विप्रो भुक्त्वास्वर्गादिकंफलम्
पुनः सोऽपि भवेद्विप्रश्चैवं च क्षत्रियादयः । क्षत्रियोवाऽथवैश्योवाकल्पकोटिशतेनचं
तपसा ब्राह्मणत्वञ्च न प्राप्नोति श्रुतौ श्रुतम् । नाभुक्तंक्षीयतेकर्म कल्पकोटिशतैरपि
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् । दैवतीर्थसहायेन कायव्यूहहेन शुद्ध्यति

एतत्ते कथितं किञ्चित्किम्भूयः श्रोतुमिच्छसि ॥ ७१ ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे नारायण-नारदसम्वादे सावित्र्युपाख्याने कर्मविपाककथनवर्णनंनामैकोनत्रिंशोऽध्यायः ॥२९॥

---

# त्रिंशोऽध्यायः

## नानादानानांकर्मविपाककथनम्

### सावित्र्युवाच

प्रयान्ति स्वर्गमन्यं च येनैवकर्मणायम !। मानवाः पुण्यवन्तश्चतन्मेव्याख्यातुमर्हसि

### धर्मराज उवाच

अन्नदानञ्च विप्राय यः करोति च भारते । अन्नप्रमाणवर्षञ्च शिवलोके महीयते ॥
अन्नदानं महादानमन्येभ्योऽपि करोति यः । अन्नदानप्रमाणञ्च शिवलोके महीयते ॥
अन्नदानात्परं दानं न भूतं न भविष्यति । नाऽत्रपात्रपरीक्षास्यान्नकालनियमःक्वचित्
देवेभ्यो ब्राह्मणेभ्यावा ददाति चासनं यदि । महीयतेचिष्णुलोकेवर्षाणामयुतं सति

यो ददाति च विप्राय दिव्यां धेनुं पयस्विनीम् ।

तल्लोममानवर्षञ्च विष्णुलोके महीयते ॥ ६ ॥

चतुर्गुणं पुण्यदिने तीर्थे शतगुणं फलम् । दानं नारायणक्षेत्रे फलं कोटिगुणं भवेत्

गां यो ददाति विप्राय भारते भक्तिपूर्वकम् । वर्षाणामयुतं चैवचन्द्रलोके महीयते ॥
यश्चोभयमुखीदानं करोति ब्राह्मणाय च । तल्लोममानवर्षञ्च विष्णुलोके महीयते ॥
यो ददाति ब्राह्मणाय श्वेतच्छत्रं मनोहरम् । वर्षाणामयुतं सोऽपि मोदते वरुणालये
विप्राय पीडिताङ्गाय वस्त्रयुग्मं ददाति च । महीयते वायुलोके वर्षाणामयुतं सति
यो ददाति ब्राह्मणाय शालग्रामं सवस्त्रकम् । महीयते स वैकुण्ठे यावच्चन्द्रदिवाकरौ
यो ददाति ब्राह्मणाय दिव्यांशय्यांमनोहराम् । महीयतेचन्द्रलोकेयावच्चन्द्रदिवाकरौ
यो ददाति प्रदीपं चदेवेभ्योब्राह्मणाय च। यावन्मन्वन्तरं सोऽपि वह्निलोके महीयते
करोति गजदानं च यदि विप्राय भारते । यावदिन्द्रोनरस्तावदिन्द्रस्यार्धासनेवसेत्
भारते योऽश्वदानं च करोति ब्राह्मणाय च । मोदते वारुणे लोके यावदिन्द्राश्चतुर्दश
प्रकृष्टा शिविकां यो हि ददाति ब्राह्मणाय च । मोदते वारुणेलोकेयावदिन्द्राश्चतुर्दश
प्रकृष्टां वाटिकां यो हि ददातिब्राह्मणाय च । महीयते वायुलोकेयावन्मन्वतरं सति!
यो ददाति च विप्राय व्यजनं श्वेतचामरम् । महीयते वायुलोके वर्षाणामयुतं ध्रुवम्

धान्यं रत्नं यो ददाति चिरञ्जीवी भवेत्सुधीः ।
दाता ग्रहीता तौ द्वौ च ध्रुवं वैकुण्ठगामिनौ ॥ २० ॥

सततं श्रीहरेर्नाम भारते यो जपेन्नरः । स एव चिरजीवी च ततो मृत्युः पलायते
यो नरो भारते वर्षे दोलनं कारयेत्सुधीः । पूर्णिमारजनीशेषे जीवन्मुक्तो भवेन्नरः
इहलोके सुखं भुक्त्वायात्यन्तेविष्णुमन्दिरम् । निश्चितंनिवसेत्तत्र शतमन्वन्तरावधि
फलमुत्तरफल्गुन्यां ततोऽपि द्विगुणंभवेत् । कल्पान्तजीवीसभवेदित्याहकमलोद्भवः
तिलदानं ब्राह्मणाय यः करोति च भारते । तिलप्रमाणवर्षं च मोदते शिवमन्दिरे
ततः सुयोनिं सम्प्राप्य चिरजीवी भवेत्सुखी । ताम्रपात्रस्थदानेनद्विगुणंचफलंलभेत्

सालङ्कृतां च भोग्यां च सवस्त्रां सुन्दरीं प्रियाम् ।
यो ददाति ब्राह्मणाय भारते च पतिव्रताम् ॥ २१ ॥

महीयते चन्द्रलोके यावदिन्द्राश्चतुर्दश । तत्र स्वर्वेश्यया सार्धं मोदते च दिवानिशम्
ततो गन्धर्वलोके च वर्षाणामयुतं ध्रुवम् । दिवानिशं कौतुकेन चोर्वश्या सहमोदते

ततो जन्मसहस्रञ्च प्राप्नोति सुन्दरीं प्रियाम् ।
सतीं सौभाग्ययुक्ताञ्च कोमलां प्रियवादिनीम् ॥ ३० ॥

प्रददाति फलं चारु ब्राह्मणाय च यो नरः । फलप्रमाणवर्षं च शक्रलोके महीयते
पुनः सुयोनिं सम्प्राप्य लभतेसुतमुत्तमम् । सफलानां च वृक्षाणांमहस्रञ्चप्रशंसितम्
केवलं फलदानं वा ब्राह्मणाय ददाति च । सुचिरं स्वर्गवासं च कृत्वा यातिचभारते
नानाद्रव्यसमायुक्तं नानासस्यसमन्वितम् । ददाति यश्च विप्राय भारते विपुलंगृहम्
सुरलोके वसेत्सोऽपियावन्मन्वन्तरं शतम् । ततःसुयोनिंसम्प्राप्यसमहाधनवान्भवेत्
यो नरःसस्यसंयुक्तां भूमिं च सुचिरां सति । ददातिभक्त्याविप्रायपुण्यक्षेत्रेचभारते
महीयते च वैकुण्ठे मन्वन्तरशतं ध्रुवम् । पुनः सुयोनिंसम्प्राप्यमहांश्चभूमिपोभवेत्
तं न त्यजति भूमिश्च जन्मनां शतकं परम् । श्रीमांश्च धनवांश्चैवपुत्रवांश्चप्रजेश्वरः
सव्रजं च प्रकृष्टं च ग्रामं दद्याद् द्विजाय च । लक्षमन्वन्तरं चैव वैकुण्ठे समहीयते
पुनः सुयोनिं सम्प्राप्य ग्रामलक्षसमन्वितम् । न जहाति चतंपृथ्वीजन्मनांलक्षमेव च
सुप्रजं च प्रकृष्टं चपक्वसस्यसमन्वितम् । नानापुष्करिणीवृक्षफलवल्लीसमन्वितम्
नगरं यश्च विप्राय ददाति भारते भुवि । महीयते सकैलासे दशलक्षेन्द्रकालकम् ॥
पुनः सुयोनिं सम्प्राप्य राजेन्द्रो भारते भवेत् । नगराणां चनियुतंसलभेन्नात्र संशयः
धरा तं न जहात्येव जन्मनामयुतं ध्रुवम् । परमैश्वर्यनियुतो भवेदेव महीतले ॥ ४४॥
नगराणां च शतकं देशं यो हि द्विजातये । सुप्रकृष्टं मध्यकृष्टं प्रजायुक्तं ददाति च
वापीतडागसंयुक्तं नानावृक्षसमन्वितम् । महीयते स वैकुण्ठे कोटिमन्वन्तरावधि
पुनः सुयोनिं सम्प्राप्य जम्बुद्वीपपतिर्भवेत् । परमैश्वर्यसंयुक्तो यथा शक्रस्तथाभुवि
महीतं न जहात्येव जन्मनां कोटिमेव च । कल्पान्तजीवी स भवेद्राजराजेश्वरोमहान्
स्वाधिकारं समग्रं च यो ददाति द्विजातये । चतुर्गुणं फलं चान्तेभवेत्तस्य नसंशय
जम्बुद्वीपं यो ददाति ब्राह्मणायतपस्विने । फलं शतगुणं चाऽन्ते भवेत्तस्य नसंशयः
जम्बुद्वीपमहीदातुः सर्वतीर्थानि सेवितुः । सर्वेषांतपसांकर्तुस्सर्वेषांवासकारिणः
सर्वदानप्रदातुश्च सर्वसिद्धेश्वरस्य च । अस्त्येव पुनरावृत्तिर्न भक्तस्य महेशितुः

असङ्ख्यब्रह्मणां पातं पश्यन्ति भुवनेशितुः । निवसन्ति मणिद्वीपेश्रीदेव्याःपरमेपदे
देवीमन्त्रोपासकाश्च विहाय मानवीं तनुम् । विभूतिंदिव्यरूपञ्चजन्ममृत्युजराहरम्
लब्ध्वा देव्याश्चसारूप्यं देवीसेवाञ्चकुर्वते । पश्यन्तितेमणिद्वीपेसखण्डंलोकसङ्क्षयम्
नश्यन्तिदेवाःसिद्धाश्चविश्वानिनिखिलानिच । देवीभक्तानश्यन्तिजमन्मृत्युजराहराः
कार्त्तिके तुलसीदानं करोति हरये च यः । युगत्रयप्रमाणं च मोदते हरिमन्दिरे
पुनः सुयोनिं सम्प्राप्य हरिभक्तिं लभेद्ध्रुवम् । जितेन्द्रियाणां प्रवरःसभवेद्भारतेभुवि
मध्ये यः स्नाति गङ्गायामरुणोदयकालतः । युगषष्टिसहस्राणि मोदते हरिमन्दिरे
पुनः सुयोनिं सम्प्राप्य विष्णुमन्त्रंलभेद्ध्रुवम् । त्यक्त्वाचमानुषंदेहंपुनर्यातिहरेःपदम्
नास्ति तत्पुनरावृत्तिर्वैकुण्ठाच्च महीतले । करोति हरिदास्यं च तथा सारूप्यमेवच
नित्यस्नायी च गङ्गायां स पूतः सूर्यवद्भुवि । पदेपदेऽश्वमेधस्यलभते निश्चितंफलम्
तस्यैव पादरजसा सद्यः पूता वसुन्धरा । मोदते स च वैकुण्ठेयावच्चन्द्रदिवाकरौ

पुनः सुयोनिं सम्प्राप्य हरिभक्तिं लभेद् ध्रुवम् ।
जीवन्मुक्तोऽतितेजस्वी तपस्वीप्रवरो भवेत् ॥ ६४ ॥

स्वधर्मनिरतः शुद्धो विद्वांश्चसजितेन्द्रियः । मीनकर्कटयोर्मध्येगाढंतपतिभास्करः
भारते यो ददात्येव जलमेव सुवासितम् । स मोदते च कैलासे यावदिन्द्राश्चतुर्दश
पुनः सुयोनिं सम्प्राप्य रूपवांश्च सुखी भवेत् । शिवभक्तश्चतेजस्वीवेदवेदाङ्गपारगः
वैशाखे सक्तुदानं च यः करोति द्विजातये । सक्तुरेणुप्रमाणाब्दं मोदते शिवमन्दिरे
करोति भारतेयो हि कृष्णजन्माष्टमीव्रतम् । शतजन्मकृतं पापं मुच्यते नाऽत्र संशयः
वैकुण्ठे मोदतेसोऽपि यादिन्द्राश्चतुर्दश । पुनःसुयोनिंसम्प्राप्यकृष्णेभक्तिंलभेद्ध्रुवम्
इहैव भारते वर्षे शिवरात्रिं करोति यः । मोदते शिवलोके स सप्तमन्वन्तरावधि
शिवाय शिवरात्रौ च बिल्वपत्रं ददाति यः । पत्रमानयुगं तत्र मोदते शिवमन्दिरे

पुनः सुयोनिं सम्प्राप्य शिवभक्तिं लभेद् ध्रुवम् ।
विद्यावान्पुत्रवाञ्छ्रीमान्प्रजावान्भूमिमान्भवेत् ॥ ७३ ॥

चैत्रमासेऽथवा माघे शङ्करं योऽर्चयेद्व्रती । करोति नर्तनंभक्त्यावेत्रपाणिर्दिवानिशम्

मासं वाऽप्यर्धमासं वा दश सप्तदिनानि च। दिनमानयुगंसोऽपिशिवलोके महीयते
श्रीरामनवमीं यो हि करोति भारते पुमान्। सप्तमन्वन्तरं यावन्मोदते विष्णुमन्दिरे

पुनः सुयोनिं सम्प्राप्य रामभक्तिं लभेद् ध्रुवम्।
जितेन्द्रियाणां प्रवरो महांश्च धनवान्भवेत्॥ ७७॥

शारदीयां महापूजां प्रकृतेर्यःकरोति च। महिषैश्छागलैर्मेषैः खड्गैर्भेकादिभिःसति!
नैवेद्यैरुपहारैश्च धूपदीपादिभिस्तथा। नृत्यगीतादिभिर्वाद्यैर्नानाकौतुकमङ्गलम्॥
शिवलोकेवसेत्सोऽपि सप्तमन्वन्तरावधि। पुनःसुयोनिंसम्प्राप्यनरोबुद्धिंचनिर्मलाम्
अतुलां श्रियमाप्नोति पुत्रपौत्रविवर्धनीम्। महाप्रभावयुक्तश्च गजवाजिसमन्वितः॥
राजराजेश्वरःसोऽपिभवेदेवन संशयः। ततः शुक्लाष्टमीम्प्राप्य महालक्ष्मीञ्चयोऽर्चयेत्
नित्यं भक्त्या पक्षमेकं पुण्यक्षेत्रे च भारते। दत्त्वातस्यैप्रकृष्टानि चोपचाराणिषोडश

गोलोके च वसेत्सोऽपि यावदिन्द्राश्चतुर्दश।
पुनः सुयोनिं सम्प्राप्य राजराजेश्वरो भवेत्॥ ८४॥
कार्त्तिकीपूर्णिमायाञ्च कृत्वा तु रासमण्डलम्।
गोपानां शतकं कृत्वा गोपीनां शतकं तथा॥ ८५॥

शिलायां प्रतिमायाञ्च श्रीकृष्णं राधया सह। भारते पूजयेद्भक्त्याचोपहाराणिषोडश
गोलोके वसतेसोऽपि यावद्वै ब्रह्मणो वयः। भारतं पुनरागत्यकृष्णेभक्तिंलभेद्दृढाम्
क्रमेण सुदृढां भक्तिं लब्ध्वामन्त्रं हरेरहो। देहं त्यक्त्वा गोलोकं पुनरेव प्रयाति सः
ततः कृष्णस्य सारूप्यं पार्षदप्रवरो भवेत्। पुनस्तत्पतनं नास्ति जरामृत्युहरोभवेत्

शुक्लां वाऽप्यथवा कृष्णां करोत्येकादशीञ्च यः।
वैकुण्ठे मोदते सोऽपि यावद्वै ब्राह्मणो वयः॥ ९०॥

भारतम्पुनरागत्य कृष्णभक्तिं लभेद्ध्रुवम्। क्रमेण भक्तिं सुदृढां करोत्येकां हरेरहो॥
देहं त्यक्त्वाचगोलोकंपुनरेवप्रयातिसः। ततःकृष्णस्य सारूप्यं सम्प्राप्यपार्षदोभवेत्
पुनस्तत्पतनं नास्ति जरामृत्युहरोभवेत्। भाद्रे च शुक्लद्वादश्यां यः शक्रं पूजयेन्नरः
षष्टिवर्षसहस्राणि शक्रलोके महीयते। रविवारे च सङ्क्रान्त्यां सप्तम्यां शुक्लपक्षके॥

सम्पूज्यार्कंहविष्यान्नं यः करोति च भारते । महीयते सोऽर्कलोकेयावदिन्द्राश्चतुर्दश भारतम्पुनरागत्य चारोगीश्रीयुतोभवेत् । ज्येष्ठकृष्णचतुर्दश्यां सावित्रींयोहिपूजयेत् महीयते ब्रह्मलोके सप्तमन्वन्तरावधि । पुनर्महीं समागत्य श्रीमानतुलविक्रमः ॥९७॥

चिरजीवी भवेत्सोऽपि ज्ञानवान्सम्पदा युतः ।

माघस्य शुक्लपञ्चम्यां पूजयेद्य सरस्वतीम् ॥ ९८ ॥

संयतो भक्तितोदत्त्वाचोपचाराणिषोडश । महीयतेःमणिद्वीपे यावद्ब्रह्मदिवानिशम् सम्प्राप्य च पुनर्जन्मसभवेत्कविपण्डितः । गा सुवर्णादिकंयोहिब्राह्मणायददातिच नित्यं जीवनपर्यन्तं भक्तियुक्तश्च भारते । गवांलोमप्रमाणाब्दं द्विगुणं विष्णुमन्दिरे मोदते हरिणा सार्धं क्रीडाकौतुकमङ्गलैः । तदन्ते पुनरागत्य राजराजेश्वरो भवेत् ॥

श्रीमांश्च पुत्रवान्विद्वाञ्ज्ञानवान्सर्वतः सुखी ।

भोजयेद्योऽपि मिष्टान्नं ब्राह्मणेभ्यश्च भारते ॥ १०३ ॥

विप्रलोमप्रमाणाब्दं मोदते विष्णुमन्दिरे । ततः पुनरिहाऽऽगत्यसुखीचधनवान्भवेत

विद्वान्सुचिरजीवी च श्रीमानतुलविक्रमः ।

यो वक्ति वा ददात्येव हरेर्नामानि भारते ॥ १०५ ॥

युगं नाम प्रमाणञ्च विष्णुलोके महीयते । ततः पुनरिहागत्य सुखीचधनवान्भवेत् ॥ यदि नारायणक्षेत्रे फलं कोटिगुणम्भवेत् । नाम्नां कोटिंहरेर्योहि क्षेत्रेनारायणे जपेत् सर्वपापविनिर्मुक्तो जीवन्मुक्तोभवेद् ध्रुवम् । न लभेत्स पुनर्जन्म वैकुण्ठे स महीयते

लभेद्विष्णोश्च सारूप्यं न तस्य पतनम्भवेत् ।

विष्णुभक्तिंलभेत्सोऽपिविष्णुसारूप्यमाप्नुयात् ॥ १०९ ॥

शिवं यः पूजयेन्नित्यं कृत्वा लिङ्गञ्च पार्थिवम् ।

यावज्जीवनपर्यन्तं स याति शिवमन्दिरम् ॥ ११० ॥

मृदो रेणुप्रमाणाब्दं शिवलोकेमहीयते । ततः पुनरिहागत्य राजेन्द्रो भारते भवेत् ॥ शिलां च पूजयेन्नित्यंशिलातोयञ्चभक्षति । महीयते च वैकुण्ठे यावद्वै ब्रह्मणः शतम् ततो लब्ध्वापुनर्जन्महरिभक्तिञ्च दुर्लभाम् । महीयते विष्णुलोकेनतस्य पतनम्भवेत्

तपांसिचैव सर्वाणिव्रतानिनिखिलानि च । कृत्वातिष्ठ तिवैकुण्ठे यावदिन्द्राश्चतुर्दश
ततो लब्ध्वा पुनर्जन्म राजेन्द्रो भारते भवेत् । ततोमुक्तोभवेत्पश्चात्पुनर्जन्मन विद्यते

यः स्नात्वा सर्वतीर्थेषु भुवः कृत्वा प्रदक्षिणाम् ।
स तु निर्वाणतां याति न च जन्म भवेद्भुवि ॥ ११६ ॥

पुण्यक्षेत्रे भारतेचयोऽश्वमेधंकरोति च । अश्वलोममिताब्दं च शक्रस्यार्धासनम्भजेत्
चतुर्गुणंराजसूये फलमाप्नोति मानवः । सर्वेभ्योऽपि मखेभ्योहिपरोदेवीमखःस्मृतः
विष्णुना च कृतः पूर्वं ब्रह्मणा च वरानने । शङ्करेण महेशेन त्रिपुरासुरनाशने ॥ ११६
शक्तियज्ञः प्रधानश्च सर्वयज्ञेषु सुन्दरि ! । नाऽनेन सदृशो यज्ञस्त्रिषुलोकेषु विद्यते ॥
दक्षेण च कृतः पूर्वं महान्सम्वादसंयुतः । बभूव कलहो यत्र दक्षशङ्करयोः सति !॥
शेपुश्च नन्दिनं विप्रा नन्दीविप्रांश्च कोपतः । यद्धेतोर्दक्षयज्ञश्च बभञ्ज चन्द्रशेखरः॥
चकार देवीयज्ञं स पुरा दक्षः प्रजापतिः । धर्मश्च कश्यपश्चैव शेषश्चापि च कर्दमः ॥
स्वायम्भुवो मनुश्चैव तत्पुत्रश्च प्रियव्रतः । शिवः सनत्कुमारश्च कपिलश्च ध्रुवस्तथा
राजसूयसहस्राणां फलमाप्नोतिनिश्चितम् । देवीयज्ञात्परो यज्ञो नास्ति वेदे फलप्रदः

वर्षाणां शतजीवी च जीवन्मुक्तो भवेद्ध्रुवम् ।
ज्ञानेन तेजसा चैव विष्णुतुल्यो भवेदिह ॥ १२६ ॥

देवानाञ्च यथा विष्णुर्वैष्णवानाञ्च नारदः । शास्त्राणाञ्चयथा वेदा वर्णानां ब्राह्मणोयथा
तीर्थानाञ्च यथागङ्गापवित्राणांशिवोयथा । एकादशी व्रतानाञ्च पुष्पाणांतुलसीयथा
नक्षत्राणां यथा चन्द्रःपक्षिणागरुडोयथा । यथा स्त्रीणाञ्चप्रकृतीराधावाणीवसुन्धरा

शीघ्राणां चेन्द्रियाणाञ्च चञ्चलानां मनो यथा ।
प्रजापतीनां ब्रह्मा च प्रजानां च प्रजापतिः ॥ १३० ॥

वृन्दावनं वनानाञ्च वर्षाणां भारतंयथा । श्रीमतां च यथा श्रीश्च विदुषाञ्चसरस्वती
पतिव्रतानां दुर्गा च सौभाग्यानाञ्चराधिका । देवीयज्ञस्तथावत्सेसर्वयज्ञेषु भामिनि
अश्वमेधशतेनैव शक्रत्वञ्च लभेद् ध्रुवम् । सहस्रेण विष्णुपदं सम्प्राप्तः पृथुरेव च ॥
स्नानञ्च सर्वतीर्थानां सर्वयज्ञेषु दीक्षणम् । सर्वेषां च व्रतानाञ्च तपसां फलमेव च

पाठे चतुर्णां वेदानां प्रदक्षिण्यं भुवस्तथा । फलभूतमिदं सर्वं मुक्तिदं शक्तिसेवनम्
पुराणेषु च वेदेषु चेतिहासेषु सर्वतः । निरूपितं सारभूतंदेवीपादाम्बुजार्चनम् ॥ २६
तद्वर्णनं च तद्ध्यानं तन्नामगुणकीर्तनम् । तत्स्तोत्रस्मरणं चैवं वन्दनं जपमेव च
तत्पादोदकनैवेद्यं भक्षणं नित्यमेव च । सर्वसम्मतमित्येवं सर्वेप्सितमिदं सति ॥
भज नित्यम्परम्ब्रह्म निर्गुणंप्रकृतिं पराम् । गृहाणस्वामिनम्वत्सेसुखम्वसमन्त्रमन्दिरे
अयं ते कथितःकर्मविपाको मङ्गलो नृणाम् । सर्वेप्सितः सर्वमतन्तत्त्वज्ञानप्रदः परः

इति श्रीदेवीभागवते महापुराणेऽष्टादश साहस्र्यां संहितायां नवमस्कन्धे यमेनकर्मविपाककथनंनाम त्रिंशोऽध्यायः ॥ ३० ॥

---

# एकत्रिंशोऽध्यायः

## सावित्रीकृतयमाष्टकपूर्वकंतस्यैशक्तिमन्त्रप्रदानवर्णनम्

श्रीनारायण उवाच

शक्तेरुत्कीर्तनं श्रुत्वा सावित्री यमवक्त्रतः । साश्रुनेत्रा सपुलका यमं पुनरुवाच सा

सावित्र्युवाच

शक्तेरुत्कीर्तनं धर्म सकलोद्धारकारणम् । श्रोतृणां चैव वक्तॄणांजन्ममृत्युजराहरम्
दानवानाञ्च सिद्धानां तपसाञ्च परम्पदम् । योगानाञ्चैव वेदानांकीर्तनंसेवनम्विभोः
मुक्तित्वममरत्वञ्चसर्वसिद्धित्वमेव च । श्रीशक्तिसेवकस्यैव कलांनार्हन्तिषोडशीम्
भजामि केन विधिना वद वेदविदाम्वर । शुभकर्मविपाकञ्च श्रुतं नॄणां मनोहरम् ॥५
कर्माशुभविपाकञ्च तन्मे व्याख्यातुमर्हसि । इत्युक्त्वाचसतीब्रह्मन्भक्तिनम्रात्मकन्धरा
तुष्टाव धर्मराजञ्च वेदोक्तेन स्तवेन च ।

सावित्र्युवाच

तपसा धर्ममाराध्य पुष्करे भास्करः पुरा ॥ ७ ॥

धर्मं सूर्यः सुतम्प्राप धर्मराजं नमाम्यहम् । समता सर्वभूतेषु यस्यसर्वस्यसाक्षिणः
अतो यन्नाम शमनमिति तम्प्रणमाम्यहम् । येनान्तश्चकृतोविश्वे सर्वेषांजीविनांपरम्
कामानुरूपं कालेनतं कृतान्तं नमाम्यहम् । बिभर्ति दण्डं दण्डाय पापिनां शुद्धिहेतवे
नमामि तं दण्डधरं यः शास्तासर्वजीविनाम् । विश्वञ्चकलयत्येवयःसर्वेषुचसन्ततम्
अतीव दुर्निवार्यश्चतं कालंप्रणमाम्यहम् । तपस्वीब्राह्मनिष्ठोयःसंयमीसं जितेन्द्रियः
जीवानां कर्मफलदस्तं यमंप्रणमाम्यहम् । स्वात्मारामश्चसर्वज्ञोमित्रंपुण्यकृतांभवेत्
पापिनां क्लेशदो यस्तं पुण्यमित्रंनमाम्यहम् । यज्जन्मब्रह्मणोंऽशेनज्वलन्तंब्रह्मतेजसा
यो ध्यायति परम्ब्रह्म तमीशं प्रणमाम्यहम् । इत्युक्त्वासाच सावित्रीप्रणनामयमंमुने
यमस्ता शक्तिभजनं कर्मपाकमुवाच ह । इदं यमाष्टकं नित्यं प्रातरुत्थाय यः पठेत्
यमात्तस्य भयं नास्ति सर्वपापात्प्रमुच्यते । महापापी यदिपठेन्नित्यंभक्तिसमन्वितः
यमः करोति संशुद्धं कायव्यूहेन निश्चितम् ॥ १८ ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे
यमाष्टकवर्णनंनामैकत्रिंशोऽध्यायः ॥ ३१ ॥

---

## द्वात्रिंशोऽध्यायः

### विविधपापानांनानानरककुण्डवर्णनम्

श्रीनारायण उवाच

मायाबीजं महामन्त्रं प्रदत्वा विधिपूर्वकम् । कर्माशुभविपाकञ्च तामुवाच रवेः सुतः

धर्मराज उवाच

शुभकर्मविपाकान्न नरकं याति मानवः । कर्माशुभविपाकञ्च कथयामि निशामय ॥२
नानापुराणभेदेन नामभेदेनभामिनि ! नानाप्रकारं स्वर्गञ्च याति जीवः स्वकर्मभिः
शुभकर्मविपाकान्न नरकं याति कर्मभिः । कुकर्मणाच नरकं याति नानाविधं नरः ॥४

नरकाणाञ्च कुण्डानि सन्ति नानाविधानिच । नानाशास्त्रप्रमाणेनकर्मभेदेन यानि च

विस्तृतानि च गर्तानि क्लेशदानि च दुःखिनाम् ।

भयङ्कराणि घोराणि हे वत्से! कुत्सितानि च ॥ ६ ॥

षडशीतिच कुण्डानिएवमन्यानिसन्तिच । निबोधतेषांनामानिप्रसिद्धानिश्रुतौसति!

वह्निकुण्डं तप्तकुण्डं क्षारकुण्डं भयानकम् ।

विट्कुण्डं मूत्रकुण्डं च श्लेष्मकुण्डं च दुःसहम् ॥ ८ ॥

गरकुण्डं दूषिकुण्डं वसाकुण्डं तथैव च । शुक्रकुण्डमसृक्कुण्डमश्रुकुण्डंचकुत्सितम्

कुण्डंगात्रमलानाञ्चकर्णविट्कुण्डमेव च । मज्जाकुण्डंमांसकुण्डं नखकुण्डंचदुस्तरम्

लोमकुण्डं केशकुण्डमस्थिकुण्डञ्चदुस्तरम् । ताम्रकुण्डंलोहकुण्डंप्रतप्तंक्लेशदंमहत्

चर्मकुण्डं तप्तसुराकुण्डञ्चपरिकीर्तितम् । तीक्ष्णकण्टककुण्डञ्चविषोदंविषकुण्डकम्

प्रतप्तकुण्डं तैलस्य कुन्तकुण्डञ्च दुर्वहम् । कृमिकुण्डं पूयकुण्डं सर्पकुण्डं दुरन्तकम्

मशकुण्डं दंशकुण्डं भीमं गरलकुण्डकम् । कुण्डञ्च वज्रदंष्ट्राणांवृश्चिकानाञ्चसुव्रते

शरकुण्डं शूलकुण्डंखड्गकुण्डञ्चभीषणम् । गोलकुण्डंनक्रकुण्डंकाककुण्डंशुचास्पदम्

मन्थानकुण्डं बीजकुण्डं वज्रकुण्डञ्च च दुःसहम् ।

तप्तंपाषाणकुण्डञ्च तीक्ष्णपाषाणकुण्डकम् ॥ १६ ॥

लालाकुण्डं मसीकुण्डं चूर्णकुण्डं तथैवच । चक्रकुण्डं वक्रकुण्डंकूर्मकुण्डंमहोल्वणम्

ज्वालाकुण्डंभस्मकुण्डं दग्धकुण्डंशुचिस्मिते !। तप्तसूचीमसिपत्रंक्षुरधारंसूचीमुखम्

गोकामुखं नक्रमुखं गजदंशञ्चगोमुखम् । कुम्भीपाकंकालसूत्रं मत्स्योदंकृमिकन्तुकम्

पांसुभोज्यं पाशवेष्टं शूलप्रोतं प्रकम्पनम् । उल्कामुखमन्धकूपं वेधनं ताडनं तथा

जालरन्ध्रं देहचूर्णं दलनं शोषणं कषम् । शूर्पंज्वालामुखं चैव धूमान्धं नागवेष्टनम्

कुण्डान्येतानि सावित्रि! पापिनां क्लेशदानि च ।

नियुतैः किङ्करगणै रक्षितानि च सन्ततम् ॥ २२ ॥

दण्डहस्तैः पाशहस्तैर्मदमत्तैर्भयङ्करैः । पङ्क्तिहस्तैर्गदाहस्तैरसिहस्तैः सुदारुणैः

तमोयुक्तैर्दयाहीनैर्निवार्यैश्च न सर्वतः । तेजस्विभिश्च निःशङ्कैस्ताम्रपिङ्गलोचनैः ॥

योगयुक्तैः सिद्धयुक्तैर्नानारूपधरैर्भटैः । आसन्नमृत्युभिर्दृष्टैः पापिभिः सर्वजीविभिः
स्वकर्मनिरतैः सर्वैः शाक्तैः सौरैश्च गणपैः । अदृश्यैः पुण्यकृद्भिश्च सिद्धैर्योगिभिरेव च
स्वधर्मनिरतैर्वाऽपि विततैर्वा स्वतन्त्रकैः । बलवद्भिश्च निःशङ्कैःस्वप्नदृष्टैश्चवैष्णवैः
एतत्तेकथितंसाध्विकुण्डसङ्ख्यानिरूपणम् ।येषांनिवासोयत्कुण्डेनिबोधकथयामिते
इति श्रीदेवीभागवते माहापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे नारायण-
नारदसम्वादे सावित्र्युपाख्याने कुण्डसङ्ख्यानिरूपणं नाम द्वात्रिंशोऽध्यायः ॥

---

# त्रयस्त्रिंशोऽध्यायः

## नानादुष्कृतकर्मणांविपाकवर्णनम्

धर्मराज उवाच

हरिसेवारतः शुद्धो योगसिद्धो व्रती सति । तपस्वी ब्रह्मचारीचनयातिनरकंध्रुवम्
कटुवाचाबान्धवांश्च बललेपेन यो नरः । दग्धंकरोति बलवान्वह्निकुण्डं प्रयाति सः
स्वगात्रलोममानाब्दं तत्रस्थित्वाहुताशने । पशुयोनिमवाप्नोतिरौद्रदग्धात्रिजन्मनि
ब्राह्मणं तृषितं तप्तं क्षुधितं गृहमागतम् । न भोजयति यो मूढस्तप्तकुण्डं प्रयातिसः
तत्र तल्लोममानश्च वर्षं स्थित्वा च दुःखदे । तप्तस्थले वह्नितल्पे पक्षी च सप्तजन्मसु
रविवारे च सङ्क्रान्त्याममायांश्राद्धवासरे । वस्त्राणांक्षारसंयोगं करोति केवलं नरः
स याति क्षारकुण्डञ्च सूत्रमानाब्दमेव च । स व्रजेद्रजकी योनिं सप्तजन्मसु भारते
मूलप्रकृतिनिन्दांयः कुरुते मानवाधमः । वेदनिन्दां शास्त्रनिन्दां पुराणानां तथैव च॥
ब्रह्मविष्णुशिवादीनां तथानिन्दापरोजनः । गौरीवाण्यादिदेवीनांतथानिन्दापरो जनः
ते सर्वे निरये यान्ति तस्मिन्कुण्डे भयानके। नातःपरतरं कुण्डं दुःखदं तु भविष्यति
तत्र स्थित्वाऽनेककल्पान्सर्पयोनिं व्रजेत्पुनः । देवीनिन्दापराधस्यप्रायश्चित्तंनविद्यते
स्वदत्तांपरदत्तांवावृत्तिञ्च सुरविप्रयोः । षष्टिवर्षसहस्राणि विट्कुण्डञ्च प्रयातिसः

तावन्त्येव चवर्षाणिविड्भोजीतत्रतिष्ठति । षष्टिवर्षसहस्राणि विट्कृमिश्च पुनर्भवि
परकीयतडागेच तडागं यःकरोति च । उत्सृजेद्दैवदोषेण मूत्रकुण्डं प्रयाति सः ॥
तद्रेणुमानवर्षञ्च तद्भोजी तत्रतिष्ठति । पुनः पूर्णशताब्दञ्च स वृषो भारते भवेत् ॥
एकाकी मिष्टमश्नाति श्लेष्मकुण्डं प्रयाति च । पूर्णमब्दशतं चैव तद्भोजी तत्रतिष्ठति
ततः पूर्णशताब्दं च स प्रेतो भारते भवेत् । श्लेष्ममूत्रपरं चैवपूयं भुङ्क्ते ततःशुचिः
पितरं मातरंचैव गुरुं भार्यां सुतंसुताम् । यो न पुष्णात्यनाथञ्चगरकुण्डं प्रयातिसः
पूर्णमब्दशतञ्चैव तद्भोजी तत्र तिष्ठति । ततो व्रजेद्भूतयोनि शतवर्षं ततः शुचिः॥

दृष्ट्वाऽतिथि वक्रचक्षुः करोति यो हि मानवः ।
पितृदेवास्तस्य जलं न गृह्णन्ति च पापिनः ॥ २० ॥

यानि कानि च पापानि ब्रह्महत्यादिकानि च । इहैवलभतेचान्ते दूषिकाकुण्डमाव्रजेत्
पूर्णमब्दशतञ्चैव तद्भोजी तत्र तिष्ठति । ततो व्रजेद्भूतयोनिंशतवर्षं ततः शुचिः ॥
दत्त्वा द्रव्यञ्च विप्रायचान्यस्मैदीयते यदि । स तिष्ठतिवसाकुण्डेतद्भोजीशतवत्सरम्
कृकलासो भवेत्सोऽपि भारते सप्तजन्मसु । ततोभवेन्महारौद्रो दरिद्रोऽल्पायुरेव च
पुमांसकामिनी वाऽपि कामिनीं वा पुमानथ । यःशुक्रंपाययत्येवशुक्रकुण्डंप्रयातिसः
पूर्णमब्दशतञ्चैव तद्भोजी तत्र तिष्ठति । कृमियोनिंशताब्दञ्च व्रजेद्भूत्वा ततः शुचिः
सन्ताड्य च गुरुं विप्रं रक्तपातञ्चकारयेत् । सचतिष्ठत्यसृक्कुण्डेतद्भोजीशतवत्सरम्
ततोलभेद्व्याघ्रजन्मसप्तजन्मसु भारते । ततः शुद्धिमवाप्नोति मानवश्च क्रमेण ह ॥
योऽश्रुत्याज गायन्तं भक्तं दृष्ट्वा सगद्गदम् । श्रीकृष्णगुणसङ्गीते हसत्येवहियोनरः
स वसेदश्रुकुण्डेच तद्भोजीशतवर्षकम् । ततो भवेच्च चण्डालस्त्रिजन्मनि ततः शुचिः

करोति शठतां तद्वन्नित्यं सुहृदि यो नरः ।
कुण्डं गात्रमलानाञ्च स प्रयाति शताब्दकम् ॥ २१ ॥

ततःसगार्दभींयोनिमवाप्नोतित्रिजन्मनि । त्रिजन्मनिचशार्गालींततःशुद्धोभवेद्ध्रुवम्
बधिरं यो हसत्येवनिन्दत्येवाभिमानतः । सवसेत्कर्णविट्कुण्डेतद्भोजीशतवत्सरम्
ततो भवेत्स बधिरो दरिद्रः सप्तजन्मसु । सप्तजन्मन्यङ्गहीनस्ततः शुद्धिं लभेद्ध्रुवम्

लोभात्स्वभरणार्थाय जीविनं हन्ति यो नरः ।
मज्जाकुण्डे वसेत्सोऽपि तद्भोजी लक्षवत्सरम् ॥ ३५ ॥

ततोभवेच्च शशको मीनश्च सप्तजन्मसु । त्रिजन्मनि वराहश्च कुक्कुटः सप्तजन्मसु
एणादयश्च कर्मभ्यस्ततःशुद्धिलभेद्ध्रुवम् । स्वकन्यापालनंकृत्वाविक्रीणातिचयोनरः
अर्थलोभान्महामूढो मांसकुण्डं प्रयाति सः । कन्यालोमप्रमाणाब्दंतद्भोजीतत्रतिष्ठति
तस्य दण्डप्रहारश्च कुर्वन्ति यमकिङ्कराः । मांसभारं मूर्ध्नि कृत्वा रक्तभारंलिहेत्क्षुधा
ततो हि भारते पापीकन्याविट्कृमिगोभवेत् । षष्टिवर्षसहस्राणिव्याधश्चसप्तजन्मसु
त्रिजन्मनि वराहश्च कुक्कुटः सप्तजन्मसु । मण्डूको हि जलौकाश्चसप्तजन्मसुभारते
सप्तजन्मसु काकश्च ततः शुद्धिं लभेद्ध्रुवम् । व्रतानामुपवासाना श्राद्धादीनाञ्च सङ्गमे
करोति यः क्षौरकर्म सोऽशुचिःसर्वकर्मसु । सचनिष्ठतिकुण्डश्चनखादीनाञ्चसुन्दरि!
तद्दैवदिनमानाब्दं तद्भोजी दण्डताडितः । सकेशं पार्थिवं लिङ्गं यो वाऽर्चयति भारते
स तिष्ठतिकेशकुण्डे मृद्रेणुमानवर्षकम् । तदन्ते यावनी योनिं प्रयाति हरकोपतः ॥
शताब्दाच्छुद्धिमाप्नोतिराक्षसःसभवेद्ध्रुवम् । पितृणांयोविष्णुपदे पिण्डंनवददातिच
सचतिष्ठत्यस्थिकुण्डेस्वलोमाब्दंमहोल्वणे । ततःसुयोनिसम्प्राप्यकुखञ्जःसप्तजन्मसु
भवेन्महादरिद्रश्च ततः शुद्धो हि देहतः । यः सेवतेमहामूढोगुर्विणीञ्च स्वकामिनीम्
प्रतप्ते ताम्रकुण्डे च शतवर्षंसतिष्ठति । अवीरान्नञ्चयोभुङ्क्ते ऋतुस्नातान्नमेव च ॥४६
लोहकुण्डे शताब्दञ्चस च तिष्ठति तप्तके । स व्रजेद्रजकीं योनिं काकानां सप्तजन्मसु
महाव्रणी दरिद्रश्च ततः शुद्धो भवेन्नरः । यो हि चर्माक्तहस्तेन देवद्रव्यमुपस्पृशेत् ॥
शतवर्षप्रमाणञ्च चर्मकुण्डे स तिष्ठति । यः शूद्रेणाऽभ्यनुज्ञातो भुङ्क्ते शूद्रान्नमेव च॥
स च तप्तसुराकुण्डे शताब्दं तिष्ठति द्विजः । ततोभवेच्छूद्रयाजीब्राह्मणः सप्तजन्मसु
शूद्रश्राद्धान्नभोजीचततः शुद्धो भवेद्ध्रुवम् । वाग्दुष्टःकटुकोवाचाताडयेत्स्वामिनंसदा

तीक्ष्णकण्टककुण्डे स तद्भोजी तत्र तिष्ठति ।
ताडितो यमदूतेन दण्डेन च चतुर्गुणम् ॥ ५५ ॥

तत उच्चैःश्रवा सप्तजन्मस्वेव ततः शुचिः । विषेणजीवनंहन्तिनिर्दयोयोहि मानवः

विषकुण्डे च तद्भोजी सहस्राब्दश्च तिष्ठति। ततोभवेन्नृघाती च व्रणी च शतजन्मसु सप्तजन्मसु कुष्ठीच ततः शुद्धो भवेद्ध्रुवम्। दण्डेन ताडयेद्गां हि वृषश्च वृषवाहकः भृत्यद्वारा स्वतन्त्रो वापुण्यक्षेत्रे च भारते। प्रतप्तेतैलकुण्डेऽसौतिष्ठतिस्मचतुर्युगम् गवां लोमप्रमाणाब्दं वृषो भवति तत्परम्। कुन्तेन हन्ति यो जीवंचह्निलोहेनहेलया कुन्तकुण्डेवसेत्सोऽपिवर्गाणामयुतं सति। ततःसुयोनिसम्प्राप्यचोदरेव्याधिसंयुतः जन्मनैकेन क्लेशेन ततः शुद्धोभवेन्नरः। यो भुङ्क्ते चवृथामांसंमांसलोभीद्विजाधमः हरेरनैवेद्यभोजी कृमिकुण्डं प्रयाति सः। स्वलोममानवर्षञ्च तद्भोजी तत्र तिष्ठति

ततो भवेन्म्लेच्छजातिस्त्रिजन्मनि ततो द्विजः।

ब्राह्मणः शूद्रयाजी च शूद्रश्राद्धान्नभोजकः ॥ ६४ ॥

शूद्राणां शवदाहीच पूयकुण्डे वसेद्ध्रुवम्। यावल्लोमप्रमाणाब्दं यमदण्डेन सुव्रते ताडितो यमदूतेन तद्भोजी तत्र तिष्ठति। ततो भारतमागत्य सशूद्रः सप्तजन्मसु महारोगी दरिद्रश्च बधिरो मूक एव च। कृष्णं पद्मश्च केयस्य तंसर्पं हन्तियो नरः स्वलोममानवर्षञ्च सर्पकुण्डं प्रयाति सः। सर्पेण भक्षितः सोऽथ यमदूतेन ताडितः वसेच्च सर्पविड्भोजीततः सर्पोभवेद्ध्रुवम्। ततोभवेन्मानवश्चस्वल्पायुर्दद्रुसंयुतः महाक्लेशेनतन्मृत्युःसर्पेणभक्षिताद्ध्रुवम्। विधिप्रदत्तजीव्यांश्चक्षुद्रजन्तूंश्चहन्तियः स दंशमशयोः कुण्डे जन्तुमानाब्दमेव च। दिवानिशं भक्षितस्तैरनाहारश्चशब्दवान् हस्तपादादिबद्धश्च यमदूतेन ताडितः। ततो भवेत्क्षुद्रजन्तुर्जातिश्च यावनी भवेत् ततोभवेन्मानवश्च सोऽङ्गहीनस्ततःशुचिः। योमूढोमधुमश्नातिहत्वाचमधुमक्षिकाः स एव गारले कुण्डे जीवमानाब्दकं वसेत्। भक्षितो गरलैर्दग्धो यमदूतेन ताडितः ततो हिमक्षिकाजातिस्ततःशुद्धोभवेन्नरः। दण्डं करोत्यदण्ड्ये चविप्रेदण्डंकरोतिच

स कुण्डं वज्रदंष्ट्राणां कीटानां याति सत्वरम्।

स तल्लोमप्रमाणाब्दं तत्र तिष्ठत्यहर्निशम् ॥ ७६ ॥

शब्दकृद्भक्षितस्तैस्तु यमदूतेन ताडितः। करोति रोदनं भद्रे हाहाकारं क्षणेक्षणे ॥ पुनः सूकरयोनौश्च जायते सप्तजन्मसु। त्रिजन्मनि काकयोनौ ततः शुद्धो भवेन्नरः

अर्थलोभेन यो मूढःप्रजादण्डंकरोतिसः। वृश्चिकानाञ्चकुण्डञ्चतल्लोमाब्दंवसेद्ध्रुवम्
ततो वृश्चिकजातिश्च सप्तजन्मसु भारते। ततो नरश्चाङ्गहीनोव्याधिशुद्धोभवेद्ध्रुवम्
ब्राह्मणःशस्त्रधारीयोह्यन्येषांधावकोभवेत्। सन्ध्याहीनश्चयोविप्रोहरिभक्तिविहीनकः
स तिष्ठति स्वलोमाब्दं कुण्डेषुच शरादिषु। विद्धःशरादिभिःशश्वत्ततःशुद्धोभवेन्नरः

कारागारे सान्धकारे प्रणिहन्ति प्रजाश्च यः।
प्रमत्तः स्वस्य दोषेण गोलकुण्डं प्रयाति सः॥ ८३॥

सपङ्कतप्ततोयाक्तं सान्धकारं भयङ्करम्। तीक्ष्णदंष्ट्रैश्च कीटैश्चसंयुक्तंगोलकुण्डकम्
कीटैर्विद्धोवसेत्तत्र प्रजालोमाब्दमेव च। ततोभवेत्प्रजाभृत्यस्ततःशुद्धोभवेत्क्रमात्
सरोवरादुत्थिताश्चनक्रादीन्हन्ति यो नरः। नक्रकण्टकमानाब्दंनक्रकुण्डं प्रयाति सः
ततोनक्रादिजातीयो भवेन्नक्रादिषुध्रुवम्। ततः सद्यो विशुद्धोहिदण्डेनैव पुनः पुनः

वक्षःश्रोणीस्तनास्यं च यः पश्यति परस्त्रियाः।
कामेन कामुको यो हि पुण्यक्षेत्रे च भारते॥ ८८॥

सवसेत्काकतुण्डे च काकैःसञ्चूर्णलोचनः। ततःस्वलोममानाब्दंभवेद्गन्धस्त्रिजन्मनि
स्वर्णस्तेयी चयोमूढोभारतेसुरविप्रयोः। सचमन्थानकुण्डेचैस्वलोमाब्दंवसेद्ध्रुवम्
ताडितो यमदूतेन मन्थानैश्छन्नलोचनः। तद्विड्भोजी च तत्रैवततश्चान्धस्त्रिजन्मनि
सप्तजन्मदरिद्रश्च महाक्रूरश्च पातकी। भारते स्वर्णकारश्च स च स्वर्णवणिक्ततः
यो भारते ताम्रचौरोलोहचौरश्चसुन्दरि!। सचस्वलोममानाब्दंवीजकुण्डंप्रयातिसः
तत्रैव बीजविड्भोजी बीजैश्च छन्नलोचनः। ताडितो यमदूतेन ततः शुद्धोभवेन्नरः
भारते देवचौरश्चदेवद्रव्यापहारकः। स दुस्तरे वज्रकुण्डे स्वलोमाब्दं वसेद्ध्रुवम्
देहदग्धोऽपि तद्वज्रैरनाहारश्च शब्दकृत्। ताडितो यमदूतश्च ततः शुद्धो भवेन्नरः॥

रौप्यगव्यांशुकानां च यश्चौरः सुरविप्रयोः।
तप्तपाषाणकुण्डे च स्वलोमाब्दं वसेद् ध्रुवम्॥ ६७॥
त्रिजन्मनि च कंसोऽपि श्वेतरूपस्त्रिजन्मनि।
जन्मैकं श्वेतचिह्नश्च ततोऽन्ये श्वेतपक्षिणः॥ ६८॥

ततो रक्तविकारी च शूली वै मानवोभवेत्। सप्तजन्मसुचाल्पायुस्ततः शुद्धोभवेन्नरः
रैतं कांस्यमयं पात्रं यो हरेद्देवविप्रयोः। तीक्ष्णपाषाणकुण्डे च स्वलोमाब्दंवसेन्नरः
सभवेदश्वजातिश्च भारते सप्तजन्मसु। ततोऽधिकाङ्गजातिश्च पादरोगीततः शुचिः

पुंश्चल्यन्नं च यो भुङ्क्ते पुंश्चलीजीव्यजीविनः।
स्वलोममानवर्षञ्च लालाकुण्डे वसेद् ध्रुवम् ॥ १०२ ॥

ताडितो यमदूतेन तद्भोजी तत्र दुःखितः। ततश्चक्षुः शूलरोगी ततःशुद्धः क्रमेण सः

म्लेच्छसेवी मसीजीवी यो विप्रो भारते भुवि।
वसेत्स्वलोममानाब्दं मसीकुण्डे स दुःखभाक् ॥ १०४ ॥

ताडितोयमदूतेन तद्भोजी तत्र तिष्ठति। ततस्त्रिजन्मनि भवेत्कृष्णवर्णः पशुः सति
त्रिजन्मनिभवेच्छागः कृष्णवर्णस्त्रिजन्मनि। ततः स तालवृक्षश्च ततः शुद्धोभवेन्नरः
धान्यादिशस्यं ताम्बूलं यो हरेत्सुरविप्रयोः। आसनंचतथातल्पंचूर्णकुण्डेप्रयातिसः
शताब्दं तत्र निवसेद्यमदूतेन ताडितः। ततो भवेन्मेषजातिः कुक्कुटश्च त्रिजन्मनि
ततोभवेद्वानरश्च कासव्याधियुतो भुवि। वंशहीनोदरिद्रश्च अल्पायुश्च ततः शुचिः
करोतिचक्रं विप्राणां हृत्वा द्रव्यञ्च योजनः। सवसेच्चक्रकुण्डेचशताब्दंदण्डताडितः
ततो भवेन्मानवश्च तैलकारस्त्रिजन्मनि। व्याधियुक्तो भवेद्रोगी वंशहीनस्ततःशुचिः
गोधनेषु च विप्रेषु करोति वक्रतां पुमान्। प्रयाति वक्रकुण्डं सतिष्ठेद्युगशतं सति
ततो भवेत्स वक्राङ्गो हीनाङ्गः सप्तजन्मनि। दरिद्रोवंशहीनश्च भार्याहीनस्ततःशुचिः
ततो भवेद्गृध्रजन्मा त्रिजन्मनि च सूकरः। त्रिजन्मनि विडालश्च मयूरश्चत्रिजन्मनि
निषिद्धं कूर्ममांसञ्च ब्राह्मणोयोहिभक्षति। कूर्मकुण्डेवसेत्सोऽपिशताब्दंकूर्मभक्षितः
ततोभवेत्कूर्मजन्मा त्रिजन्मनि च सूकरः। त्रिजन्मनि बिडालश्च मयूरश्च ततःशुचिः
घृतं तैलादिकं चैव यो हरेत्सुरविप्रयोः। सयातिज्वालाकुण्डञ्चभस्मकुण्डञ्चपातकी
तत्र स्थित्वा शताब्दञ्च स भवेत्तैलपाचितः। सप्तजन्मनिमत्स्यश्चमूषकश्चततःशुचिः
सुगन्धि तैलं धात्रीं वा गन्धद्रव्यान्यदेव वा। भारते पुण्यवर्षेच यो हरेत्सुरविप्रयोः
स वसेद्दुर्गन्धकुण्डे च भवेद्दुर्गन्धो दिवानिशम्। स्वलोममानवर्षञ्चततोदुर्गन्धिकोभवेत्

दुर्गन्धिकः सप्तजन्म मृगनाभिस्त्रिजन्मनि । सप्तजन्मसु मन्थानस्ततोहिमानवोभवेत्
बलेनैव च्छलेनैव हिंसारूपेण वा सति ! । बलिष्ठश्च हरेद्भूमिं भारते परपैतृकीम् ॥
स वसेत्तप्तसूचिं च भवेत्तापीदिवानिशम् । तप्ततैलेयथा जीवो दग्धोभवतिसन्ततम्
भस्मसान्न भवत्येव भोगे देही न नश्यति । सप्तमन्वन्तरम्पापी सन्तप्तस्तत्र तिष्ठति
शब्दं करोत्यनाहारो यमदूतेन ताडितः । षष्टिवर्षसहस्राणि विट्कृमिश्च भवेत्ततः ॥
ततो भवेद्भूमिहीनो दरिद्रश्च ततःशुचि । ततः स्वयोनिंसम्प्राप्य शुभकर्माचरेत्पुनः

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे
नानाकर्मविपाकफलकथनंनामत्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

# चतुस्त्रिंशोऽध्यायः

## नानाकर्मविपाकफलवर्णनम्

यमधर्म उवाच

छिनत्तिजीवं खड्गेन दयाहीनः सुदारुणः । नरघाती हन्ति नरमर्थलोभेन भारते ॥१॥
असिपत्रेवसेत्सोऽपियावद्रिन्द्राश्चतुर्दश । तेषु यो ब्राह्मणान्हन्तिशतमन्वन्तरंवसेत्

छिन्नाङ्गः सम्वसेत्सोऽपि खड्गधारेण सन्ततम् ।
अनाहारः शब्दमुच्चैर्यमदूतेन ताडितः ॥ ३ ॥

मन्थानः शतजन्मानि शतजन्मानिसूकरः । कुक्कुटः सप्तजन्मानि सृगालःसप्तजन्मसु
व्याघ्रश्च सप्तजन्मानि वृकश्चैव त्रिजन्मसु । सप्तजन्मसु मण्डूको यमदूतेन ताडितः ॥
स भवेद्भारते वर्षे महिषश्च ततः शुचिः । ग्रामाणां नगराणां वा दहनं यः करोतिच

क्षुरधारे वसेत्सोऽपि च्छिन्नाङ्गस्त्रियुगं सति !।
ततः प्रेतो भवेत्सद्यो वह्निवक्त्रो भ्रमन्महीम् ॥ ७ ॥

सप्तजन्मामेध्यभोजी कपोतः सप्तजन्मसु । ततो भवेन्महाशूली मानवः सप्तजन्मनि ॥

सप्तजन्म गलत्कुष्ठी ततः शुद्धो भवेन्नरः । परकर्णे मुखं दत्त्वा परनिन्दां करोतियः
परदोषे महाश्लाघी देवब्राह्मणनिन्दकः । सूचीमुखेवसेत्सोऽपिसूचीविद्धोयुगत्रयम्
ततो भवेद् वृश्चिकश्च सर्पश्च सप्तजन्मसु । वज्रकीटस्सप्तजन्मभस्मकीटस्ततःपरम्

ततो भवेन्मानवश्च महाव्याधिस्ततः शुचिः ।
गृहिणां हि गृहं भित्त्वा वस्तुस्तेयं करोति यः ॥ १२ ॥
गाश्च च्छागांश्च मेषांश्च याति गोकामुखे च सः ।
ताडितो यमदूतेन वसेत्तत्र युगत्रयम् ॥ १३ ॥

ततोभवेत्सप्तजन्मगोजातिर्व्याधिसंयुतः । त्रिजन्मनिमेषजातिश्छागजातिस्त्रिजन्मनि
ततो भवेन्मानवश्च नित्यरोगी दरिद्रकः । भार्याहीनो बन्धुहीनःसन्तापीचततःशुचिः
सामान्यद्रव्यचौरश्च याति नक्रमुखञ्च सः । ताडितोयमदूतेन वसेत्तत्राब्दकत्रयम् ॥
ततो भवेत्सप्तजन्म गोपतिर्व्याधिसंयुतः । ततो भवेन्मानवश्चमहारोगी ततःशुचिः
हन्ति गाश्च गजांश्चैव तुरगांश्च नगांस्तथा । स यातिगजदंशञ्चमहापापी युगत्रयम्
ताडितो यमदूतेन नागदन्तेन सन्ततम् । स भवेद्गजजातिश्च तुरगश्च त्रिजन्मनि

गोजातिर्म्लेच्छजातिश्च ततः शुद्धो भवेन्नरः ।
जलं पिबन्तीं तृषितां गां वारयति यः पुमान् ॥ २० ॥

नरकं गोमुखाकारं कृमितप्तोदकान्वितम् । तत्र तिष्ठति सन्तप्तो यावन्मन्वन्तरावधि
ततो नरोऽपि गोहीनो महारोगीदरिद्रकः । सप्तजन्मान्त्यजातिश्चततःशुद्धो भवेन्नरः

गोहत्यां ब्रह्महत्याञ्च करोति ह्यातिदेशिकीम् ।
यो हि गच्छत्यगम्याञ्च यः स्त्रीहत्यां करोति च ॥ २३ ॥

भिक्षुहत्यां महापापी भ्रूणहत्याञ्चभारते । कुम्भीपाकेवसेत्सोऽपियावदिन्द्राश्चतुर्दश
ताडितो यमदूतेन चूर्ण्यमानश्च सन्ततम् । क्षणं पतति वह्नौच क्षणंपततिकण्टके ॥
क्षणं पतेत्तप्ततैले तप्तो येन क्षणं क्षणम् । क्षणञ्च तप्तलोहेच क्षणञ्च तप्तताम्रके ॥
गृध्रो जन्मसहस्राणि शतजन्मानि सूकरः । काकश्च सप्तजन्मानि सर्पश्च सप्तजन्मसु
षष्टिवर्षसहस्राणि विष्ठायां जायतेकृमिः । नानाजन्मसु स वृषस्ततः कुष्ठी दरिद्रकः

सावित्र्युवाच

विप्रहत्या च गोहत्या किम्विधा चाऽऽतिदेशिकी।
का वा नृणामगम्या च को वा सन्ध्याविहीनकः ॥ २६ ॥
अदीक्षितःपुमान्कोवाकोवातीर्थप्रतिग्रही। द्विजःकोवाग्रामयाजीकोवाविप्रोऽथदेवलः
शूद्राणां सूपकारश्च प्रमत्तो वृषलीपतिः। एतेषां लक्षणं सर्वं वद वेदविदाम्वर !॥

धर्मराज उवाच

श्रीकृष्णे च तदर्चायामन्येषां प्रकृतौ सति। शिवे च शिवलिङ्गे चसूर्ये सूर्यमणौतथा
गणेशेवाऽथ दुर्गायामेवं सर्वत्र सुन्दरि !। यः करोति भेदबुद्धिं ब्रह्महत्यां लभेत्तु सः
स्वगुरौ स्वेष्टदेवे च जन्मदातरि मातरि। करोतिभेदबुद्धिंयो ब्रह्महत्यां लभेत्तु सः
वैष्णवेषु च भक्तेषु ब्राह्मणेष्वितरेषु च। करोति भेदबुद्धिं यो ब्रह्महत्यां लभेत्तु सः
विप्रपादोदके चैव शालग्रामोदके तथा। करोति भेदबुद्धिं यो ब्रह्महत्यां लभेत्तु सः॥
शिवनैवेद्यके चैव हरिनैवेद्यके तथा। करोति भेदबुद्धिं यो ब्रह्महत्यां लभेत्तु सः ॥३७
सर्वेश्वरेश्वरेकृष्णे सर्वकारणकारणे। सर्वाद्ये सर्वदेवानां सेव्येसर्वान्तरात्मनि ॥३८॥
मायायाऽनेकरूपे वाऽप्येक एवहिनिर्गुणे। करोतीशेन भेदं यो ब्रह्महत्यां लभेत्तु सः॥
शक्तिभक्ते द्वेषबुद्धिं शक्तिशास्त्रे तथैव च। द्वेषं यः कुरुते मर्त्यो ब्रह्महत्यालभेत्तु सः
पितृदेवार्चनं यो वा त्यजेद्वेदनिरूपितम्। यःकरोतिनिषिद्धं च ब्रह्महत्यां लभेत्तुसः
यो निन्दति हृषीकेशं तन्मन्त्रोपासकंतथा। पवित्राणां पवित्रञ्चज्ञानानन्दंसनातनम्
प्रधानंवैष्णवानाञ्चदेवानांसेव्यमीश्वरम्। ये नार्चयन्ति निन्दन्ति ब्रह्महत्यांलभन्तिते
ये निन्दन्ति महादेवीं कारणब्रह्मरूपिणीम्। सर्वशक्तिस्वरूपाञ्च प्रकृतिं सर्वमातरम्
सर्वदेवस्वरूपाञ्च सर्वेषां वन्दितां सदा। सर्वकारणरूपाञ्च ब्रह्महत्या लभन्ति ते॥
कृष्णजन्माष्टमीं रामनवमीञ्चसुपुण्यदाम्। शिवरात्रिं तथा चैकादशीं वारे रवेस्तथा
पञ्चपर्वाणिपुण्यानियेनकुर्वन्तिमानवाः। लभन्ति ब्रह्महत्यांते चाण्डालाधिकपापिनः
अम्बुवाच्यां भूखननं जलशौचादिकञ्च ये। कुर्वन्ति भारते वर्षे ब्रह्महत्यां लभन्तिते
गुरुञ्च मातरं तातं साध्वीं भार्यां सुतं सुताम्।

अनिन्द्यां यो न पुष्णाति ब्रह्महत्यां लभेत्तु सः ॥ ४६ ॥

विवाहोयस्यनभवेन्न पश्यति सुतं तु यः । हरिभक्तिविहीनो यो ब्रह्महत्यांलभेत्तुसः

हरेरनैवेद्यभोजी नित्यं विष्णुं न पूजयेत् । पुण्यं पार्थिवलिङ्गश्चब्रह्महाऽसौप्रकीर्तितः

गोप्रहारं प्रकुर्वन्तं दृष्ट्वा यो न निवारयेत् । याति गोविप्रयोर्मध्ये गोहत्यांतुलभेत्तुसः

दण्डैर्गास्ताडयेन्मूढो यो विप्रो वृषवाहनः । दिने दिने गोवधञ्च लभतेनात्र संशयः

ददाति गोभ्य उच्छिष्टंभोजयेद्वृषवाहकम् । भुनक्तिवृषवाहान्नंसगोहत्यांलभेद्ध्रुवम्

वृषलीपतिं याजयेद्यो भुङ्क्तेऽन्नंतस्ययोनरः । गोहत्याशतकंसोऽपिलभतेनात्रसंशयः

पादं ददातिवह्नौयोगाश्चपादेनताडयेत् । गेहंविशेदधौताङ्घ्रिःस्नात्वागोवधमाप्नुयात्

यो भुङ्क्ते स्निग्धपादेन शेते स्निग्धाङ्घ्रिरेव च ।
सूर्योदये च यो भुङ्क्ते स गोहत्यां लभेद् ध्रुवम् ॥ ५७ ॥
अवीरान्नञ्च यो भुङ्क्ते योनिजीव्यस्य च द्विज ।
यस्त्रिसन्ध्याविहीनश्च गोहत्यां लभते च सः ॥ ५८ ॥

स्वभर्तरि चदेवेवाभेदबुद्धिंकरोतिया । कटूक्त्याताडयेत्कान्तंसागोहत्यांलभेद्ध्रुवम्

गोमार्गवर्जनं कृत्वा ददाति सस्यमेव वा । तडागेवा तु दुर्गे वासगोहत्यां लभेध्रुवम्

प्रायश्चित्ते गोवधस्य यः करोति व्यतिक्रमम् ।
पुत्रलोभादथाज्ञानात्स गोहत्यां लभेद्ध्रुवम् ॥ ६१ ॥

राजके दैवके यत्नाद्गोस्वामी गां न रक्षति । दुःखंददातियोमूढोगोहत्यांसलभेद्ध्रुवम्

प्राणिनो लङ्घयेद्यो हि देवार्चामनलञ्जलम् । नैवेद्यं पुष्पमन्नञ्च गोहत्यांसलभेद्ध्रुवम्

शश्वन्नास्तीति योवादीमिथ्यावादीप्रतारकः । देवद्वेषीगुरुद्वेषीसगोहत्यालभेद्ध्रुवम्

देवताप्रतिमां दृष्ट्वा गुरुं वा ब्राह्मणं सति । सम्भ्रमान्ननमेद्यो हिसगोहत्यांलभेद्ध्रुवम्

न ददात्याशिषं कोपात्प्रणताय च यो द्विजः ।
विद्यार्थिने च विद्यां च स गोहत्यां लभेद् ध्रुवम् ॥ ६६ ॥

गोहत्याविप्रहत्याचकथिताचाऽऽतिदेशिकी । गम्यांस्त्रियंनृणामेवनिबोधकथयामिते

स्वस्त्री गम्या चसर्वेषामितिवेदानुशासनम् । अगम्याचतदन्यायाचेतिवेदविदोविदुः

सामान्यं कथितं सर्वं विशेषंशृणुसुन्दरि । अत्यगम्याहियायाश्चनिबोधकथयामिताः
शूद्राणां विप्रपत्नीच विप्राणां शूद्रकामिनी । अत्यगम्या चनिन्द्याचलोकेवेदेपतिव्रते

शूद्रश्च ब्राह्मणीं गत्वा ब्रह्महत्याशतं लभेत् ।
तत्समं ब्राह्मणी चापि कुम्भीपाकं लभेद् ध्रुवम् ॥ ७१ ॥

शूद्राणां विप्रपत्नी च विप्राणां शूद्रकामिनी । यदि शूद्रां व्रजेद्विप्रोवृषलीपतिरेव सः

स भ्रष्टो विप्रजातेश्च चाण्डालात्सोऽधमःस्मृतः ।
विष्ठासमश्च तत्पिण्डो मूत्रं तस्य च तर्पणम् ॥ ७३ ॥
न पितॄणां सुराणां च तद्दत्तमुपतिष्ठति ।
कोटिजन्मार्जितं पुण्यं तस्यार्चा तपसाऽर्जितम् ॥ ७४ ॥

द्विजस्य वृषलीलोभान्नश्यत्येव न संशयः । ब्राह्मणश्चसुरापीतिर्विड्भोजीवृषलीपतिः
तप्तमुद्रादग्धदेहस्तप्तशूलाङ्कितस्तथा । हरिवासरभोजी च कुम्भीपाकं व्रजेद्द्विजः ॥
गुरुपत्नीं राजपत्नीं सपत्नीं मातरं ध्रुवम् । सुतां पुत्रवधूं श्वश्रूं सगर्भाभगिनीं सतीम्
सोदरभ्रातृजायाश्चमातुलानींपितुःप्रसूम् । मातुःप्रसूं तत्स्वसारंभगिनींभ्रातृकन्यकाम्

शिष्यां शिष्यस्य पत्नीं च भागिनेयस्य कामिनीम् ।
भ्रातुः पुत्रप्रियाश्चैवाऽत्यगम्या आह पद्मजः ॥ ७६ ॥

एताः कामेन कान्ता यो व्रजेद्धै मानवाधमः । स मातृगामीवेदेषु ब्रह्महत्याशतं व्रजेत्॥
अकर्माहोऽप्यसंस्पृश्यो लोकेवेदेषनिन्दितः । स यातिकुम्भीपाकेचमहापापीसुदुष्करे

करोत्यशुद्धां सन्ध्यां वा न सन्ध्यां वा करोति च ।
त्रिसन्ध्यं वर्जयेद्यो वा सन्ध्याहीनश्च स द्विजः ॥ ८२ ॥
वैष्णवञ्च तथा शैवं शाक्तं सौरञ्च गाणपम् ।
योऽहङ्कारान्नगृह्णाति मन्त्रं सोऽदीक्षितः स्मृतः ॥ ८३ ॥

प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् । तत्रनारायणः स्वामी गङ्गागर्भान्तरेवसेत्
तत्र नारायणक्षेत्रे मृतो याति हरेः पदम् । वाराणस्यां बदर्याञ्च गङ्गासागरसङ्गमे ॥
पुष्करे हरिहरक्षेत्रे प्रभासेकामरूस्थले । हरिद्वारे च केदारे तथामातृपुरेऽपि च ॥

सरस्वतीनदीतीरे पुण्ये वृन्दावने वने । गोदावर्यांश्च कौशिक्यांत्रिवेण्यांश्च हिमालये
एषुतीर्थेषु यो दानं प्रतिगृह्णाति कामतः । सचतीर्थप्रतिग्राही कुम्भीपाकेप्रयाति सः
शूद्रसेवी शूद्रयाजी ग्रामयाजीति कीर्तितः । तथादेवोपजीवीच देवलः परिकीर्तितः
शूद्रपाकोपजीवी यः सूपकार इतिस्मृतः । सन्ध्यापूजनहीनश्च प्रमत्तः पतितः स्मृतः
उक्तं सर्वं मयाभद्रे! लक्षणं वृषलीपतेः । एते महापातकिनः कुम्भीपाके प्रयान्ति ते

कुण्डान्यन्यानि ये यान्ति निबोध कथयामि ते ।

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे नारायण-
नारदसम्वादे सावित्र्युपाख्याने नानाकर्मविपाकफलवर्णनं नाम
चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

# पञ्चत्रिंशोऽध्यायः

## अगम्यागमनादिनानाकर्मविपाकफलवर्णनम्

### धर्मराज उवाच

देवसेवां विना साध्वि! न भवेत्कर्मकृन्तनम् । शुद्धकर्म शुद्धबीजं नरकश्च कुकर्मणा

पुंश्चल्यन्नञ्च यो भुङ्क्ते योऽस्यां गच्छेत्पतिव्रते !।
स द्विजः कालसूत्रञ्च मृतो याति सुदुर्गमम् ॥ २ ॥

शतवर्षं कालसूत्रे स्थिरीभूतो भवेद् ध्रुवम् । तत्रजन्मनिरोगीचततः शुद्धोभवद्द्विजः
पतिव्रता चैकपती द्वितीये कुलटा स्मृता । तृतीये धर्षिणीज्ञेया चतुर्थेपुंश्चलीत्यपि
वेश्या च पञ्चमे षष्ठे पुङ्गी चसप्तमेऽष्टमे । ततऊर्द्ध्वंमहावेश्यासाऽस्पृश्यासर्वजातिषु

यो द्विजः कुलटां गच्छेद्धर्षिणीं पुंश्चलीमपि ।
पुङ्गीं वेश्यां महावेश्या मत्स्योदे याति निश्चितम् ॥ ६ ॥
शताब्दं कुलटागामी धृष्टागामी चतुर्गुणम् ।
षड्गुणं पुंश्चलीगामी वेश्यागामी गुणाष्टकम् ॥ ७ ॥

पुङ्गीगामी दशगुणं वसेत्तत्र न संशयः। महावेश्याकामुकश्च ततो दशगुणं वसेत् ॥ तत्रैव यातनां भुङ्क्ते यमदूतेन ताडितः। तित्तिरिः कुलटागामीधृष्टागामी चवायसः

कोकिलः पुंश्चलीगामी वेश्यागामी वृकः स्मृतः।
पुङ्गीगामी सूकरश्च सप्तजन्मनि भारते ॥ १० ॥

महावेश्याप्रगामी च जायते शाल्मलीतरुः। योभुङ्क्ते ज्ञानहीनश्चग्रहणेचन्द्रसूर्ययोः अरुन्तुदं स यात्येवाप्यन्नमानाब्दमेव च। ततो भवेन्मानवश्चाप्युदरे रोगपीडितः ॥

गुल्मयुक्तश्च काणश्च दन्तहीनस्ततः शुचिः।
वाक्प्रदत्तां स्वकन्याञ्च योऽन्यस्मै प्रददाति च ॥ १३ ॥
स वसेत्पांसुकुण्डे च तद्भोजी शतवत्सरम्।
तद्द्रव्यहारी यः साध्वि पांसुवेष्टे शताब्दकम् ॥ १४ ॥

निवसेच्छरशय्यायां मम दूतेन ताडितः। भक्त्या न पूजयेद्विप्रः शिवलिङ्गञ्चपार्थिवम् स यातिशूलिनः पापाच्छूलप्रोतं सुदारुणम्। स्थित्वाशताब्दंतत्रैवश्वापदःसप्तजन्मसु ततो भवेद्देवलश्च सप्तजन्म ततः शुचिः। करोति कुण्ठितं विप्रं यद्भिया कम्पतेद्विजः प्रकम्पेन वसेत्सोऽपि विप्रलोमाब्दमेव च। प्रकोपवदनाकोपात्स्वामिनंयाचपश्यति कटूक्तिं प्रवदति सोल्मुकं सम्प्रयातिहि। उल्कांददातितद्वक्त्रे सततं मम किङ्करः दण्डेन ताडयेन्मूर्ध्नि तल्लोमाब्दप्रमाणकम्। ततोभवेन्मानवी च विधवासप्तजन्मसु साभुक्त्वाचैववैधव्यंव्याधियुक्तातत:शुचिः। याब्राह्मणीशूद्रभोग्याचान्धकूपेप्रयातिसा तप्तशौचोदके ध्वान्ते तदाहारा दिवानिशम्। निवसेदतिसन्तप्ता मम दूतेन ताडिता शौचोदके निमग्ना सा यावदिन्द्राश्चतुर्दश। काकीजन्मसहस्राणि शतजन्मानिसूकरी शृगाली शतजन्मानि शतजन्मानि कुक्कुटी। पारावती सप्तजन्म वानरी सप्तजन्मसु ततोभवेत्सा चाण्डालीसर्वभोग्या च भारते। ततो भवेच्चरजकीयक्ष्मग्रस्तात्रपुंश्चली ततः कुष्ठयुता तैलकारी शुद्धा भवेत्ततः। निवसेद्वेधने वेश्या पुङ्गी च दण्डताडने जलरन्ध्रे वसेद्वेश्या कुलटा देहचूर्णके। स्वैरिणी दलने चैव धृष्टा च शोषणे तथा निवसेद्यातनायुक्ता मम दूतेन ताडिता। विण्मूत्रभक्षा सततं यावन्मन्वन्तरं सति

तततो भवेद्विट्कृमिश्च लक्षवर्षं ततः शुचिः ।
ब्राह्मणो ब्राह्मणीं गच्छेत्क्षत्रियां वाऽपि क्षत्रियः ॥ २६ ॥

वैश्यो वैश्याञ्च शूद्रां वा शूद्रश्चाऽपि व्रजेद्यदि । सवर्णपरदारैश्च कषायं यान्ति ते जनाः
भुक्त्वा कषायतप्तोदं निवसेद्वा दशाब्दकम् । ततो विप्रो भवेच्छुद्धस्ततो वैश्यक्षत्रियादयः

योषितश्चापि शुद्ध्यन्तीत्येवमाह पितामहः ।
क्षत्रियो ब्राह्मणीं गच्छेद्वैश्यो वाऽपि पतिव्रते ॥ ३२ ॥

मातृगामी भवेत्सोऽपि शूर्पे च नरके वसेत् । शूर्पाकारैश्च कृमिभिर्ब्राह्मण्या सह भक्षितः
प्रतप्तमूत्रभोजी च मम दूतेन ताडितः । तत्रैव यातनां भुङ्क्ते यावदिन्द्राश्चतुर्दश
सप्तजन्म वराहश्च छागलश्च ततः शुचिः । करे धृत्वा तु तुलसीं प्रतिज्ञां यो न पालयेत्
मिथ्या वा शपथं कुर्यात्स च ज्वालामुखं व्रजेत् । गङ्गातोयं करे कृत्वा प्रतिज्ञां यो न पालयेत्
शिलां वा देवप्रतिमां स च ज्वालामुखं व्रजेत् । दत्त्वा दक्षिणहस्तञ्च प्रतिज्ञां यो न पालयेत्

स्थित्वा देवगृहे वापि स च ज्वालामुखं व्रजेत् ।
अस्पृश्य ब्राह्मणं गाञ्च ज्वालावह्निं व्रजेद् द्विजः ॥ ३८ ॥

न पालयेत्प्रतिज्ञाञ्च स च ज्वालामुखं व्रजेत् । मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः
मिथ्यासाक्ष्यप्रदश्चैव स च ज्वालामुखं व्रजेत् । एते तत्र वसन्त्येव यावदिन्द्राश्चतुर्दश
तथाङ्गारप्रदग्धाश्च मम दूतेन ताडिताः । चाण्डालस्तुलसीं स्पृष्ट्वा सप्तजन्म ततः शुचिः
म्लेच्छो गङ्गाजलस्पर्शी पञ्चजन्म ततः शुचिः । शिलास्पर्शी विट्कृमिश्च सप्तजन्मसु सुन्दरि
अर्चास्पर्शी ब्रह्मकृमिः सप्तजन्म ततः शुचिः । पक्षहस्तप्रदाता च सर्पश्च सप्तजन्मसु
ततो भवेद्ब्रह्महीनो मानवश्च ततः शुचिः । मिथ्यावादी देवगृहे देवलः सप्तजन्मसु
विप्रादिस्पर्शकारी च व्याघ्रजातिर्भवेद् ध्रुवम् । ततो भवेच्च मूकः स बधिरश्च त्रिजन्मनि
भार्याहीनो बन्धुहीनो वंशहीनस्ततः शुचिः । मित्रद्रोही च नकुलः कृतघ्नश्चाऽपि गण्डकः
विश्वासघाती व्याघ्रश्च सप्तजन्मसु भारते । मिथ्यासाक्षी च वक्तव्ये मण्डूकः सप्तजन्मसु
पूर्वान्सप्त परान्सप्त पुरुषान्हन्ति चात्मनः । नित्यक्रियाविहीनश्च जडत्वेन युतो द्विजः
यस्याऽनास्था वेदवाक्ये मन्दं हसति सन्ततम् । व्रतोपवासहीनश्च सद्वाक्यपरनिन्दकः

धूम्रान्धे च वसेत्सोऽपिशताब्दंधूम्रभक्षकः । जलजन्तुर्भवेत्सोऽपिशतजन्मक्रमेणच
ततो नानाप्रकारश्च मत्स्यजातिस्ततः शुचिः । यः करोत्युपहासञ्चदेवब्राह्मणयोर्धने

पातयित्वा स पुरुषान्दशपूर्वान्दशापरान् ।

सोऽयं याति च धूम्रान्धं धूमध्वान्तसमन्वितम् ॥ ५२ ॥

धूम्रक्लिष्टो धूम्रभोजी वसेत्तत्र चतुर्गुणम् । ततो मूषकजातिश्च सप्तजन्मसु भारते
ततो नानाविधाः पक्षिजातयः कृमिजातिभिः । ततोनानाविधावृक्षाःपशवश्चततोनरः
विप्रोदेवलजीवीचवैद्यजीवी चिकित्सकः । लाक्षालोहादिव्यापारीरसादिविक्रयीचयः
स याति नागवेष्टश्च नागैर्वेष्टितमेवच । वसेत्स लोममानाब्दं तत्रैव नागपाशितः
ततो नानाविधाः पक्षिजातयश्च ततो नरः । ततो भवेत्स गणको वैद्यश्च सप्तजन्मसु
गोपश्च कर्मकारश्च रङ्गकारस्ततः शुचिः । प्रसिद्धानि चकुण्डानिकथितानिपतिव्रते
अन्यानिचाप्रसिद्धानिक्षुद्राणिसन्तितत्रवै । सन्तिपातकिनस्तेषुस्वकर्मफलभोगिनः

भ्रमन्ति नानायोनिश्च किं भूयः श्रोतुमिच्छसि ।

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्या संहितायां नवमस्कन्धे
नानाकर्मविपाकफलकथनं नाम पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

# षट्त्रिंशोऽध्यायः

## सकर्मक्लेशनिस्तारोपायभूतपञ्चदेवपूजावर्णनम्

### सावित्र्युवाच

धर्मराज! महाभाग! वेदवेदाङ्गपारग !। नानापुराणेतिहासे यत्सारं तत्प्रदर्शय ॥ १ ॥
सर्वेषु सारभूतं यत्सर्वेष्टं सर्वसम्मतम् । कर्मच्छेदबीजरूपं प्रशस्तं सुखदं नृणाम्
सर्वप्रदं च सर्वेषां सर्वमङ्गलकारणम् । भयं दुःखं न पश्यन्तियेन वै सर्वमानवाः ॥३
कुण्डानि ते न पश्यन्ति तेषुनैव पतन्ति च । न भवेद्येनजन्मादितत्कर्मवदसाम्प्रतम्

किमाकाराणि कुण्डानि तानि वा निर्मितानिव । केचकेनैवरूपेणतत्रतिष्ठन्तिपापिनः
स्वदेहे भस्मसाद्भूते यातिलोकान्तरं नरः । केन देहेन वा भोगं करोतिचशुभाशुभम्

सुचिरं क्लेशभोगेन कथं देहो न नश्यति ।
देहो वा किं विधो ब्रह्मंस्तन्मे व्याख्यातुमर्हसि ॥ ७ ॥

नारायण उवाच

सावित्रीवचनं श्रुत्वा धर्मराजोहरिं स्मरन् । कथांकथितुमारेभेकर्मबन्धनिकृन्तनीम्

धर्मराज उवाच

वत्से! चतुर्षु वेदेषु धर्मेषु संहितासु च । पुराणेष्वितिहासेषु पाञ्चरात्रादिकेषु च ॥
अन्येषु धर्मशास्त्रेषु वेदाङ्गेषु च सुव्रते !। सर्वेष्टं सारभूतञ्च पञ्चदेवानुमेवनम् ॥१०॥
जन्ममृत्युजराव्याधिशोकसन्तापनाशनम् । सर्वमङ्गलरूपञ्च परमानन्दकारणम् ॥
कारणं सर्वसिद्धीनां नरकार्णवतारणम् । भक्तिवृक्षाङ्कुरकरं कर्मवृक्षनिकृन्तनम् ॥

विमोक्षसोपानमिदमविनाशपदं स्मृतम् ।
सालोक्यसार्ष्टिसारूप्यसामीप्यादिप्रदं शुभम् ॥ १३ ॥

कुण्डानि यमदूतैश्च रक्षितानि सदा शुभे !। नहिपश्यन्तिस्वप्नेचपञ्चदेवार्चका नराः
देवीभक्तिविहीनायेतेपश्यन्ति ममालयम् । यान्तिये हरितीर्थम्वाश्रयन्तिहरिवासरम्
प्रणमन्ति हरिं नित्यं हर्यर्चां कलयन्ति च । नयान्तितेऽपिघोरांसममसंयमिनींपुरीम्

त्रिसन्धिपूताविप्राश्च शुद्धाचारसमन्विताः ।
निवृत्तिं नैव लप्स्यन्ति देवीसेवां विना नराः ॥ १७ ॥

स्वधर्मनिरताचाराःस्वधर्मनिरतास्तथा । गच्छन्तो मृत्युलोकञ्चदुर्दर्शाममकिङ्कराः
भीताः शिवोपासकेभ्योवैनतेयादिवोरगाः । स्वदूतंपाशहस्तंचगच्छन्तंवारयाम्यहम्
यास्यन्ति ते च सर्वत्र हरिदासाश्रयं विना । कृष्णमन्त्रोपासकाश्चवैनतेयादिवोरगाः
देवीमन्त्रोपासकानां नाम्नाञ्चैव निकृन्तनम् । करोतिनखलेखन्याचित्रगुप्तश्चभीतवत्
मधुपर्कादिकं तेषां कुरुते च पुनः पुनः । विलङ्घ्यब्रह्मलोकञ्चलोकंगच्छन्तिते सति
दुरितानि च नश्यन्ति येषां संस्पर्शमात्रतः । ते महाभाग्यवन्तोहिसहस्रकुलपावनाः

यथा च प्रज्वलद्वह्नौ शुष्काणि च तृणानि च ।
प्राप्नोति मोहःसम्मोहं तांश्च दृष्ट्वा च भीतवत् ॥ २४ ॥
कामश्च कामिनं यातिलोभक्रोधौततःसति । मृत्युःप्रलीयतेरोगोजराशोकोभयंतथा
कालः शुभाशुभं कर्म हर्षोभोगस्तथैव च । ये येनयान्तितांपीडांकथितास्तेमयासति
शृणुदेहविवरणं कथयामि यथागमम् । पृथिवीवायुराकाशं तेजस्तोयमितिस्फुटम्
देहिनां देहबीजं च स्रष्टृसृष्टिविधौपरम् । पृथिव्यादिपञ्चभूतैर्योदेहानिर्मितोभवेत्
स कृत्रिमो नश्वरश्च भस्मसाञ्च भवेदिह । बद्धोऽङ्गुष्ठप्रमाणश्चयोर्जीवः पुरुषः कृतः
बिभर्ति सूक्ष्मं देहं नं तद्रूपंभोगहेतवे । स देहो न भवेद्भस्म ज्वलदग्नौ ममालये ॥३०
जलेन नष्टो देही वा प्रहारे सुचिरंकृते । न शस्त्रेण नवाऽस्त्रेण सुतीक्ष्णकण्टके तथा
तप्तद्रवे तप्तलोहे तप्तपाषाण एव च । प्रतप्तप्रतिमाश्लेषे अत्यूर्ध्वपतनेऽपि च ॥ ३२ ॥
न दग्धो न च भग्नःसभुङ्क्ते सन्तापमेव च । कथितोदेहवृत्तान्तः कारणञ्चयथागमम्
कुण्डानां लक्षणं सर्वं बोधाय कथयामि ते ॥ ३४ ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे
नारायणनारदसम्वादे देवपूजनात्सर्वारिष्टनिवृत्तिवर्णनंनाम
षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

## सप्तत्रिंशोऽध्यायः

### कुण्डानाम्वर्णनम्

धर्मराज उवाच

पूर्णेन्दुमण्डलाकारं सर्वं कुण्डञ्चवर्तुलम् । निम्नं पाषाणभेदैश्च पाचितम्बहुभिःसति
न नश्वरं चाऽऽप्रलयं निर्मित चेश्वरेच्छया ।
क्लेशदं पातकानाञ्च नानारूपं तदालयम् ॥ २ ॥
ज्वलदङ्गाररूपञ्च शतहस्तशिखान्वितम् । परितः क्रोशमानञ्च वह्निकुण्डं प्रकीर्तितम्

महाशब्दं प्रकुर्वद्भिः पापिभिः परिपूरितम् । रक्षितं मम दूतैश्चताडितैश्चापि सन्ततम्
प्रतप्तोदकपूर्णञ्च हिंस्रजन्तुसमन्वितम् । महाघोरं काकुशब्दं प्रहारेण दृढेन च ॥ ५ ॥
क्रोशार्धमानं तद्दूतैस्ताडितैर्ममम पार्षदैः । तप्तक्षारोदकैः पूर्णं पुनःकाकैश्चसङ्कुलम् ॥
सङ्कुलं पापिभिश्चैव क्रोशमानम्भयानकम् । त्राहीति शब्दं कुर्वद्भिर्ममदूतैश्च ताडितैः
प्रचलद्भिरनाहारैः शुष्ककण्ठोष्ठतालुकैः । विड्भिरेव कृतम्पूर्णं क्रोशमानञ्चकुत्सितम्
अतिदुर्गन्धिसंसक्तं व्याप्तं पापिभिरन्वहम् । ताडितैर्मम दूतैश्च तदाहारैः सुदारुणैः
रक्षेति शब्दं कुर्वद्भिस्तत्कीटैरेव भक्षितैः । तप्तमूत्रद्रवैः पूर्णं मूत्रकीटैश्च सङ्कुलम् ॥

युक्तं महापातकिभिस्तत्कीटैर्भक्षितैः सदा ।
गव्यूतिमानं ध्वान्ताक्तं शब्दकृद्भिश्च सन्ततम् ॥ ११ ॥
मद्दूतैस्ताडितैर्घोरैः शुष्ककण्ठोष्ठतालुकैः ।
श्लेष्मपूर्णम्प्रशमितं तत्कीटैः पूरितं सदा ॥ १२ ॥

तद्भोजिभिःपापिभिश्चवेष्टितंवेष्टितैःसदा । क्रोशार्धं गरकुण्डञ्च गरभोजिभिरन्वितम्
गरकीटैर्भक्षितैश्च पापिभिः पूर्णमेव च । ताडितैर्मम दूतैश्च शब्दकृद्भिश्च कम्पितैः ॥
सर्पाकारैर्वज्रदंष्ट्रैः शुष्ककण्ठैः सुदारुणैः । नेत्रयोर्मलपूर्णञ्च क्रोशार्धंकीटसंयुतम् ॥
पापिभिः सङ्कुलं शश्वद्द्रवद्भिः कीटभक्षितैः । वसारसेन सम्पूर्णंक्रोशतुर्यं सुदुःसहम्
तद्भोजिभिः पातकिभिर्मम दूतैश्च ताडितैः । शुक्रकुण्डं क्रोशमितं शुक्रकीटैश्चसंयुतम्

पापिभिः सङ्कुलं शश्वद् द्रवद्भिः कीटभक्षितैः ।
दुर्गन्धि रक्तवर्णञ्च वापीमानंगभीरकम् ॥ १८ ॥

तद्भोजिभिःपापिभिश्चसङ्कुलंकीटभक्षितम् । पूर्णनेत्राश्रुभिस्तप्तं बहुपापिभिरन्वितम्
वापीतुर्यप्रमाणञ्च रुदद्भिः कीटभक्षितैः । नृणां गात्रमलैर्युक्तं तद्भक्षैः पापिभिर्युतम्
ताडितैर्मम दूतैश्च व्यग्रैश्च कीटभक्षितैः । कर्णविट्परिपूर्णञ्च तद्भक्षैः पापिभिर्वृतम्
वापीतुर्यप्रमाणञ्च ब्रुवद्भिः कीटभक्षितैः । मज्जापूर्णं नराणाञ्च महादुर्गन्धिसंयुतम् ॥
महापातकिभिर्युक्तं वापीतुर्यप्रमाणकम् । परिपूर्णं स्निग्धमांसैर्मम दूतैश्च ताडितैः ॥
पापिभिः सङ्कुलञ्चैववापीमानंभयानकैः । कन्याविक्रयिभिश्चैव तद्भक्ष्यैः कीटभक्षितैः

पाहीति शब्दं कुर्वद्भिस्त्रासितैश्च भयानकैः ।
वापीतुर्यप्रमाणञ्च नखादिकचतुष्टयम् ॥ २५ ॥

पापिभिः संयुतं शश्वन्मम दूतैश्चताडितैः । प्रतप्तताम्रकुण्डञ्चताम्रोपयुल्मुकान्वितम्
ताम्राणां प्रतिमालक्ष्यैः प्रतप्तैर्व्याप्तंसदा । प्रत्येकम्प्रतिमाश्लिष्टैरुदद्भिःपापिभिर्युतम्
गव्यूतिमानम्विस्तीर्णं मम दूतैश्च ताडितैः । प्रतप्तलोहधारञ्च ज्वलदङ्गारसंयुतम् ॥

लोहानाम्प्रतिमाश्लिष्टैः रुदद्भिः पापिभिर्युतम् ।
प्रत्येकम्प्रतिमाश्लिष्टैः शश्वत्प्रज्वलितैर्भिया ॥ २९ ॥

रक्षरक्षेति शब्दश्च कुर्वद्भिर्दूतताडितैः । महापातकिभिर्युक्तं द्विगव्यूतिप्रमाणकम् ॥

भयानकं ध्वान्तयुक्तं लोहकुण्डं प्रकीर्तितम् ।
चर्मकुण्डं तप्तसुराकुण्डं वाप्यर्धमेव च ॥ ३१ ॥

तद्भोजिपापिभिर्व्याप्तं ममदूतैश्चताडितैः । अतःशाल्मलिकुण्डञ्चवृक्षकण्टकशोभितम्
लक्षपौरुषमानञ्च क्रोशमानञ्च दुःखदम् । धनुर्मानैः कण्टकैश्च सुतीक्ष्णैःपरिवेष्टितम्
प्रत्येकं विद्धगात्रैश्च महापातकिभिर्युतम् । वृक्षाग्रान्निपतद्भिश्च ममदूतैश्च पातितैः
जलं देहीति शब्दश्चकुर्वद्भिःशुष्कतालुकैः । महाभियाऽतिव्यग्रैश्चदण्डैःसग्भग्नमस्तकैः
प्रचलद्भिर्यथा तप्ततैलजीविभिरेव च । विषोदैस्तक्षकाणाञ्च पूर्णञ्च क्रोशमानकम् ॥
तद्भक्षैः पापिभिर्युक्तंमम दूतैश्च ताडितैः । प्रतप्ततैलपूर्णञ्च कीटादिपरिवर्जितम् ॥
महापातकिभिर्युक्तं दग्धाङ्गारैश्च वेष्टितम् । काकुशब्दम्प्रकुर्वद्भिश्चलद्भिर्दूतपीडितैः

ध्वान्तयुक्तं क्रोशमानं क्लेशदञ्च भयानकम् ।
शूलाकारैः सुतीक्ष्णाग्रैर्लोहशस्त्रैश्च वेष्टितम् ॥ ३९ ॥

शस्त्रतल्पस्वरूपञ्च क्रोशतुर्यप्रमाणकम् । वेष्टितन्तत्पातकिभिः कुन्तविद्धैश्चवेष्टितैः
ताडितैर्मम दूतैश्च शुष्ककण्ठोष्ठतालुकैः । कीटैश्च शङ्कुप्रमितैः सर्पमानैर्भयङ्करैः ॥४१
तीक्ष्णदन्तैश्चविकृतैर्व्याप्तंध्वान्तयुतं सति । महापातकिभिर्युक्तं ममदूतैश्चताडितैः
द्विगव्यूतिप्रमाणञ्चपूयकुण्डं प्रचक्षते । तद्भक्ष्यैः प्राणिभिर्युक्तं मम दूतैश्चताडितैः
तालवृक्षप्रमाणैश्च सर्पकोटिभिरावृतम् । सर्पवेष्टितगात्रैश्च पापिभिः सर्पभक्षितैः ॥

सङ्कुलं शब्दकृद्भिश्च मम दूतैश्च ताडितैः। कुण्डत्रयं मशादीनां पूर्णञ्चमशकादिभिः ॥
सर्वं क्रोशार्धमानञ्च महापातकिभिर्युतम्। हस्तपादादिबद्धैश्च क्षतजौघेन लोहितैः
हाहेति शब्दं कुर्वद्भिस्ताडितैर्मम पार्षदैः। वज्रवृश्चिकयोःकुण्डंताभ्याञ्चपरिपूरितम्
वाप्यर्धं पापिभिर्युक्तं वज्रवृश्चिकदंशितैः। कुण्डत्रयं शरादीनां तैरेव परिपूरितम् ॥

तैर्विद्धैः पापिभिर्युक्तं वाप्यर्धं रक्तलोहितैः।
तप्ततोयोदकैः पूर्णं सध्वान्तं गोलकुण्डकम् ॥ ४९ ॥

कीटैःसङ्कुलमानैश्चभक्षितैःपापिभिर्युतम्। वाप्यर्धमानंभीतैश्च पापिभिःकीटभक्षितैः
रुदद्भिः क्रोशमानैश्च ममदूतैश्च ताडितैः। अतिदुर्गन्धिसंयुक्तं दुःखदं पापिनां सदा
दारुणैर्विकृताकारैर्भक्षितं पापिभिर्युतम्। वाप्यर्धं परिपूर्णञ्च जलस्थैर्नक्रकोटिभिः
विण्मूत्रश्लेष्मभक्षैश्चसंयुतंशतकोटिभिः। काकैश्चविकृताकारैर्भक्षितैःपापिभिर्युतम्

मन्थानकुण्डं बीजकुण्डं ताभ्यां पूर्णं धनुःशतम्।
भक्षितैः पापिभिर्युक्तं शब्दकृद्भिश्च सन्ततम् ॥ ५४ ॥

धनुः शतं जीवयुक्तं पापिभिः सङ्कुलं सदा। शब्दकृद्भिर्वज्रदंष्ट्रैः सान्द्रध्वान्तमयंपरम्
वापीद्विगुणमानञ्च तप्तप्रस्तरनिर्मितम्। ज्वलदङ्गारसदृशं चलद्भिः पापिभिर्युतम्
क्षुरधारोपमैस्तीक्ष्णैः पाषाणैर्निर्मितंपरम्। महापातकिभिर्युक्तंलालाकुण्डञ्चलोहितैः
क्रोशमात्रञ्च गम्भीरं ममदूतैश्चताडितैः। तप्ताञ्जनाचलाकारैः परिपूर्णं धनुःशतम् ॥
चलद्भिः पापिभिर्युक्तं ममदूतैश्च ताडितैः। पूर्णंचूर्णद्रवैः क्रोशमानंपापिभिरन्वितम्
तद्भोजिभिः प्रदग्धैश्च ममदूतैश्च ताडितैः। कुण्डंकुलालचक्रञ्च घूर्णमानं च सन्ततम्

सुतीक्ष्णं षोडशारञ्च चूर्णितैः पापिभिर्युतम्।
अतीव वक्रं निम्नं च द्विगव्यूतिप्रमाणकम् ॥ ६१ ॥

कन्दराकारनिर्माणं तप्तोदैश्च समन्वितम्। महापातकिभिर्युक्तं भक्षितैर्जलजन्तुभिः

ज्वलद्भिः शब्दकृद्भिश्च ध्वान्तयुक्तं भयानकम्।
कोटिभिर्विकृताकारैः कच्छपैश्च सुदारुणैः ॥ ६३ ॥
जलस्थैः संयुतं तैश्च भक्षितैः पापिभिर्युतम्।

ज्वाला कलापैस्तेजोभिर्निर्मितैः क्रोशमानकम् ॥ ६४ ॥

शब्दकृद्भिःपातकिभिःसंयुक्तंक्लेशदंसदा । क्रोशमानञ्चगम्भीरंतप्तभस्मभिरन्वितम्
शश्वज्ज्वलद्भिः संयुक्तं पापिभिर्भस्मभक्षितैः । तप्तपाषाणलोहानांसमूहैःपरिपूरितैः
पापिभिर्दग्धगात्रैश्चयुक्तश्चशुष्कतालुकैः । क्रोशमानंध्वान्तयुक्तंगम्भीरमतिदारुणम्
ताडितैश्च प्रदग्धैश्च दग्धकुण्डं प्रकीर्तितम् । अतीवोर्मियुतंतोयं प्रतप्तक्षारसंयुतम्
नाना प्रकारं विकृतैर्जलजन्तुभिरन्वितम् । द्विगव्यूतिप्रमाणञ्च गम्भीरं ध्वान्तसंयुतम्
तद्भक्ष्यैः पापिभिर्युक्त दंशितैजलजन्तुभिः । ज्वलद्भिःशब्दकृद्भिश्चनपश्यद्भिःपरस्परम
प्रतप्तसूर्चाकुण्डञ्च कीर्तितं चभयानकम् । असीवधारापत्रस्याऽप्युच्चैस्तालतरोरधः
क्रोशार्धमानं कुण्डञ्च पतत्पत्रसमन्वितम् । पापिना रक्तपूर्णञ्च वृक्षाग्रात्पतताध्रुवम्
परित्राहीतिशब्दञ्च कुर्वतामस्मतामपि । गम्भीरं ध्वान्तयुक्तञ्च रक्तकीटसमन्वितम्
तदसीपत्रकुण्डञ्च कीर्तितं च भयानकम् । धनुः शतप्रमाणञ्च क्षुरधारास्त्रसंयुतम् ॥
पापिनां रक्तपूर्णञ्च क्षुरधारं भयानकम् । सूचीमुखास्त्रसंयुक्तं पापिरक्तौघपूरितम् ॥

पञ्चाशद्धनुरायामं क्लेशदञ्च सूचीमुखम् ।
कस्यचिज्जन्तुभेदस्य गोकाख्यस्य मुखाकृति ॥ ७६ ॥

कूपरूपं गभीरञ्च धनुर्विंशत्प्रमाणकम् । महापातकिनां चैव महाक्लेशप्रदं परम् ॥

तत्कीटभक्षितानां च नम्रास्यानां च सन्ततम् ।
कुण्डं नक्रमुखाकारं धनुःषोडशमानकम् ॥ ७८ ॥

गम्भीरं कूपरूपञ्च पापिनां सङ्कुलं सदा । धनुःशतप्रमाणञ्च कीर्तित गजदंशनम् ॥

धनुस्त्रिशतप्रमाणञ्च कुण्डञ्च गोमुखाकृति ।
पापिनां क्लेशदं शश्वद्गोमुखं परिकीर्तितम् ॥ ८० ॥
कालचक्रेण संयुक्तं भ्रममाणं भयानकम् ।
कुम्भाकारं ध्वान्तयुक्तं द्विगव्यूतिप्रमाणकम् ॥ ८१ ॥

लक्षपौरुषमानञ्च गम्भीरं विस्तृतं सति ।। कुत्रचित्तप्ततलञ्च ताम्रादि कुण्डमेव च

पापिनाञ्च प्रधानैश्च मूर्च्छितैः कृमिभिर्युतम् ।

परस्परञ्च नश्यद्भिः शब्दकृद्भिश्च सन्ततम् ॥ ८३ ॥
ताडितैर्यमदूतैश्च मुसलैर्मुद्गरैस्तथा । घूर्णमानैः पतद्भिश्च मूर्च्छितैश्च क्षणंक्षणम्
पातितैर्यमदूतैश्च रुदन्त्यस्मात्क्षणं पुनः । यावन्तः पापिनःसन्ति सर्वकुण्डेषुसुन्दरि
ततश्चतुर्गुणाः सन्ति कुम्भीपाके च दुःखदे । सुचिरंबध्यमानास्तेभोगदेहाननश्वराः
सर्वकुण्डं प्रधानञ्च कुम्भीपाकम्प्रकीर्तितम् । कालनिर्मितसूत्रेणनिबद्धा यत्रपापिनः
उत्थापिताश्च दूतैश्च क्षणमेव निमज्जिताः । निःश्वासबद्धाः सुचिरंतथामोहंगताःपुनः
अतीव क्लेशसंयुक्ता देयभोगेन सुन्दरि ।। प्रतप्ततोययुक्तञ्च कालसूत्रप्रकीर्तितम् ॥
अवटः कूपभेदश्च मत्स्योदः (दं) सउदाहृतः । प्रतप्ततोयपूर्णञ्च चतुर्विंशत्प्रमाणकम्
व्याप्तं महापातकिभिर्व्याद्ग्धाङ्गैश्चसन्ततम् । मद्दूतैस्ताडितैःशश्वदवटोदंप्रकीर्तितम्
यत्रोदस्पर्शमात्रेणसर्वव्याधिश्चपापिनाम् । भवेदकस्मात्पततांयस्मिन्कुण्डेधनुःशते
अरुन्तुदैर्भक्षितैस्तु प्राणिभिर्यच्च सङ्कुलम् । हाहेति शब्दंकुर्वद्भिस्तदेवारुन्तुदं विदुः
तप्तपांसुभिराकीर्णंज्वलद्भिस्तुषदग्धकैः । तद्भक्षैःपापिभिर्युक्तंपांसुभोजधनुःशतम्
पातमात्रेण पापी च पाशेन वेष्टितो भवेत् । क्रोशमात्रेण कुम्भश्च तत्पाशवेष्टनं विदुः
पातमात्रेण पापी च शूलेन वेष्टितो भवेत् । धनुर्विंशत्प्रमाणञ्चशूलप्रोतं प्रकीर्तितम्
पततां पापिनां यत्र भवेदेव प्रकम्पनम् । अतीव हिमतोयाक्तं क्रोशार्धञ्चप्रकम्पनम्
ददत्येव हि मे दूता यत्रोल्काःपापिनांमुखे । धनुर्विंशत्प्रमाणंतदुल्काभिश्चसुसङ्कुलम्
लक्षपौरुषमानञ्च गम्भीरं च धनुः शतम् । नानाप्रकारकृमिभिः संयुक्तं च भयानकम्
अत्यन्धकारव्याप्तञ्चकूपाकारञ्चवर्तुलम् । तद्भक्ष्यैःपापिभिर्युक्तंप्रणश्यद्भिःपरस्परम्
तप्ततोयप्रदग्धैश्च ज्वलद्भिः कीटभक्षितैः । ध्वान्तेन चक्षुषाचान्धैरन्धकूपःप्रकीर्तितः
नानाप्रकारशस्त्रौघैर्यत्र विद्धाश्च पापिनः । धनुर्विंशत्प्रमाणञ्चवेधनं तत्प्रकीर्तितम्
दण्डेन ताडिता यत्र ममदूतैश्च पापिनः । धनुःषोडशमानञ्च तत्कुण्डं दण्डताडनम्
निरुद्धाश्च महाजालैर्यथा मीनाश्चपापिनः । धनुर्विंशत्प्रमाणञ्चजालरन्ध्रंप्रकीर्तितम्
पततां पापिनां कुण्डेदेहश्चूर्णो भवेदिह । लोहबन्दीनिबद्धानां कोटिपौरुषमानकम्
गम्भीरध्वान्तसंयुक्तंधनुर्विंशत्प्रमाणकम् । मूर्च्छितानांजडानाञ्चदेहचूर्णंप्रकीर्तितम्

दलिताः पापिनो यत्र मम दूतैश्च ताडिताः। धनुःषोडशमानञ्चतत्कुण्डंदलनंस्मृतम्
पतनेनैव पापी च शुष्ककण्ठोष्ठतालुकः। वालुकासु च तप्तासुधनुस्त्रिंशत्प्रमाणकम्
शतपौरुषमानञ्च गम्भीरं ध्वान्तसंयुतम्। शोषणं कुण्डमेतद्धि पापिनां परदुःखदम्
नानाचर्मकषायोदपरिपूर्णं धनुःशतम्। दुर्गन्धियुक्तं तद्भक्ष्यैः प्राणिभिः संकुलंकषम्
शूर्पाकारमुखं कुण्डं धनुर्द्वादशमानकम्। तप्तलोहबालुकाभिः पूर्णं पातकिसंयुतम्
दुर्गन्धियुक्तं तद्भक्ष्यैः पापिभिःसङ्कुलंसति !। शूर्पाकारमुखंकुण्डंधनुर्द्वादशमात्रकम्

प्रतप्तवालुकापूर्णं महापातकिभिर्युतम्।
अन्तरग्निशिखानाञ्च ज्वालाव्याप्तमुखं सदा॥ ११२॥

धनुर्विंशतिमात्रञ्च प्रमाणं यस्य सुन्दरि !। ज्वालाभिर्दग्धगात्रैश्चपापिभिर्व्याप्तमेवच
तन्महाक्लेशदंशश्वत्कुण्डंज्वालामुखंस्मृतम्। पातमात्राद्यत्रपापीमूर्च्छितोचैनरोभवेत्
तप्तेष्टकाभ्यन्तरितंवाप्यधंजिह्मकुण्डकम्। धूम्रान्धकारसंयुक्तं धूम्रान्धैःपापिभिर्युतम्

धनुः शतं श्वासरन्ध्रैर्धूम्रान्धं परिकीर्तितम्।
पातमात्राद्यत्र पापी नागैश्च वेष्टितो भवेत्॥ ११६॥

धनुःशतं नागपूर्णं तन्नागैर्वेष्टितं भवेत्। षडशीति च कुण्डानिमयोक्तानि निशामय
लक्षणं चाऽपि तेषाञ्च किं भूयः श्रोतुमिच्छसि॥ ११८॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे
नारायणनारदसम्वादे सावित्र्युपाख्याने नानानरककुण्डानाम्वर्णनंनाम
सप्तत्रिंशोऽध्यायः॥३७॥

---

# अष्टत्रिंशोऽध्यायः

## देवीभक्तिमहिमवर्णनम्

सावित्र्युवाच

देवीभक्तिं देहि मह्यं साराणां चैव सारकम् । पुंसां मुक्तिद्वारबीजं नरकार्णवतारकम्
कारणं मुक्तिसाराणां सर्वाशुभविनाशनम् । दारकं कर्मवृक्षाणां कृतपापौघहारणम्
मुक्तिश्च कतिधाऽप्यस्ति किम्वा तासाञ्च लक्षणम् ।
देवीभक्तिं भक्तिभेदं निषेकस्याऽपि खण्डनम् ॥ ३ ॥
तत्त्वज्ञानविहीना च स्त्रीजातिर्विधिनिर्मिता । किञ्चिज्ज्ञानं सारभूतं वदवेदविदाम्वर
सर्वं दानञ्च यज्ञश्च तीर्थस्नानं व्रतं तपः । अज्ञानिज्ञानदानस्य कलांनार्हन्तिषोडशीम्
पितुः शतगुणा माता गौरवेचेतिनिश्चितम् । मातुः शतगुणः पूज्योज्ञानदातागुरुःप्रभो

धर्मराज उवाच

पूर्वं सर्वो वरो दत्तो यस्तेमनसिवाञ्छितः । अधुनाशक्तिभक्तिस्तेवत्सेभवतुमद्वरात्
श्रोतुमिच्छसि कल्याणि! श्रीदेवीगुणकीर्तनम् ।
वक्तॄणां पृच्छकानाञ्च श्रोतॄणां कुलतारणम् ॥ ८ ॥
शेषो वक्त्रसहस्रेण नहियद्वक्तुमीश्वरः । मृत्युञ्जयो न क्षमश्च वक्तुं पञ्चमुखेन च ॥
धाता चतुर्णां वेदानां विधाता जगतामपि । ब्रह्मा चतुर्मुखेनैवनाऽलंविष्णुश्चसर्ववित्
कार्त्तिकेयः षण्मुखेन नाऽपिवक्तुमलं ध्रुवम् । नगणेशःसमर्थश्चयोगीन्द्राणांगुरोर्गुरुः
सारभूताश्चशास्त्राणां वेदाश्चत्वार एव च । कलामात्रं यद्गुणानांनविदन्तिबुधाश्चये
सरस्वती जडीभूता नाऽलं तद्गुणवर्णने । सनत्कुमारो धर्मश्च सनन्दश्च सनातनः
सनकःकपिलःसूर्यो येऽन्येचब्रह्मणःसुताः । विचक्षणानयद्वक्तुंकिञ्चाऽन्ये जडबुद्धयः
नयद्वक्तुं क्षमासिद्धामुनीन्द्रायोगिनस्तथा । के चाऽन्येचवयंकेवा श्रीदेव्यागुणवर्णने
ध्यायन्ते यत्पदाम्भोजं ब्रह्मविष्णुशिवादयः ।

अतिसाध्यं स्वभक्तानां तदन्येषां सुदुर्लभम् ॥ १६ ॥
कश्चित्किञ्चिद्विजानाति तद्गुणोत्कीर्तनं शुभम् ।
अतिरिक्तं विजानाति ब्रह्माब्रह्मविशारदः ॥ १७ ॥

ततोऽतिरिक्तं जानातिगणेशोज्ञानिनांगुरुः । सर्वाऽतिरिक्तंजानातिसर्वज्ञःशम्भुरेवसः
तस्मै दत्तं पुरा ज्ञानं कृष्णेन परमात्मना । अतीव निर्जनेऽरण्येगोलोकं रासमण्डले
तत्रैवकथितंकिञ्चित्तद्गुणोत्कीर्तनंशुभम् । धर्मश्चकथयामासशिवलोकेशिवःस्वयम्
धर्मस्तु कथयामास भास्वतेपृच्छतेतथा । यमाराध्यमत्पिताऽपिसम्प्रापतपसासति
पूर्वं स्वं विषयं चाऽहं नगृह्णामि प्रयत्नतः । वैराग्ययुक्तस्तपसेगन्तुमिच्छामिसुव्रते
तदा मां कथयामास पितातद्गुणकीर्तनम् । यथागमंतद्वदामिनिबोधाऽतीवदुर्गमम्
तद्गुणं सानजानातितदन्यस्यचकाकथा । यथाऽऽकाशोनजानातिस्वान्तमेववरानने
सर्वात्मा सर्वभगवान्सर्वकारणकारणः । सर्वेश्वरश्च सर्वाद्यः सर्ववित्परिपालकः
नित्यरूपी नित्यदेही नित्यानन्दोनिराकृतिः । निरङ्कुशोनिराशङ्कोनिर्गुणश्चनिरामयः
निर्लिप्तः सर्वसाक्षीचसर्वाधारः परात्परः । मायाविशिष्टप्रकृतिस्तद्विकाराश्चप्राकृताः

स्वयं पुमांश्च प्रकृतिस्तावभिन्नौ परस्परम् ।
यथा वह्नेस्तस्य शक्तिर्नभिन्नाऽस्त्येव कुत्रचित् ॥ २८ ॥

सेयंशक्तिर्महामाया सच्चिदानन्दरूपिणी । रूपंबिभर्त्यरूपा च भक्तानुग्रहहेतवे ॥
गोपालसुन्दरीरूपं प्रथमं सा ससर्ज ह । अतीवकमनीयञ्च सुन्दरं सुमनोहरम् ॥
नवीननीरदश्यामं किशोरं गोपवेषकम् । कन्दर्पकोटिलावण्यं लीलाधाममनोहरम् ॥
शरन्मध्याह्नपद्मानां शोभामोचनलोचनम् । शरत्पार्वणकोटीन्दुशोभाप्रच्छादनाननम्
अमूल्यरत्ननिर्माणनानाभूषणभूषितम् । सस्मितं शोभितं शश्वदमूल्यपीतवाससा
परब्रह्मस्वरूपश्च ज्वलन्तं ब्रह्मतेजसा । सुखदृश्यञ्चशान्तञ्च राधाकान्तमनन्तकम् ॥

गोपीभिर्वीक्ष्यमाणञ्च सस्मिताभिश्च सन्ततम् ।
रासमण्डलमध्यस्थं रत्नसिंहासनस्थितम् ॥ ३५ ॥
वंशीं क्वणन्तं द्विभुजं वनमालाविभूषितम् ।

कौस्तुभेन्द्रमणीन्द्रेण शश्वद्वक्षःस्थलोज्ज्वलम् ॥ ३६ ॥
कुङ्कुमागुरुकस्तूरी चन्दनार्चितविग्रहम् । चारुचम्पकमालाक्तंमालतीमाल्यमण्डितम्
चारुचन्द्रकशोभाढ्य चूडावङ्क्रिमराजितम्। एवंभूतञ्चध्यायन्तिभक्ताभक्तिपरिप्लुताः
यद्भयाज्जगतां धाता विधत्ते सृष्टिमेव च । कर्मानुसाराल्लिखितंकरोतिसर्वकर्मणाम्
तपसां फलदाता च कर्मणाञ्च यदाज्ञया । विष्णुःपाताचसर्वेषांयद्भयात्पातिसन्ततम्
कालाग्निरुद्रः संहर्त्ता सर्वविश्वेषुयद्भयात् । शिवोमृत्युञ्जयश्चैवज्ञानिनांचगुरोर्गुरुः
यज्ज्ञानाज्ज्ञानवानस्ति योगीशो ज्ञानवित्प्रभुः । परमानन्दयुक्तश्चभक्तिवैराग्यसंयुतः
यद्भयाद्वाति पवनः प्रवरः शीघ्रगामिनाम् । तपनश्चप्रतपतियद्भयात्सन्ततं सति!
यदाज्ञया वर्षतीन्द्रो मृत्युश्चरति जन्तुषु । यदाज्ञयादहेद्वह्निर्जलमेवं सुशीतलम् ॥
दिशोरक्षन्ति दिक्पाला महाभीता यदाज्ञया । भ्रमन्तिराशिचक्राणिग्रहाश्चयद्भयेनच

भयात्फलन्ति वृक्षाश्च पुष्पन्त्यपि च यद्भयात् ।
यदाज्ञां तु पुरस्कृत्य कालः काले हरेद् भयात् ॥ ४६ ॥

तथा जलस्थलस्थाश्च नजीवन्ति यदाज्ञया । अकालेनाहरेद्विद्धंरणेषु चिपमेषु च
धत्तेवायुस्तोयराशिं तोयंकूर्मं तदाज्ञया । कूर्मोऽनन्तं सचक्षोणींसमुद्रान्सात्रपर्वतान्
सर्वाश्चैव क्षमारूपा नानारत्नं बिभर्ति या । यतःसर्वाणिभूतानिस्थीयन्तेहन्तितत्रहि
इन्द्रायुश्चैव दिव्यानां युगानामेकसप्ततिः । अष्टाविंशेशक्रपातेब्रह्मणश्चदिवानिशम्

एवं त्रिंशद्दिनैर्मासो द्वाभ्यामाभ्यामृतुःस्मृतः ।
ऋतुभिः षड्भिरेवाब्दं ब्रह्मणो वै वयः स्मृतम् ॥ ५१ ॥

ब्रह्मणश्च निपाते च चक्षुरुन्मीलनं हरेः । चक्षुरुन्मीलने तस्य लयं प्राकृतिकं विदुः
प्रलये प्राकृतेसर्वे देवाद्याश्च चराचराः । लीनाधाताविधाता च श्रीकृष्णनाभिपङ्कजे
विष्णुः क्षीरोदशायी चवैकुण्ठेयश्चतुर्भुजः । विलीनावामपार्श्वेचकृष्णस्यपरमात्मनः

यस्य ज्ञाने शिवो लीनो ज्ञानाधीशः सनातनः ।
दुर्गायां विष्णुमायायां विलीनाः सर्वशक्तयः ॥ ५५ ॥
सा च कृष्णस्य बुद्धौ च बुद्ध्यधिष्ठातृदेवताः ।

नारायणांशः स्कन्दश्च लीनो वक्षसि तस्य च ॥ ५६ ॥

श्रीकृष्णांशश्च तद्बाहौ देवाधीशो गणेश्वरः। पद्मांशाश्चैवपद्मायांसाराधायांचसुव्रते

गोप्यश्चाऽपि च तस्यां च सर्वाश्च देवयोषितः।

कृष्णप्राणाधिदेवी सा तस्य प्राणेषु संस्थिता ॥ ५८ ॥

सावित्री च सरस्वत्यां वेदाः शास्त्राणि यानि च।

स्थिता वाणी च जिह्वायां तस्यैव परमात्मनः ॥ ५९ ॥

गोलोकस्थचगोपाश्चविलीनास्तस्यलोमसु। तत्प्राणेषुचसर्वेषांप्राणावाताहुताशनाः जठराग्नौ विलीनाश्च जलं तद्रसनाग्रतः। वैष्णवाश्चरणाम्भोजे परमानन्दसंयुताः सारात्सारतराभक्ती रसपीयूषपायिनः। विराडंशाश्चमहतिलीनाकृष्णे महाविराट् यस्यैव लोमकूपेषु विश्वानि निखिलानि च। यस्य चक्षुषउन्मेषेप्राकृतःप्रलयोभवेत् चक्षुरुन्मीलनेसृष्टिर्यस्यैव पुनरेव सः। यावत्कालोनिमेषेण तावदुन्मीलनेन च ॥ ब्रह्मणश्च शताब्देन सृष्टेः सूत्रलयःपुनः। ब्रह्मसृष्टिलयानाञ्चसंख्या नास्त्येवसुव्रते!॥ यथाभूरजसांचैवसङ्ख्यानं नैव विद्यते। चक्षुर्निमेषेप्रलयोयस्यसर्वान्तरात्मनः॥ उन्मीलने पुनः सृष्टिर्भवेदेवेश्वरेच्छया। स कृष्णः प्रलये तस्यांप्रकृतौलीन एव हि एकैव च पराशक्तिर्निर्गुणः परमः पुमान्। सदेवेदमग्र आसीदिति वेदविदो विदुः मूलप्रकृतिरव्यक्ताऽप्यव्याकृतपदाभिधा। चिदभिन्नत्वमापन्ना प्रलये सैव तिष्ठति ॥

तद्गुणोत्कीर्तनं वक्तुं ब्रह्माण्डेषु च कः क्षमः।

मुक्तयश्च चतुर्वेदैर्निरुक्ताश्च चतुर्विधाः ॥ ७० ॥

तत्प्रधाना देवभक्तिर्मुक्तेरपि गरीयसी। सालोक्यदा भवेदेका तथासारूप्यदापरा

सामीप्यदाऽथ निर्वाणप्रदा मुक्तिश्चतुर्विधा।

भक्तास्ता नहि वाञ्छन्ति विना तत्सेवनं विभोः ॥ ७२ ॥

शिवत्वममरत्वञ्च ब्रह्मत्वं चावहेलया। जन्ममृत्युजराव्याध्याधिभयशोकादिकंधनम् दिव्यरूपधारणञ्च निर्वाणंमोक्षणंविदुः। मुक्तिश्चसेवारहिताभक्तिसेवाविवर्धिनी भक्तिमुक्त्योरयंभेदो निषेकखण्डनं शृणु। विदुर्बुधानिषेकञ्चभोगञ्चकृतकर्मणाम्

तत्खण्डनं च शुभदं श्रीविभोःसेवनंपरम् । तत्त्वज्ञानमिदंसाध्विस्थिरञ्चलोकवेदयोः

निर्विघ्नं शुभदं चोक्तं गच्छ वत्से! यथासुखम् ।

इत्युक्त्वा सूर्यपुत्रश्च जीवयित्वा च तत्पतिम् ॥ ७७ ॥

तस्यै शुभाशिषं दत्त्वा गमनंकर्तुमुद्यतः । दृष्ट्वा यमञ्च गच्छन्तं सा सावित्रीप्रणम्यच

रुरोद चरणौ धृत्वा साधुच्छेदेन दुःखिता । सावित्रीरोदनंश्रुत्वा यमश्चैवकृपानिधः

तामित्युवाच सन्तुष्टः स्वयं चैव रुरोद ह ।

धर्म उवाच

लक्षवर्षं सुखं भुक्त्वा पुण्यक्षेत्रे च भारते ॥ ८० ॥

अन्तेयास्यसि तल्लोकं यत्रदेवी विराजते । गत्वा च स्वगृहंभद्रे सावित्र्याश्चव्रतंकुरु

द्विसप्तवर्षपर्यन्तं नारीणां मोक्षकारणम् । ज्येष्ठशुक्लचतुर्दश्यांसावित्र्याश्चव्रतं शुभम्

शुक्लाऽष्टम्यां भाद्रपदे महालक्ष्म्या यथाव्रतम् । द्व्यष्टवर्षं व्रतंचैवप्रत्यादेयंशुचिस्मिते

करोति भक्त्या या नारी सा याति च विभोः पदम् ।

प्रति मङ्गलवारे च देवीं मङ्गलदायिनीम् ॥ ८४ ॥

प्रतिमासं शुक्लषष्ठ्यां षष्ठीं मङ्गलदायिनाम् ।

तथा चाऽऽषाढसङ्क्रान्त्यां मनसां सर्वसिद्धिदाम् ॥ ८५ ॥

राधां रासे च कार्त्तिक्यां कृष्णप्राणाधिकप्रियाम् ।

उपोष्य शुक्लाऽष्टम्याञ्च प्रतिमासं वरप्रदाम् ॥ ८६ ॥

विष्णुमायां भगवती दुर्गांदुर्गार्तिनाशिनीम् । प्रकृतिं जगदम्बाञ्चपतिपुत्रवतीषु च

पतिव्रतासु शुद्धासु यन्त्रेषु प्रतिमासु च । या नारी पूजयेद्भक्त्या धनसन्तानहेतवे

इह लोके सुखं भुक्त्वा यात्यन्ते श्रीविभोः पदम् ।

एवं देव्याविभूतिश्च पूजयेत्साधकोऽनिशम् ॥ ८६ ॥

सर्वकालं सर्वरूपा संसेव्या परमेश्वरी । नाऽतः परतरं किञ्चित्कृतकृत्यत्वदायकम् ॥

इत्युक्त्वा तां धर्मराजो जगाम निजमन्दिरम् ।

गृहीत्वा स्वामिनं सा च सावित्री च निजालयम् ॥ ६१ ॥

सावित्री सत्यवांश्चैवप्रययौच यथागमम् । अन्यांश्चकथयामासस्ववृत्तान्तंहिनारद
सावित्रीजनकः पुत्रान्सम्प्राप्तःक्रमेणच । श्वशुरश्चक्षुषी राज्यं सा च पुत्रान्वरेण च
लक्षवर्षं सुखं भुक्त्वा पुण्यक्षेत्रे च भारते । जगामस्वामिनासार्धंदेवीलोकंपतिव्रता
सवितुश्चाधिदेवी यामन्त्राधिष्ठातृदेवता । सावित्रीह्यपिवेदानांसावित्रीतेनकीर्तिता

इत्येवं कथितं वत्स ! सावित्र्याख्यानमुत्तमम् ।
जीवकर्मविपाकञ्च किं पुनः श्रोतुमिच्छसि ॥ ६६ ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे
नारायणनारदसम्वादे सावित्र्युपाख्यानवर्णनं नामाऽ-
ष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

## एकोनचत्वरिंशोऽध्यायः

### लक्ष्म्युपाख्यानवर्णनम्

नारद उवाच

श्रीःमूलप्रकृतेर्देव्या गायत्र्यास्तु निराकृते । सावित्रीयमसम्वादेयश्रतं वैनिर्मलं यशः

तद्गुणोत्कीर्तनं सत्यं मङ्गलानाञ्च मङ्गलम् ।
अधुना श्रोतुमिच्छामि लक्ष्म्युपाख्यानमीश्वर! ॥ २ ॥

केनाऽऽदौ पूजितासाऽपिकिम्भूताकेनवापुरा । तद्गुणोत्कीर्तनंमह्यंवदवेदविदाम्बर!

नारायण उवाच

सृष्टेरादौ पुरा ब्रह्मन्कृष्णस्य परमात्मनः । देवीवामांससम्भूता बभूव रासमण्डले ॥
अतीव सुन्दरी श्यामान्यग्रोधपरिमण्डिता । यथाद्वादशवर्षीयाशश्वत्सुस्थिरयौवना
श्वेतचम्पकवर्णाभा सुखदृश्या मनोहरा । शरत्पार्वणकोटीन्दुप्रभाप्रच्छादनानना ॥

शरन्मध्याह्नपद्मानां शोभामोचनलोचना । सा देवी द्विविधाभूता सहसैवेश्वरेच्छया स्वीयरूपेण वर्णेन तेजसा वयसा त्विषा । यशसावाससाकृत्याभूषणेन गुणेन च स्मितेन वीक्षणेनैवप्रेम्णावाऽनुनयेनच । तद्वामांसान्महालक्ष्मीर्दक्षिणांशाच्चराधिका राधाऽऽदौ वरयामास द्विभुजंचपरात्परम् । महालक्ष्मीश्चतत्पश्चाच्चकमेकमनायकम् कृष्णस्तद्गौरवेणैव द्विधारूपो बभूव ह । दक्षिणांसश्चद्विभुजोवामांसश्चचतुर्भुजः चतुर्भुजाय द्विभुजोमहालक्ष्मींददौपुरा । लक्ष्यतेदृश्यतेविश्वंस्निग्धदृष्ट्याययानिशम्

देवीभूता च महती महालक्ष्मीश्च सा स्मृता ।

राधाकान्तश्च द्विभुजो लक्ष्मीकान्तश्चतुर्भुजः ॥ १२ ॥

शुद्धसत्त्वस्वरूपाच गोपैर्गोपीभिरावृता । चतुर्भुजश्च वैकुण्ठं प्रययौ पद्मया सह ॥ सर्वांशेनसमौतौद्वौ कृष्णनारायणौ परौ । महालक्ष्मीश्चयोगेननानारूपाबभूव सा वैकुण्ठे च महालक्ष्मीः परिपूर्णतमा रमा । शुद्धसत्त्वस्वरूपा चसर्वसौभाग्यसंयुता

प्रेम्णा सा च प्रधाना च सर्वासु रमणीषु च ।

स्वर्गेषु स्वर्गलक्ष्मीश्च शक्रसम्पत्स्वरूपिणी ॥ १७ ॥

पाताले नागलक्ष्मीश्च राजलक्ष्मीश्चराजसु । गृहलक्ष्मीर्गृहेष्वेवगृहिणांचकलांशतः सम्पत्स्वरूपा गृहिणां सर्वमङ्गलमङ्गला । गवांप्रसूतिः सुरभिर्दक्षिणायज्ञकामिनी क्षीरोदसिन्धुकन्यासाश्रीरूपापद्मिनीषुच । शोभास्वरूपाचन्द्रे चसूर्यमण्डलमण्डिता विभूषणेषु रत्नेषु फलेषु च जलेषु च । नृपेषु नृपपत्नीषु दिव्यस्त्रीषु गृहेषु च ॥ सर्वसस्येषु वस्त्रेषु स्थानेषु संस्कृतेषु च । प्रतिमासु च देवानांमङ्गलेषु घटेषु च माणिक्येषु च मुक्तासु माल्येषु च मनोहरा । मणीन्द्रेषुच हीरेषु क्षीरेषुचन्दनेषुच वृक्षशाखासु रम्यासु नवमेघेषु वस्तुषु । वैकुण्ठेपूजिता साऽऽदौ देवी नारायणेन च द्वितीये ब्रह्मणाभक्त्या तृतीये शङ्करेणच । विष्णुनापूजिता सा च क्षीरोदेभारतेमुने स्वायम्भुवेन मनुना मानवेन्द्रैश्च सर्वतः । ऋषीन्द्रैश्च मुनीन्द्रैश्च सद्भिश्च गृहिभिर्भवे गन्धर्वैश्चैव नागाद्यैः पातालेषु च पूजिता । शुक्लाऽष्टम्यां भाद्रपदे कृतापूजाचब्रह्मणा भक्त्या च पक्षपर्यन्तं त्रिषु लोकेषु नारद !। चैत्रे पौषे च भाद्रेच पुण्ये मङ्गलवासरे

विष्णुना पूजिता सा च त्रिषु लोकेषु भक्तितः।
वर्षान्ते पौषसङ्क्रान्त्यां माघ्यामावाह्य मङ्गले ॥ २९ ॥
मनुस्तां पूजयामास सा भूता भुवनत्रये। पूजिता सा महेन्द्रेण मङ्गलेनैव मङ्गला ॥
केदारेणैव नीलेन सुबलेन नलेन च। ध्रुवेणोत्तानपादेन शक्रेण बलिना तथा ॥ ३१ ॥
कश्यपेन च दक्षेण कर्दमेन विवस्वता। प्रियव्रतेन चन्द्रेण कुबेरेणैव वायुना ॥ ३२ ॥
यमेन वह्निना चैव वरुणेनैव पूजिता। एवं सर्वत्र सर्वेषु पूजिता वन्दिता सदा ॥३३
सर्वैश्वर्याधिदेवी स सर्वसम्पत्स्वरूपिणी ॥ ३४ ॥
इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्त्र्यां संहितायां नवमस्कन्धे
लक्ष्म्युपाख्यानवर्णनं नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

## चत्वारिंशोऽध्यायः

### लक्ष्म्युत्पत्तिप्रसङ्गवर्णनम्

नारद उवाच

नारायणप्रिया सा च परावैकुण्ठवासिनी। वैकुण्ठाधिष्ठातृदेवी महालक्ष्मीःसनातनी
कथं बभूव सा देवी पृथिव्यां सिन्धुकन्यका।
पुरा केन स्तुताऽऽद्यौ सा तन्मे व्याख्यातुमर्हसि ॥ २ ॥

श्रीनारायण उवाच

पुरा दुर्वाससः शापाद्भ्रष्टश्रीश्च पुरन्दरः। बभूव देवसङ्घश्च मर्त्यलोके च नारद !
लक्ष्मीःस्वर्गादिकंत्यक्त्वारुष्टापरमदुःखिता। गत्वालीनाचवैकुण्ठेमहालक्ष्मीश्चनारद
तदाशोकाद्ययुः सर्वे दुःखिता ब्रह्मणःसभाम्। ब्रह्माणञ्च पुरस्कृत्य ययुर्वैकुण्ठमेव च
वैकुण्ठे शरणापन्ना देवा नारायणे परे। अतीव दैन्ययुक्ताश्च शुष्ककण्ठौष्ठतालुकाः ॥

तदा लक्ष्मीश्चकलयापुराणपुरुषाज्ञया। बभूव सिन्धुकन्या सा सर्वसम्पत्स्वरूपिणी
तथामथित्वाक्षीरोदंदेवादैत्यगणैः सह। सम्प्राप्ताश्च महालक्ष्मीं विष्णुस्ताश्चददर्शह
सुरादिभ्यो वरं दत्त्वा वनमालाञ्च विष्णवे। ददौ प्रसन्नवदना तुष्टा क्षीरोदशायिने
देवाश्चाऽप्यसुरग्रस्तं राज्यं प्रापुश्च नारद!। तां सम्पूज्य च सम्भूयसर्वत्रचनिरापदः

नारद उवाच

कथं शशाप दुर्वासा मुनिश्रेष्ठ! कदाचन। केन दोषेण वा ब्रह्मन्ब्रह्मिष्ठस्तत्त्ववित्पुरा
ममन्थुः केनरूपेण जलधिं ते सुरादयः। केन स्तोत्रेण वा देवी शक्रं साक्षाद्बभूवसा

को वा तयोश्च सम्वादो बभूव तद्वद प्रभो!।

श्रीनारायण उवाच

मधुपानप्रमत्तश्च त्रैलोक्याधिपतिः पुरा ॥ १३ ॥

क्रीडाञ्चकाररहसिरम्भयासहकामुकः। कृत्वा क्रीडांतया सार्धं कामुक्याहृतमानसः
तस्थौ तत्रमहारण्येकामोन्मथितमानसः। कैलासशिखरे यान्तं वैकुण्ठाद्दृषिसत्तमम्
दुर्वाससं ददर्शेन्द्रो ज्वलन्तं ब्रह्मतेजसा। ग्रीष्ममध्याह्नमार्तण्डसहस्रप्रभमीश्वरम् ॥
प्रतप्तकाञ्चनाकारं जटाभारमहोज्ज्वलम्। शुक्लयज्ञोपवीतञ्च चीरदण्डौ कमण्डलुम्
महोज्ज्वलञ्च तिलकं बिभ्रन्तंचेन्दुसन्निभम्। समन्वितं शिष्यलक्षैर्वेदवेदाङ्गपारगैः
दृष्ट्वा ननाम शिरसा सम्प्रमत्तःपुरन्दरः। शिष्यवर्गं तदा भक्त्या तुष्टावचमुदान्वितम्

मुनिना च सशिष्येण दत्तास्तस्मै शुभाशिषः।
विष्णुदत्तं पारिजातपुष्पञ्च सुमनोहरम् ॥ २० ॥

तज्जरारोगमृत्युघ्नंशोकघ्नंमोक्षकारकम्। शक्रःपुष्पंगृहीत्वा चप्रमत्तोराज्यसम्पदा
पुष्पं स न्यस्तयामासतदैवकरिमस्तके। हस्ती तत्स्पर्शमात्रेण रूपेण च गुणेन च

तेजसा वयसा कस्माद्विष्णुतुल्यो बभूवह।
त्यक्त्वा शक्रं गजेन्द्रश्च जगाम घोरकाननम् ॥ २३ ॥

न शशाक महेन्द्रस्तं रक्षितुं तेजसा मुने!। तत्पुष्पं त्यक्तवन्तञ्च दृष्ट्वा शक्रं मुनीश्वरः

तमुवाच महारुष्टः शशाप च रुषान्वितः।

मुनिरुवाच

अरे! श्रिया प्रमत्तस्त्वं कथं मामवमन्यसे ॥ २५ ॥

मद्दत्तपुष्पं दत्तञ्च गर्वेण करिमस्तके । विष्णोर्निवेदितञ्चैव नैवेद्यं वा फलं जलम् ॥

प्राप्तिमात्रेण भोक्तव्यं त्यागेन ब्रह्महा भवेत् । भ्रष्टश्रीर्भ्रष्टबुद्धिश्च पुत्रभ्रष्टो भवेत्तु सः

यस्त्यजेद्विष्णुनैवेद्यं भाग्येनोपस्थितं शुभम् ।

प्राप्तिमात्रेण यो भुङ्क्ते भक्तो विष्णुनिवेदितम् ॥ २८ ॥

पुंसां शतं समुद्धृत्य जीवन्मुक्तः स्वयं भवेत् ।

नैवेद्यं भोजनं कृत्वा नित्यं यः प्रणमेद्धरिम् ॥ २६ ॥

पूजयेत्स्तौति वा भक्त्या स विष्णुसदृशो भवेत् ।

तत्स्पर्शवायुना सद्यस्तीर्थौघश्च विशुध्यति ॥ ३० ॥

तत्पादरजसा मूढ! सद्यः पूता वसुन्धरा । पुंश्चल्यन्नमवीरान्नं शूद्रश्राद्धान्नमेव च

यद्धरेरनिवेद्यञ्च वृथा मांसस्य भक्षणम् । शिवलिङ्गप्रदानञ्च यद्दत्तं शूद्रयाजिना ॥

चिकित्सकद्विजान्नञ्च देवलान्नं तथैव च । कन्याविक्रयिणामन्नंयदन्नंयोनिर्जीविनाम्

उच्छिष्टान्नं पर्युषितं सर्वभक्षावशेषितम् । शूद्रापतिद्विजानाञ्च वृषवाहद्विजान्नकम्

अदीक्षितद्विजानाञ्च यदन्नं शवदाहिनाम् । अगम्यागामिनाञ्चैव द्विजानामन्नमेव च

मित्रद्रुहां कृतघ्नानामन्नं विश्वासघातिनाम् । मिथ्यासाक्ष्यप्रदान्नञ्च ब्राह्मणान्नंतथैवच

एते सर्वे विशुध्यन्ति विष्णोनैवेद्यभक्षणात् ।

श्वपचश्चेद् विष्णुसेवी वंशानां कोटिमुद्धरेत् ॥ ३७ ॥

हरेरभक्तो मनुजः स्वं च रक्षितुमक्षमः । अज्ञानाद्यदि गृह्णाति विष्णोर्निर्माल्यमेव च

सप्तजन्मार्जितात्पापान्मुच्यते नाऽत्र संशयः ।

ज्ञात्वा भक्त्या च गृह्णाति विष्णोर्नैवेद्यमेव च ॥ ३६ ॥

कोटिजन्मार्जितात्पापान्मुच्यतेनिश्चितंहरे!।यस्मात्संस्थापितंपुष्पंगर्वेणकरिमस्तके

तस्माद्युष्मान्परित्यज्य यातु लक्ष्मीर्हरेः पदम् ।

नारायणस्य भक्तोऽहं न बिभेमि सुराद्विधेः ॥ ४१ ॥

कालान्मृत्योर्जरातश्चकानन्यान्गणयामिच । किंकरिष्यतितेतातकश्यपश्चप्रजापतिः
बृहस्पतिर्गुरुश्चैव निःशङ्कस्य च मे हरे !। इदं पुष्पं यस्य मूर्ध्नि तस्यैवपूजनम्परम्

इति श्रुत्वा महेन्द्रश्च धृत्वा स चरणं मुनेः ।
उच्चै रुरोद शोकार्तस्तमुवाच भयाकुलः ॥ ४४ ॥

महेन्द्र उवाच

दत्तः समुचितःशापोमह्यंमायापहःप्रभो !। हृतां नयाचे सम्पत्तिं किञ्चिज्ज्ञानञ्चदेहिमे
ऐश्वर्यं विपदां बीजं ज्ञानप्रच्छन्नकारणम् । मुक्तिमार्गकुठारश्च भक्तेश्चव्यवधायकम्

मुनिरुवाच

जन्ममृत्युजराशोकरोगबीजाङ्कुरं परम् । सम्पत्तितिमिरान्धश्च मुक्तिमार्गंनपश्यति
सम्पन्मत्तो विमूढश्च सुरामत्तः सएवच । बान्धवैर्वेष्टितःसोऽपिबन्धत्वेनैव हे हरे!
सम्पत्तिमदमत्तश्च विषयान्धश्च विह्वलः । महाकामी राजसिकःसत्त्वमार्गं नपश्यति

द्विविधो विषयान्धश्च राजसस्तामसः स्मृतः ।
अशास्त्रज्ञस्तामसश्च शास्त्रज्ञो राजसः स्मृतः ॥ ५० ॥

शास्त्रं च द्विविधं मार्गं दर्शयेत्सुरपुङ्गव !। प्रवृत्तिबीजमेकञ्च निवृत्तेः कारणं परम् ॥
चरन्ति जीविनश्चादौ प्रवृत्तेर्दुःखवर्त्मनि । स्वच्छन्दंचप्रसन्नंचनिर्विरोधंचसन्ततम्
आयाति मधुनोलोभात्क्लेशेनसुखमानितः । परिणामेनाशबीजेजन्ममृत्युजराकरे ॥
अनेकजन्मपर्यन्तं कृत्वाच भ्रमणं मुदा । स्वकर्मविहितायाञ्च नानायोन्यां क्रमेण च
ततश्चेशानुग्रहाच्च सत्सङ्गं लभते चसः । सहस्रेषु शतेष्वेकोभवाब्धिपारकारणम् ॥
साधुस्तत्त्वप्रदीपेन मुक्तिमार्गं प्रदर्शयेत् । तदा करोति यत्नञ्च जीवोबन्धनखण्डने
अनेकजन्मयोगेन तपसाऽनशनेन च । तदालभेन्मुक्तिमार्गंनिर्विघ्नं सुखदं परम् ॥
इदंश्रुतं गुरोर्वक्त्राद्यत्पृच्छसि पुरन्दर !। मुनेस्तद्वचनंश्रुत्वावीतरागो बभूव सः॥

वैराग्यं वर्धयामास तस्य ब्रह्मन्दिने दिने ।
मुनेः स्थानाद् गृहं गत्वा स ददर्शाऽमरावतीम् ॥ ५६ ॥

दैत्यैरसुरसङ्घैश्च समाकीर्णां भयाकुलाम् । विषमोपप्लवांकुत्रबन्धुहीनाञ्चकुत्रचित्

पितृमातृकलत्रादिविहीनामतिचञ्चलाम् । शत्रुग्रस्तां च तांदृष्ट्वा जगाम वाक्पतिंप्रति
शक्रोमन्दाकिनीतीरे ददर्श गुरुमीश्वरम् । ध्यायमानं परंब्रह्म गङ्गातोये स्थितं परम्
सूर्याभिसम्मुखं पूर्वमुखञ्च विश्वतोमुखम् । साश्रुनेत्रंपुलकिनंपरमानन्दसंयुतम् ॥
वरिष्ठञ्च गरिष्ठञ्च धर्मिष्ठं श्रेष्ठसेवितम् । प्रेष्ठञ्चबन्धुवर्गाणामतिश्रेष्ठञ्च ज्ञानिनाम्
ज्येष्ठञ्च भ्रातृवर्गाणामनिष्टं सुरवैरिणाम् । दृष्ट्वा गुरुं जपन्तं च तत्रतस्थौ सुरेश्वरः
प्रहरान्ते गुरुंदृष्ट्वाचोत्थितं प्रणनाम सः । प्रणम्यचरणाम्भोजे रुरोदोच्चैर्मुहुर्मुहुः ॥

वृत्तान्तं कथयामास ब्रह्मशापादिकं तथा ।
पुनर्वरोपलब्धिञ्च ज्ञानप्राप्तिं सुदुर्लभाम् ॥ ६७ ॥

वैरिग्रस्ताञ्च स्वपुरीं क्रमेणैव सुरेश्वरः । शिष्यस्य वचनं श्रुत्वा सुबुद्धिर्वदताम्वरः

बृहस्पतिरुवाचेदं कोपसंरक्तलोचनः ।

गुरुरुवाच

श्रुतं सर्वं सुरश्रेष्ठ! मा रोदीर्वचनं शृणु ॥ ६६ ॥

न कातरो हि नीतिज्ञो विपत्तौचकदाचन । सम्पत्तिर्वाविपत्तिर्वानश्वराभ्रमरूपिणी
पूर्वस्य कर्मायत्ता च स्वयं कर्तातयोरपि । सर्वेषां च भवत्येव शश्वज्जन्मनिजन्मनि
चक्रनेमिक्रमेणैव तत्र का परिदेवना । उक्तं हि स्वकृतं कर्मभुज्यतेऽखिलभारते॥

शुभाशुभञ्च यत्किञ्चित्तत्स्वकर्मफलभुक्पुमान् ।
नाऽभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ॥ ७३ ॥

अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् । इत्येवमुक्तं वेदे च कृष्णेन परमात्मना ॥
सामवेदोक्तशाखायां सम्बोध्य कमलोद्भवम् । जन्मभोगावशेषेचसर्वेषांकृतकर्मणाम्
अनुरूपं हि तेषाञ्च भारतेऽन्यत्र चैव हि । कर्मणा ब्रह्मशापं चकर्मणाचशुभाशिषम्
कर्मणाच महालक्ष्मीं लभेद्दैन्यञ्चकर्मणा । कोटिजन्मार्जितं कर्म जीविनामनुगच्छति
नहि त्यजेद्विना भोगं तच्छायेव पुरन्दर !। कालभेदे देशभेदे पात्रभेदे च कर्मणाम् ॥
न्यूनताधिकभावोऽपि भवेदेव हि कर्मणा । वस्तुदानेन वस्तूनां समं पुण्यं दिनेदिने
दिनभेदे कोटिगुणमसङ्ख्यम्वाततोऽधिकम् । समेदेशे चवस्तूनांदानेपुण्यंसमंसुर!

देशभेदे कोटिगुणमसङ्ख्यं वा ततोऽधिकम् ।
समे पात्रे समं पुण्यं वस्तूनां कर्तुरेव च ॥ ८१ ॥
पात्रभेदे शतगुणमसङ्ख्यं वा ततोऽधिकम् ।
यथा फलन्ति सस्यानि न्यूनान्यप्यधिकानि च ॥ ८२ ॥

कर्षकाणां क्षेत्रभेदे पात्रभेदे फलं तथा । सामान्यदिवसे विप्रदानं समफलं भवेत् ॥ अमावास्यारविसङ्क्रान्त्यांफलंशतगुणंभवेत् । चातुर्मास्यांपौर्णमास्यामनन्तंफलमेवच ग्रहणे शशिनः कोटिगुणं च फलमेव च । सूर्यस्यग्रहणे वाऽपिततो दशगुणंभवेत् अक्षयायामक्षयं तदसंख्यं फलमुच्यते । एवमन्यत्र पुण्याहे फलाधिक्यं भवेदिति ॥ यथा दाने तथा स्नाने जपेऽन्यपुण्यकर्मसु । एवं सर्वत्र बोद्धव्यं नराणांकर्मणांफलम् यथा दण्डेन चक्रेणशरावेणभ्रमेण च । कुम्भं निर्माति निर्माता कुम्भकारोमृदाभुवि तथैव कर्मसूत्रेण फलं धाता ददाति च । यस्याऽऽज्ञया सृष्टमिदं तञ्च नारायणं भज स विधाता विधातुश्च पातुः पाताजगत्त्रये । स्रष्टुःस्रष्टाचसंहर्तुःसंहर्ताकालकालकः

महाविपत्तौ संसारे यः स्मरेन्मधुसूदनम् ।
विपत्तौ तस्य सम्पत्तिर्भवेदित्याह शङ्करः ॥ ६१ ॥

इत्येवमुक्त्वा तत्त्वज्ञः समालिङ्ग्यसुरेश्वरम् । दत्त्वाशुभाशिषं चेष्टंबोधयामासनारद!

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे
लक्ष्म्युत्पत्तिवर्णनंनाम चत्वारिंशोऽध्यायः ॥ ४० ॥

---

# एकचत्वारिंशोऽध्यायः

## लक्ष्म्युपाख्यानवर्णनम्

नारायण उवाच

हरिं ध्यात्वाहरिर्ब्रह्मञ्जगाम ब्रह्मणः सभाम् । बृहस्पतिं पुरस्कृत्य सर्वैःसुरगणैः सह
शीघ्रं गत्वा ब्रह्मलोकं दृष्ट्वा च कमलोद्भवम् । प्रणेमुर्देवताः सर्वाः सहेन्द्रागुरुणा सह
वृत्तान्तं कथयामाससुराचार्यो विधिम्प्रति । प्रहस्योवाचतच्छ्रुत्वामहेन्द्रंकमलासनः

ब्रह्मोवाच

वत्स ! मद्वंशजातोऽसि प्रपौत्रो मे विचक्षणः ।
बृहस्पतेश्च शिष्यस्त्वं सुराणामधिपः स्वयम् ॥ ४ ॥

मातामहश्च दक्षस्ते विष्णुभक्तः प्रतापवान् ।कुलत्रयं यस्यशुद्धंकथंसोऽहं कृतोभवेत्
मातापतिव्रता यस्यपिताशुद्धोजितेन्द्रियः । मातामहोमातुलश्चकथंसोऽहंकृतोभवेत्
जनः पैतृकदोषेण दोषान्मातामहस्य च । गुरुदोषात्त्रिभिर्दोषैर्हरिदोषी भवेद्ध्रुवम्
सर्वान्तरात्माभगवान्सर्वदेहेष्ववस्थितः । यस्य देहात्सप्रयातिसशवस्तत्क्षणेभवेत्
मनोऽहमिन्द्रियेशं च ज्ञानरूपो हि शङ्करः । विष्णुप्राणाश्च प्रकृतिर्बुद्धिर्भगवतीसती
निद्रादयः शक्तयश्च ताः सर्वाःप्रकृतेःकलाः । आत्मनःप्रतिबिम्बश्चजीवोभोगशरीरभृत्
आत्मनीशे गते देहात्सर्वे यान्ति ससम्भ्रमाः । यथावर्त्मनिगच्छन्तंनरदेवमिवानुगाः
अहं शिवश्च शेषश्च विष्णुर्धर्मो महाविराट् । यूयंयदंशाभक्ताश्चतत्पुष्पंन्यक्कृतंत्वया

शिवेन पूजितं पादपद्मं पुष्पेण येन च ।
तत्र दुर्वाससा दत्तं दैवेन न्यक्कृतं त्वया ॥ १३ ॥

तत्पुष्पं मस्तके यस्यकृष्णपादाब्जप्रच्युतम् । सर्वेषांचसुराणांचतत्पूजापुरतोभवेत्
दैवेन वञ्चितस्त्वं हि दैवञ्च बलवत्तरम् । भाग्यहीनं जनं मूढं को वारक्षितुमीश्वरः
सा श्रीगताऽधुनाकोपात्कृष्णनिर्माल्यवर्जनात् । अधुनागच्छवैकुण्ठंमयाचगुरुणासह

निषेव्य तत्र श्रीनाथं श्रीर्वःप्राप्स्यसि मद्वरात् । एवमुक्त्वा च स ब्रह्मा सर्वैः सुरगणैः सह
तत्र गत्वा परं ब्रह्म भगवन्तं सनातनम् । दृष्ट्वा तेजःस्वरूपं तं प्रज्वलन्तं स्वतेजसा

श्रीष्ममध्याह्नमार्तण्डशतकोटिसमप्रभम् ।

शान्तमनादिमध्यान्तं लक्ष्मीकान्तमनन्तकम् ॥ १९ ॥

चतुर्भुजैः पार्षदैश्च सरस्वत्या युतं प्रभुम् । भक्त्या चतुर्भिर्वेदैश्च गङ्गया परिवेष्टितम्
तं प्रणेमुः सुराः सर्वे मूर्ध्ना ब्रह्मपुरोगमाः । भक्तिनम्राः साश्रुनेत्रास्तुष्टुवुः परमेश्वरम्

वृत्तान्तं कथयामास स्वयं ब्रह्मा कृताञ्जलिः ।

रुरुदुर्देवताः सर्वाः स्वाधिकाराच्च्युताश्च ताः ॥ २२ ॥

स ददर्श सुरगणं विपद्ग्रस्तं भयाकुलम् । रत्नभूषणशून्यं च वाहनादिविवर्जितम्
शोभाशून्यं हतश्रीकं निष्प्रभं सभयं परम् । उवाच कातरं दृष्ट्वा भयभीतिविभञ्जनः ॥

श्रीभगवानुवाच

माभैर्ब्रह्मन् हे सुराश्च भयं किं वो मयि स्थिते । दास्यामि लक्ष्मीमचलां परमैश्वर्यवर्धिनीम्
किंच मद्वचनं किंचिच्छ्रूयतां समयोचितम् । हितं सत्यं सारभूतं परिणामसुखावहम्
जनाश्चासंख्यविश्वस्था मदधीनाश्च सन्ततम् । यथा तथाऽहं मद्भक्तपराधीनोऽस्वतन्त्रकः
यं यं रुष्टो हि मद्भक्तो मत्परो हि निरङ्कुशः । तद्गृहेऽहं न तिष्ठामि पद्मया सह निश्चितम्

दुर्वासाः शङ्करांशश्च वैष्णवो मत्परायणः ।

तच्छापादागतोऽहं च सलक्ष्मीको हि वो गृहात् ॥ २९ ॥

यत्र शङ्खध्वनिर्नास्ति तुलसी न शिवार्चनम् । न भोजनं च विप्राणां न पद्मा तत्र तिष्ठति
मद्भक्तानां च मे निन्दा यत्र ब्रह्मन्भवेत्सुराः । महारुष्टा महालक्ष्मीस्ततो याति पराभवम्
मद्भक्तिहीनो यो मूढो भुङ्क्ते यो हरिवासरे । मम जन्मदिने वापि याति श्रीस्तद्गृहादपि

मन्नामविक्रयी यश्च विक्रीणाति स्वकन्यकाम् ।

यत्राऽतिथिर्न भुङ्क्ते च मत्प्रिया याति तद्गृहात् ॥ ३२ ॥

यो विप्रः पुंश्चलीपुत्रो महापापी च तत्पतिः ।

पापिनो यो गृहं याति शूद्रश्राद्धाऽन्नभोजकः ॥ ३४ ॥

महारुष्टा ततो यातिमन्दिरात्कमलालया । शूद्राणां शवदाहीचभाग्यहीनोद्विजाधमः
याति रुष्टा तद्गृहाच्चदेवाऽकमलवासिनी । शूद्राणांसूपकारी यो ब्राह्मणोवृषवाहकः
तत्तोयपानभीता च कमला यातितद्गृहात् । अशुद्धहृदयःक्रूरोहिंसकोनिन्दकोद्विजः

ब्राह्मणः शूद्रयाजी च याति देवी च तद्गृहात् ।
अवीरान्नञ्च यो भुङ्क्ते तस्माद्याति जगत्प्रसूः ॥ ३८ ॥
तृणं छिनत्तिनखरैस्तैर्वा यो विलिखेन्महीम् ।
निराशो ब्राह्मणो यत्र तद्गृहाद्याति मत्प्रिया ॥ ३९ ॥
सूर्योदये द्विजो भुङ्क्ते दिवाशायी (स्वापी) च ब्राह्मणः ।
दिवा मैथुनकारी च यस्तस्माद्याति मत्प्रिया ॥ ४० ॥

आचारहीनोविप्रोयोयश्चशूद्रप्रतिग्रही । अदीक्षितोहियो मूढस्तस्माद्वैयातिमत्प्रिया
स्निग्धपादश्चनग्नो हि यःशेतेज्ञानदुर्बलः । शश्वद्वमनिवाचालोयातिमातद्गृहात्सती

शिरःस्नातस्तु तैलेन योऽन्याङ्गं समुपस्पृशेत् ।
स्वाङ्के च वादयेद्वाद्यं रुष्टा सा याति तद्गृहात् ॥ ४३ ॥
व्रतोपवासहीनो यः सन्ध्याहीनोऽशुचिर्द्विजः ।
विष्णुभक्तिविहीनस्तु तस्माद्याति च मत्प्रिया ॥ ४४ ॥

ब्राह्मणंनिन्दयेद्योहितंचयो द्वेष्टि सन्ततम् । जीवहिंसोदयाहीनोयातिसर्वप्रसूस्ततः
यत्र यत्र हरेरर्चा हरेरुत्कीर्तनं तथा । तत्र तिष्ठति सा देवी सर्वमङ्गलमङ्गला ॥४६

यत्र प्रशंसा कृष्णस्य तद्भक्तस्य पितामह ! ।
सा च कृष्णप्रिया देवी तत्र तिष्ठति सन्ततम् ॥ ४७ ॥

यत्र शङ्खध्वनिः शङ्खः शिला च तुलसीदलम् । तत्सेवावन्दनंध्यानंतत्रसापरितिष्ठति
शिवलिङ्गार्चनं यत्रतस्य चोत्कीर्तनंशुभम् । दुर्गार्चनंतद्गुणाश्च तत्र पद्मनिवासिनी
विप्राणां सेवनं यत्र तेषाञ्च भोजनं शुभम् । अर्चनं सर्वदेवानां तत्र पद्ममुखी सती
इत्युक्त्वाच सुरान्सर्वान्रमामाहरमापतिः । क्षीरोदसागरेजन्म कलयाऽऽकलयेतिच
इत्युक्त्वा तां जगन्नाथो ब्रह्माणं पुनराह च । मथितासागरं लक्ष्मीं देवेभ्योदेहिपद्मज

इत्युक्त्वा कमलाकान्तोजगामान्तःपुरंमुने !। देवाश्चिरेणकालेनययुः क्षीरोदसागरम्

मन्थानं मन्दरं कृत्वा कूर्मं कृत्वा च भाजनम्।

कृत्वा शेषं मन्थपाशं ममन्थुरसुराः सुराः ॥ ५४ ॥

धन्वन्तरिञ्चपीयूषमुच्चैःश्रवसमीप्सितम्। नानारत्नं हस्तिरत्नंप्रापुर्लक्ष्मींसुदर्शनम्

वनमालांददौ सा च क्षीरोदशायिनेमुने !। सर्वेश्वराय रम्यायविष्णवे वैष्णवीसती

देवैःस्तुता पूजिताच ब्रह्मणा शङ्करेण च। ददौ दृष्टिं सुरगृहे ब्रह्मशापविमोचनात् ॥

प्रापुर्देवाः स्वविषयं दैत्यग्रस्तं भयङ्करम्। महालक्ष्मीप्रसादेन वरदानेन नारद !॥५८

इत्येवंकथितं सर्वंलक्ष्म्युपाख्यानमुत्तमम्। सुखदंसारभूतञ्च किं भूयःश्रोतुमिच्छसि

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायांनवमस्कन्धे

श्रीलक्ष्म्युपाख्यानवर्णनं नामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

## द्विचत्वारिंशोऽध्यायः

### महालक्ष्म्याध्यानस्तोत्रवर्णनम्

नारद उवाच

हरेरुत्कीर्तनं भद्रं श्रुतं तज्ज्ञानमुत्तमम्। ईप्सितंलक्ष्म्युपाख्यानंध्यानं स्तोत्रंवदप्रभो

नारायण उवाच

स्नात्वा तीर्थे पुरा शक्रो धृत्वा धौते च वाससी।

घटं संस्थाप्य क्षीरोदे षड्देवान्पर्यपूजयत् ॥ २ ॥

गणेशञ्च दिनेशञ्च वह्निं विष्णुं शिवं शिवाम्।

एतान्भक्त्या समभ्यर्च्य पुष्पगन्धादिभिस्तथा ॥ ३ ॥

आवाह्य च महालक्ष्मींपरमैश्वर्यरूपिणीम्। पूजां चकार देवेशो ब्रह्मणा च पुरोधसा

पुरःस्थितेषु मुनिषु ब्राह्मणेषु गुरौ हरौ। देवादिषु सुदेशे च ज्ञानानन्दे शिवे मुने!

पारिजातस्यपुष्पञ्चगृहीत्वाचन्दनोक्षितम् । ध्यात्वादेवींमहालक्ष्मींपूजयामासनारद! ध्यानञ्च सामवेदोक्तं यद्दत्तं ब्रह्मणे पुरा । हरिणा तेन ध्यानेन तन्निबोध वदामि ते सहस्रदलपद्मस्थकर्णिकावासिनीं पराम् । शरत्पार्वणकोटीन्दुप्रभामुष्टिकरां पराम्

स्वतेजसा प्रज्वलन्तीं सुखदृश्यां मनोहराम् ।
प्रतप्तकाञ्चनंनिभशोभां मूर्तिमतीं सतीम् ॥ ९ ॥
रत्नभूषणभूषाढ्यां शोभितां पीतवाससा ।
ईषद्धास्यां प्रसन्नास्यां शश्वत्सुस्थिरयौवनाम् ॥ १० ॥
सर्वसम्पत्प्रदात्रीञ्च महालक्ष्मीं भजे शुभाम् ।
ध्यानेनाऽनेन तां ध्यात्वा नानागुणसमन्विताम् ॥ ११ ॥

सम्पूज्य ब्रह्मवाक्येन चोपचाराणिषोडश । ददौ भक्त्याविधानेनप्रत्येकं मन्त्रपूर्वकम् प्रशस्तानि प्रकृष्टानि वराणि विविधानि च । अमूल्यरत्नसारञ्चनिर्मितंविश्वकर्मणा आसनञ्चविचित्रञ्च महालक्ष्मि! प्रगृह्यताम् । शुद्धंगङ्गोदकमिदंसर्ववन्दितमीप्सितम् पापेध्मवह्निरूपञ्च गृह्यतां कमलालये !। पुष्पचन्दनदूर्वादि संयुतं जाह्नवीजलम् ॥ शङ्खगर्भस्थितं स्वर्घ्यंगृह्यतांपद्मवासिनि !। सुगन्धिपुष्पतैलञ्चसुगन्धामलकीफलम् देहसौन्दर्यबीजञ्च गृह्यतां श्रीहरेः प्रिये !। कार्पासजञ्च कृमिजं वसनंदेवि! गृह्यताम् रत्नस्वर्णविकारञ्च देहभूषाविवर्धनम् । शोभायै श्रीकरं रत्नं भूषणं देवि! गृह्यताम् सर्वसौन्दर्यबीजञ्चसद्यः शोभाकरं परम् । वृक्षनिर्यासरूपञ्चगन्धद्रव्यादिसंयुतम् श्रीकृष्णकान्ते! धूपञ्च पवित्रंप्रतिगृह्यताम् । सुगन्धियुक्तं सुखदंचन्दनंदेवि गृह्यताम् जगच्चक्षुःस्वरूपञ्च पवित्रं तिमिरापहम् । प्रदीपं सुखरूपञ्च गृह्यताञ्च सुरेश्वरि !॥ नानोपचाररूपञ्चनानारससमन्वितम् । अतिस्वादुकरं चैव नैवेद्यं प्रतिगृह्यताम् ॥ अन्नं ब्रह्मस्वरूपञ्च प्राणरक्षणकारणम् । तुष्टिदं पुष्टिदं चैव देव्यन्नं प्रतिगृह्यताम् शाल्यन्नजं सुपक्वं च शर्करागव्यसंयुतम् । स्वादुयुक्तंमहालक्ष्मि!परमान्नं प्रगृह्यताम् शर्करागव्यपक्वञ्च सुस्वादुसुमनोहरम् । मयानिवेदितंभक्त्या स्वस्तिकंप्रतिगृह्यताम् नानाविधानिरम्याणि पक्वान्नानिफलानि च । सुरभिस्तनसन्त्यक्तंसुस्वादुसुमनोहरम्

मर्त्यामृतं सुगव्यञ्च गृह्यतामच्युतप्रिये !। सुस्वादुरससंयुक्तमिक्षुवृक्षसमुद्भवम् ॥
अग्निपक्वमतिस्वादुगुडञ्चप्रतिगृह्यताम् । यवगोधूमसस्यानां चूर्णरेणुसमुद्भवम् ॥

सुपक्वं गुडगव्याक्तं मिष्टान्नं देवि! गृह्यताम् ।
सस्यचूर्णोद्भवं पक्वं स्वस्तिकादिसमन्वितम् ॥ २१ ॥

मया निवेदितंभक्तयानैवेद्यं प्रतिगृह्यताम् । शीतवायुप्रदञ्चैव दाहे च सुखदं परम् ॥
कमले गृह्यतां चेदं व्यजनं श्वेतचामरम् । ताम्बूलं च वरंरम्यंकर्पूरादिसुवासितम्
जिह्वाजाड्यच्छेदकरंताम्बूलंप्रतिगृह्यताम् । सुवासितंसुशीतं चपिपासानाशकारणम्
जगज्जीवनरूपञ्च जीवनं देवि! गृह्यताम् । देहसौन्दर्यबीजं च सदा शोभाविवर्धनम्
कार्पासजं च कृमिजं वसनं देवि ! गृह्यताम् । रत्नस्वर्णविकारञ्च देहभूषादिवर्धनम्
शोभाधारं श्रीकरञ्चभूषणं देवि! गृह्यताम् । नानाऋतुषु निर्माणं बहुशोभाश्रयं परम्
सुरभूपप्रियं शुद्धं माल्यं देवि ! प्रगृह्यताम् । शुद्धिदं शुद्धरूपञ्च सर्वमङ्गलमङ्गलम् ॥
गन्धवस्तूद्भवं रम्यं गन्धं देवि! प्रगृह्यताम् । पुण्यतीर्थोदकञ्चैव विशुद्धं शुद्धिदं सदा
गृह्यतां कृष्णकान्ते! त्वं रम्यमाचमनीयकम् । रत्नसारादिनिर्माणंपुष्पचन्दनचर्चितम्
वस्त्रभूषणभूषाढ्यं सुतल्पं देवि! गृह्यताम् । यद्यद्द्रव्यमपूर्वञ्च पृथिव्यामपिदुर्लभम्
देवभूषार्हभोग्यञ्च तद्द्रव्यं देवि! गृह्यताम् । द्रव्याण्येतानि दत्त्वा च मूलेनदेवपुङ्गवः
मूलं जजाप भक्तयाच दशलक्षं विधानतः । जपेन दशलक्षेण मन्त्रसिद्धिर्बभूव ह ॥
मन्त्रश्च ब्रह्मणादत्तः कल्पवृक्षश्च सर्वतः । लक्ष्मीर्मायाकामवाणीङेन्ता कमलवासिनी

वैदिको मन्त्रराजोऽयं प्रसिद्धः स्वाहयाऽन्वितः ।
कुबेरोऽनेन मन्त्रेण परमैश्वर्यमाप्तवान् ॥ ४३ ॥

राजराजेश्वरोदक्षः सावर्णिर्मनुरेव च । मङ्गलोऽनेन मन्त्रेण सप्तद्वीपेऽवनीपतिः ॥४४
प्रियव्रतोत्तानपादौ केदारोनृप एव च । एते सिद्धाश्च राजेन्द्रा मन्त्रेणाऽनेन नारद !
सिद्धे मन्त्रे महालक्ष्मीः शक्राय दर्शनं ददौ । रत्नेन्द्रसारनिर्माणविमानस्थावरप्रदा
सप्तद्वीपवतीं पृथ्वीं छादयन्ति त्विषा च सा । श्वेतचम्पकवर्णाभारत्नभूषणभूषिता
ईषद्धास्यप्रसन्नास्या भक्तानुग्रहकातरा । बिभ्रती रत्नमालाञ्च कोटिचन्द्रसमप्रभाम्

दृष्ट्वा जगत्प्रसूं शान्तां तुष्टावैतां पुरन्दरः । पुलकाञ्चितसर्वाङ्गःसाऽश्रुनेत्रःकृताञ्जलिः
ब्रह्मणा च प्रदत्तेन स्तोत्रराजेन संयुतः । सर्वाभीष्टप्रदेनैव वैदिकेनैव तत्र च ॥

पुरन्दर उवाच

नमः कमलवासिन्यै नारायण्यै नमो नमः । कृष्णप्रियायै सततं महालक्ष्म्यै नमोनमः
पद्मपत्रेक्षणायै च पद्मास्यायै नमोनमः । पद्मासनायै पद्मिन्यै वैष्णव्यै च नमोनमः ॥
सर्वसम्पत्स्वरूपिण्यै सर्वाराध्यै नमोनमः । हरिभक्तिप्रदात्र्यै च हर्षदात्र्यै नमोनमः
कृष्णवक्षःस्थितायै च कृष्णेशायै नमोनमः । चन्द्रशोभास्वरूपायै रत्नपद्मेचशोभने
सम्पत्त्यधिष्ठातृदेव्यै महादेव्यै नमोनमः । नमोवृद्धिस्वरूपायै वृद्धिदायै नमोनमः ॥
वैकुण्ठे या महालक्ष्मीर्यालक्ष्मीःक्षीरसागरे । स्वर्गलक्ष्मीरिन्द्रगेहेराजलक्ष्मीर्नृपालये
गृहलक्ष्मीश्च गृहिणां गेहे च गृहदेवता । सुरभिः सागरेजातादक्षिणायज्ञकामिनी
अदितिर्देवमाता त्वं कमलाकमलालया । स्वाहा त्वंचहविर्दानेकव्यदानेस्वधास्मृता
त्वं हि विष्णुस्वरूपा च सर्वाधारा वसुन्धरा । शुद्धसत्त्वस्वरूपात्वंनारायणपरायणा
क्रोधहिंसावर्जिता च वरदा शारदा शुभा । परमार्थप्रदा त्वञ्च हरिदास्यप्रदा परा ॥

यया विना जगत्सर्वं भस्मीभूतमसारकम् ।
जीवन्मृतं च विश्वं च शश्वत्सर्वं यया विना ॥ ६१ ॥

सर्वेषाञ्च परामाता सर्वबान्धवरूपिणी । धर्मार्थकाममोक्षाणा त्वं च कारणरूपिणी

यथा माता स्तनान्धानां शिशूनां शैशवे सदा ।
तथा त्वं सर्वदा माता सर्वेषां सर्वरूपतः ॥ ६३ ॥
मातृहीनः स्तनान्धस्तु स च जीवति दैवतः ।
त्वया हीनो जनः कोऽपि न जीवत्येव निश्चितम् ॥ ६४ ॥

सुप्रसन्नस्वरूपा त्वंमां प्रसन्नाभवाऽम्बिके ! । वैरिग्रस्तं च विषयं देहिमह्यं सनातनि
अहंयावत्त्वयाहीनो बन्धुहीनश्च भिक्षुकः । सर्वसम्पद्विहीनश्च तावदेव हरिप्रिये ! ॥
ज्ञानं देहि च धर्मञ्च सर्वसौभाग्यमीप्सितम् । प्रभावञ्चप्रतापञ्च सर्वाधिकारमेव च
जयं पराक्रमं युद्धे परमैश्वर्यमेव च । इत्युक्त्वा च महेन्द्रश्च सर्वैः सुरगणैः सह ॥

प्रणनाम साश्रुनेत्रो मूर्ध्ना चैव पुनः पुनः । ब्रह्मा च शङ्करश्चैवशेषोधर्मश्च केशवः ॥
सर्वेचक्रुः परीहारं सुरार्थं च पुनः पुनः । देवेभ्यश्चवरंदत्त्वा पुष्पमालां मनोहराम् ॥

केशवाय ददौ लक्ष्मीः सन्तुष्टा सुरसंसदि ।

ययुर्देवाश्च सन्तुष्टाः स्वं स्वं स्थानं च नारद !॥ ७१ ॥

देवीययौ हरेः स्थानं हृष्टाक्षीरोदशायिनः । ययतुश्चैवस्वगृहं ब्रह्मेशानौ च नारद !॥
दत्त्वाशुभाशिषं तौचदेवेभ्यः प्रीतिपूर्वकम् । इदं स्तोत्रंमहापुण्यंत्रिसन्ध्यंयःपठेन्नरः

कुबेरतुल्यः स भवेद्राजराजेश्वरो महान् ।

"पञ्चलक्षजपेनैव स्तोत्रसिद्धिर्भवेन्नृणाम्" ॥ ७४ ॥

सिद्धस्तोत्रं यदिपठेन्मासमेकन्तु सन्ततम् । महासुखीचराजेन्द्रोभविष्यतिनसंशयः

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायांनवमस्कन्धे
महालक्ष्म्याख्यानस्तोत्रवर्णनंनाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

# त्रिचत्वारिंशोऽध्यायः

## स्वाहोपाख्यानवर्णनम्

नारद उवाच

नारायण महाभाग! नारायण ! महाप्रभो !। रूपेणैव गुणेनैव यशसा तेजसा त्विषा

त्वमेव ज्ञानिनां श्रेष्ठः सिद्धानां योगिनां मुने !।

तपस्विनां मुनीनाञ्च परो वेदविदाम्वर! ॥ २ ॥

महालक्ष्म्या उपाख्यानं विज्ञातं महदद्भुतम् ।

अन्यत्किञ्चिदुपाख्यानं निगूढं वद साम्प्रतम् ॥ ३ ॥

अतीवगोपनीयंयदुपयुक्तं च सर्वतः । अप्रकाश्यं पुराणेषु वेदोक्तं धर्मसंयुतम् ॥ ४ ॥

नारायण उवाच

नानाप्रकारमाख्यानमप्रकाश्यं पुराणतः। श्रुतं कतिविधं गूढमास्ते ब्रह्मन्सुदुर्लभम्
तेषु यत्सारभूतञ्च श्रोतुं किम्वा त्वमिच्छसि।
तन्मे ब्रूहि महाभाग! पश्चाद्वक्ष्यामि तत्पुनः ॥ ६ ॥

नारद उवाच

स्वाहा देवी हविर्दाने प्रशस्ता सर्वकर्मसु। पितृदाने स्वधाशस्ता दक्षिणा सर्वतोवरा
एतासां चरितं जन्मफलं प्राधान्यमेव च। श्रोतुमिच्छामि त्वद्वक्त्राद्वदवेदविदाम्वर

सूत उवाच

नारदस्य वचः श्रुत्वा प्रहस्य मुनिसत्तमः। कथां कथितुमारेभे पुराणोक्तां पुरातनीम्

नारायण उवाच

सृष्टेः प्रथमतो देवाः स्वाहारार्थं ययुः पुरा। ब्रह्मलोकं ब्रह्मसभां ताजग्मुः सुमनोहराम्
गत्वा निवेदनं चक्रुराहारहेतुकं मुने!। ब्रह्मा श्रुत्वा प्रतिज्ञाय निषेवे श्रीहरिं परम् ॥

नारद उवाच

यज्ञरूपो हि भगवान्कलया च बभूव ह। यज्ञे यद्धविर्दानं दत्तं तेभ्यश्च ब्राह्मणैः ॥

नारायण उवाच

हविर्ददति विप्राश्च भक्त्या च क्षत्रियादयः। सुरा नैव प्राप्नुवन्ति तद्दानं मुनिपुङ्गव!
देवा विषण्णास्ते सर्वे तत्सभां च ययुः पुनः। गत्वा निवेदनं चक्रुराहाराभावहेतुकम्
ब्रह्मा श्रुत्वा तु ध्यानेन श्रीकृष्णं शरणं ययौ। पूजाञ्चकार प्रकृतेर्ध्यानेनैव तदाज्ञया
प्रकृतेः कलया चैव सर्वशक्तिस्वरूपिणी। अतीव सुन्दरी श्यामा रमणीया मनोहरा
ईषद्धास्यप्रसन्नास्या भक्तानुग्रहकातरा। उवाचेति विधेरग्रे पद्मयोने! वरं वृणु ॥१७
विधिस्तद्वचनं श्रुत्वा सम्भ्रमात्समुवाच ताम्।

प्रजापतिरुवाच

त्वमग्नेर्दाहिका शक्तिर्भव याऽतीव सुन्दरी ॥ १८ ॥
दग्धुं नशक्तः प्रकृतीहुताशश्च त्वया विना। त्वन्नामोच्चार्य मन्त्रान्ते यो दास्यति हविर्नरः

सुरेभ्यस्तत्प्राप्नुवन्तिसुराःसानन्दपूर्वकम् । अग्नेःसम्पत्स्वरूपाचश्रीरूपासागृहेश्वरी
देवानांपूजिताशश्वन्नरादीनांभवाऽम्बिके !। ब्रह्मणश्चवचःश्रुत्वा सा विषण्णाबभूव ह

तमुवाच ततो देवी स्वाभिप्रायं स्वयम्भुवम् ।

स्वाहोवाच

अहं कृष्णं भजिष्यामि तपसा सुचिरेण च ॥ २२ ॥
ब्रह्मंस्तदन्यं यत्किञ्चित्स्वप्नवद् भ्रममेव च ।
विधाता जगतस्त्वञ्च शम्भुर्मृत्युञ्जयो विभुः ॥ २३ ॥

बिभर्तिशेषो विश्वञ्चधर्मः साक्षीचधर्मिणाम् । सर्वाद्यपूज्योदेवानांगणेषुच गणेश्वरः
प्रकृतिः सर्वसम्पूज्या यत्प्रसादात्पुराऽभवत् । ऋषयो मुनयश्चैव पूजिता यन्निषेवया
तत्पादपद्मं नियतं भावेनचिन्तयाम्यहम् । पद्मास्यापाद्ममित्युक्त्वापद्मनाभानुसारतः
जगाम तपसे देवी ध्यात्वा कृष्णं निरामयम् । तपस्तेपे वर्षलक्षमेकपादेन पद्मजा ॥
तदा ददर्श श्रीकृष्णं निर्गुणम्प्रकृतेः परम् । अतीव कमनीयञ्चरूपं दृष्ट्वा च रूपिणी
मूर्च्छां सम्प्राप कालेन कामेशस्य च कामुकी । विज्ञायतदभिप्रायंसर्वज्ञस्तामुवाचह

समुत्थाप्य च तां क्रोडे क्षीणाङ्गीं तपसा चिरम् ।

श्रीभगवानुवाच

वाराहे वै त्वमंशेन मम पत्नी भविष्यसि ॥ ३० ॥
नाम्ना नाग्नजितीकन्या कान्ते! नग्नजितस्य च ।
अधुनाऽग्नेर्दाहिका त्वं भव पत्नी च भामिनी ॥ ३१ ॥

मन्त्राङ्गरूपापूजाचमत्प्रसादाद्भविष्यति । वह्निस्त्वांभक्तिभावेनसम्पूज्यचगृहेश्वरीम्
रमिष्यतित्वयासार्धंरामया रमणीयया । इत्युक्त्वाऽन्तर्दधे देवो देवींसम्भाष्यनारद
तत्राऽऽजगामसन्त्रस्तोवह्निर्ब्रह्मनिदेशतः ।सामवेदोक्तध्यानेनध्यात्वातांजगदम्बिकाम्
सम्पूज्य परितुष्टाव पाणिं जग्राह मन्त्रतः । तदा दिव्यं वर्षशतं स रेमे रामया सह
अतीव निर्जने देशे सम्भोगसुखदे सदा । बभूव गर्भस्तस्याञ्च हुताशस्यच तेजसा
तं दधार च सा देवी दिव्यंद्वादशवत्सरम् । ततः सुषाव पुत्रांश्च रमणीयान्मनोहरान्

दक्षिणाग्निगार्हपत्याऽऽहवनीयान्क्रमेणच । ऋषयो मुनयश्चैव ब्राह्मणाः क्षत्रियादयः
स्वाहान्तं मन्त्रमुच्चार्यहविर्दानञ्चचक्रिरे । स्वाहायुक्तञ्चमन्त्रञ्चयो गृह्णातिप्रशस्तकम्
सर्वसिद्धिर्भवेत्तस्य मन्त्रग्रहणमात्रतः । विषहीनो यथा सर्पो वेदहीनो यथा द्विजः

पतिसेवा विहीना स्त्री विद्याहीनो यथा पुमान् ।
फलशाखाविहीनश्च यथा वृक्षो हि निन्दितः ॥ ४१ ॥

स्वाहाहीनस्तथामन्त्रो न हुतःफलदायकः । परितुष्टाद्विजाःसर्वे देवाःसम्प्रापुराहुतीः
स्वाहान्तेनैवमन्त्रेण सफलं सर्वमेव च । इत्येवं कथितं सर्वं स्वाहोपाख्यानमुत्तमम

सुखदं मोक्षदं सारं किं भूयः श्रोतुमिच्छसि ।

नारद उवाच

स्वाहा पूजाविधानञ्च ध्यानं स्तोत्रं मुनीश्वर !॥ ४४ ॥
सम्पूज्य वह्निस्तुष्टाव येन तद्वद मे प्रभो !।

श्रीनारायण उवाच

ध्यानञ्च सामवेदोक्तं स्तोत्रपूजाविधानकम् ॥ ४५ ॥

वदामि श्रूयतां ब्रह्मन्सावधानो मुनीश्वर !। सर्वयज्ञारम्भकाले शालग्रामे घटेऽथवा

स्वाहां सम्पूज्य यत्नेन यज्ञं कुर्यात्फलाप्तये ।
स्वाहां मन्त्राङ्गयुक्तां च मन्त्रसिद्धिस्वरूपिणीम् ॥ ४७ ॥
सिद्धां च सिद्धिदां नृणां कर्मणां फलदां शुभाम् ।
इति ध्यात्वा च मूलेन दत्त्वा पाद्यादिकं नरः ॥ ४८ ॥

सर्वसिद्धिलभेत्स्तुत्वामूलमन्त्रंमुने! शृणु । ॐह्रीं श्रीं वह्निजायायै देव्यै स्वाहेत्यनेनच

यः पूजयेच्च तां भक्त्या सर्वेष्टं सम्भवेद् ध्रुवम् ।

वह्निरुवाच

स्वाहा वह्निप्रिया वह्निजाया सन्तोषकारिणी ॥ ५० ॥

शक्तिः क्रिया कालदात्रीपरिपाककरी ध्रुवा । गतिः सदा नराणाञ्चदाहिकादहनक्षमा
संसारसाररूपाच घोरसंसारतारिणी । देवजीवनरूपाच देवपोषणकारिणी ॥ ५२ ॥

षोडशैतानि नामानि यः पठेद्भक्तिसंयुतः । सर्वसिद्धिर्भवेत्तस्य इह लोके परत्र च ॥
नाङ्गहीनं भवेत्तस्य सर्वकर्मसुशोभनम् । अपुत्रोलभते पुत्रं भार्याहीनो लभेत्प्रियाम्
रम्भोपमां स्वकान्ताञ्च सम्प्राप्य सुखमाप्नुयात् ॥ ५५ ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे
नारायणनारदसम्वादे स्वाहोपाख्याने त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

# चतुश्चत्वारिंशोऽध्यायः

## स्वधोपाख्यानवर्णनम्

### श्रीनारायण उवाच

नारद !शृणुवक्ष्यामि स्वधोपाख्यानमुत्तमम् । पितृणाञ्च तृप्तिकरंश्राद्धान्नफलवर्द्धनम्
सृष्टेरादौ पितृगणान्ससर्ज जगतां विधिः । चतुरश्च मूर्तिमतस्त्रींश्चतेजःस्वरूपिणः
दृष्ट्वा सप्तपितृगणान् सुखरूपान्मनोहरान् । आहारं ससृजे तेषां श्राद्धं तर्पणपूर्वकम्
स्नानं तर्पणपर्यन्तंश्राद्धंतुदेवपूजनम् । आह्निकञ्च त्रिसन्ध्यान्तंविप्राणाञ्चश्रुतौश्रुतम्
नित्यंनकुर्याद्योविप्रस्त्रिसन्ध्यंश्राद्धतर्पणम् । बलिंवेदध्वनिंसोऽपिविषहीनोयथोरगः
देवीसेवाविहीनश्च श्रीहरेरनिवेद्यभुक् । भस्मान्तं सूतकं तस्य न कर्मार्हश्च नारद !
ब्रह्मा श्राद्धादिकं सृष्ट्वा जगाम पितृहेतवे । न प्राप्नुवन्ति पितरोददति ब्राह्मणादयः
सर्वे च जग्मुः क्षुधिताः खिन्नास्तु ब्रह्मणः सभाम् ।
सर्वं निवेदनं चक्रुस्तमेव जगतां विधिम् ॥ ८ ॥
ब्रह्मा च मानसीं कन्यांससृजेच मनोहराम् । रूपयौवनसम्पन्नां शतचन्द्रनिभाननाम्
विद्यावतीं गुणवतीमतिरूपवतीं सतीम् । श्वेतचम्पकवर्णाभां रत्नभूषणभूषिताम्
विशुद्धां प्रकृतेरंशां सस्मितां वरदां शुभाम् ।

स्वधाभिधाञ्च सुदतीं लक्ष्मीलक्षणसंयुताम् ॥ ११ ॥

शतपद्मपद्मन्यस्तपादपद्मञ्च बिभ्रतीम् । पत्नीं पितृणां पद्मास्यांपद्मजां पद्मलोचनाम्

पितृभ्यश्च ददौ ब्रह्मातुष्टेभ्यस्तुष्टिरूपिणीम् । ब्राह्मणानांचोपदेशंचकारगोपनीयकम्

स्वधान्तं मन्त्रमुच्चार्य पितृभ्यो देयमित्यपि । क्रमेण तेन विप्राश्च पित्रेदानंददुःपुरा

स्वाहा शस्ता देवदाने पितृदाने स्वधा स्मृता ।

सर्वत्र दक्षिणा शस्ता हतं यज्ञमदक्षिणम् ॥ १९ ॥

पितरोदेवता विप्रामुनयोमनवस्तथा । पूजांश्चक्रुः स्वधां शान्तां तुष्टुवुःपरमादरात

देवादयश्च सन्तुष्टाः परिपूर्णमनोरथाः । विप्रादयश्च पितरः स्वधादेवी वरेण च ॥

इत्येवंकथितंसर्वंस्वधोपाख्यानमेवच । सर्वेषाञ्च तुष्टिकरं किं भूयः श्रोतुमिच्छसि

नारद उवाच

स्वधापूजाविधानञ्च ध्यानंस्तोत्रं महामुने !। श्रोतुमिच्छामि यत्नेनवदवेदविदाम्वर

नारायण उवाच

ध्यानञ्चस्तवनंब्रह्मन्वेदोक्तंसर्वमङ्गलम् । सर्वं जानासि च कथं ज्ञातुमिच्छसि वृद्धये

शरत्कृष्णत्रयोदश्यां मघायां श्राद्धवासरे ।

स्वधां सम्पूज्य यत्नेन ततः श्राद्धं समाचरेत् ॥ २१ ॥

स्वधां नाऽभ्यर्च्य यो विप्रः श्राद्धं कुर्यादहम्मतिः ।

न भवेत्फलभाक्सत्यं श्राद्धस्य तर्पणस्य च ॥ २२ ॥

ब्रह्मणो मानसीं कन्यां शश्वत्सुस्थिरयौवनाम् ।

पूज्यां वै पितृदेवानां श्राद्धानां फलदां भजे ॥ २३ ॥

इति ध्यात्वा शिलायां वा ह्यथवा मङ्गले तटे ।

दद्यात्पाद्यादिकं तस्यै मूलेनेति श्रुतौ श्रुतम् ॥ २४ ॥

ॐ ह्रीं श्रीं क्लीं स्वधादेव्यै स्वाहेति च महामुने !।

समुच्चार्य च सम्पूज्य स्तुत्वा तां प्रणमेद् द्विजः ॥ २५ ॥

स्तोत्रं शृणु मुनिश्रेष्ठ! ब्रह्मपुत्र विशारद !। सर्ववाञ्छाप्रदं नृणां ब्रह्मणा यत्कृतं पुरा

नारायण उवाच

स्वधोच्चारणमात्रेण तीर्थस्नायी भवेन्नरः । मुच्यते सर्वपापेभ्यो वाजपेयफलंलभेत्
स्वधास्वधास्वधेत्येवं यदिवारत्रयं स्मरेत् । श्राद्धस्यफलमाप्नोतिबलेश्चतर्पणस्यच

श्राद्धकाले स्वधास्तोत्रं यः शृणोति समाहितः ।
स लभेच्छ्राद्धसम्भूतं फलमेव न संशयः ॥ २६ ॥
स्वधास्वधास्वधेत्येवं त्रिसन्ध्यं यः पठेन्नरः ।
प्रियां विनीतां स लभेत्साध्वीं पुत्रगुणान्विताम् ॥ ३० ॥

पितृणां प्राणतुल्यात्वंद्विजजीवनरूपिणी । श्राद्धाधिष्ठात्रीदेवीत्वश्राद्धादीनांफलप्रदा
नित्या त्वं सत्यरूपाऽसिपुण्यरूपासिसुव्रते !। आविर्भावतिरोभावौसृष्टौचप्रलयेतव

ॐस्वस्तिश्च नमः स्वाहा स्वधा त्वं दक्षिणा तथा ।
निरूपिताश्चतुर्वेदैः प्रशस्ताः कर्मिणाम्पुनः ॥ ३३ ॥

कर्मपूर्त्यर्थमेवैता ईश्वरेण विनिर्मिताः । इत्येवमुक्त्वा स ब्रह्मा ब्रह्मलोकेस्वसंसदि
तस्थौ च सहसा सद्यःस्वधासाऽऽविर्बभूवह । तदापितृभ्यःप्रददौतामेवकमलाननाम्
तां सम्प्राप्ययगुस्तेचपितरश्चप्रहर्षिताः । स्वधास्तोत्रमिदंपुण्यंयःशृणोतिसमाहितः

स स्नातः सर्वतीर्थेषु वाञ्छितं फलमाप्नुयात् ॥ ३६ ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे
नारायणनारदसम्वादे स्वधोपाख्याने चतुश्चत्वारिंशोऽध्यायः ॥४४॥

# पञ्चचत्वारिंशोऽध्यायः

## दक्षिणोपाख्यानवर्णनम्

**श्रीनारायण उवाच**

उक्तंस्वाहास्वधाख्यानंप्रशस्तंमधुरंपरम् । वक्ष्यामिदक्षिणाख्यानंसावधानोनिशामय

गोपी सुशीला गोलोके पुराऽसीत्प्रेयसी हरेः ।

राधा प्रधाना सध्रीची धन्या मान्या मनोहरा ॥ २ ॥

अतीव सुन्दरीरामा सुभगा सुदती सती । विद्यावती गुणवती चाऽतिरूपवतीसती

कलावती कोमलाङ्गी कान्ता कमललोचना ।

सुश्रोणी सुस्तनी श्यामा न्यग्रोधपरिमण्डिता ॥ ४ ॥

ईषद्धास्यप्रसन्नास्या रत्नालङ्कारभूषिता । श्वेतचम्पकवर्णाभा बिम्बोष्ठी मृगलोचना

कामशास्त्रेषु निपुणा कामिनीहंसगामिनी । भावानुरक्ता भावज्ञाकृष्णस्यप्रियभामिनी

रसज्ञा रसिकारासे रासेशस्य रसोत्सुका । उवासाऽदक्षिणेक्रोडेराधायाः पुरतः पुरा

सम्बभूवाऽऽनम्रमुखो भयेन मधुसूदनः । दृष्ट्वा राधाञ्च पुरतो गोपीनां प्रवरोत्तमाम्

कामिनीं रक्तवदनां रक्तपङ्कजलोचनाम् । कोपेनकम्पिताङ्गी च कोपेन स्फुरिताधराम्

वेगेन तां तु गच्छन्तीं विज्ञाय तदनन्तरम् । विरोधभीतोभगवानन्तर्धानं चकार सः

पलायन्तञ्च कान्तञ्च शान्तं सत्त्वं सुविग्रहम् ।

विलोक्य कम्पिता गोप्यः सुशीलाद्यास्ततो भिया ॥ ११ ॥

विलोक्य लम्पटं तत्रगोपीनांलक्षकोटयः । पुटाञ्जलियुताभीताभक्तिनम्रात्मकन्धराः

रक्षरक्षेत्युक्तवन्त्यो देवीमिति पुनः पुनः । ययुर्भयेनशरणं तस्याश्चरणपङ्कजे ॥१३॥

त्रिलक्षकोटयो गोपाः सुदामादय एव च । ययुर्भयेन शरणं तत्पादाब्जे च नारद !

पलायन्तञ्च कान्तञ्च विज्ञाय परमेश्वरी । पलायन्तीं सहचरीं सुशीलाञ्च शशाप सा

अद्यप्रभृति गोलोकं सा चेदायाति गोपिका ।

सद्यो गमनमात्रेण भस्मसाञ्च भविष्यति ॥ १६ ॥

इत्येवमुक्त्वा तत्रैव देवदेवेश्वरी रुषा। रासेश्वरी रासमध्येरासेशमाजुहाव ह ॥ १७
नाऽऽलोक्य पुरतः कृष्णं राधा विरहकातरा। युगकोटिसमं मेने क्षणभेदेन सुव्रता

हे कृष्ण! प्राणनाथेशाऽऽगच्छ प्राणाधिकप्रिय !।

प्राणाधिष्ठातृदेवेश! प्राणा यान्ति त्वया विना ॥ १६ ॥

स्त्रीगर्वः पतिसौभाग्याद्वर्धते च दिनेदिने। सुखञ्च विपुलं यस्मात्तं सेवेद्धर्मतः सदा
पतिर्बन्धुः कुलस्त्रीणामधिदेवः सदागतिः। परसम्पत्स्वरूपश्च मूर्त्तिमान्भोगदःसदा
धर्मदः सुखदः शश्वत्प्रीतिदः शान्तिदःसदा। सम्मानैर्दीप्यमानश्चमानदोमानखण्डनः
सारात्सारतरः स्वामीबन्धूनां बन्धुवर्धनः। न च भर्तुः समोबन्धुर्बन्धोर्बन्धुषु दृश्यते
भरणादेव भर्ता च पालनात्पतिरुच्यते। शरीरेशाच्च स स्वामी कामदःकान्तउच्यते
बन्धुश्चसुखवृद्ध्याचप्रीतिदानात्प्रियःस्मृतः। ऐश्वर्यदानादीशश्चप्राणेशात्प्राणनायकः
रतिदानाच्च रमणः प्रियो नास्तिप्रियात्परः। पुत्रस्तुस्वामिनःशुक्राज्जायतेतेनसप्रियः
शतपुत्रात्परः स्वामी कुलजानां प्रियःसदा। असत्कुलप्रसूताया कान्तंविज्ञातुमक्षमा
स्नानञ्च सर्वतीर्थेषु सर्वयज्ञेषु दक्षिणा। प्रादक्षिण्यं पृथिव्याश्चसर्वाणि च तपांसिच

सर्वाण्येव व्रतादीनि महादानानि यानि च।

उपोषणानि पुण्यानि यानि यानि श्रुतानि च ॥ २६ ॥

गुरुसेवा विप्रसेवा देवसेवादिकञ्च यत्।

स्वामिनः पादसेवायाः कलां नार्हन्ति षोडशीम् ॥ ३० ॥

गुरुविप्रेन्द्रदेवेषु सर्वेभ्यश्च पतिर्गुरुः। विद्यादाता यथा पुंसा कुलजानां तथाप्रियः
गोपीनांलक्षकोटीनांगोपानाञ्चतथैव च। ब्रह्माण्डानामसङ्ख्यानांतत्रस्थानांतथैवच
विश्वादिगोलकान्तानामीश्वरी यत्प्रसादतः। अहंनजानेतंकान्तस्त्रीस्वभावोदुरत्ययः

इत्युक्त्वा राधिका कृष्णं तत्र दध्यौ स्वभक्तितः।

रुरोद प्रेम्णा सा राधा नाथनाथेति चाऽब्रवीत् ॥३४॥

दर्शनं देहिरमण दीना विरहदुःखिता। अथ सा दक्षिणादेवी ध्वस्तागोलोकतोमुने

सुचिरं च तपस्तप्त्वा विवेश कमलातनौ । अथ देवादयः सर्वेयज्ञं कृत्वासुदुष्करम्
नालभंस्तेफलं ते गांविषण्णाःप्रययुर्विधिम् । विधिर्निवेदनंश्रुत्वादेवादीनांजगत्पतिम्
दध्यौ च सुचिरं भक्त्या प्रत्यादेशमवापसः । नारायणश्चभगवान्महालक्ष्म्याश्चदेहतः
विनिष्कृष्यमर्त्यलक्ष्मींब्रह्मणे दक्षिणांददौ । ब्रह्माददौतां यज्ञाय पूरणार्थञ्चकर्मणाम्
यज्ञः सम्पूज्य विधिवत्तां तुष्टाव तदामुदा । तप्तकाञ्चनवर्णाभांचन्द्रकोटिसमप्रभाम्
अतीव कमनीयाञ्च सुन्दरीं सुमनोहराम् । कमलास्यांकोमलाङ्गींकमलायतलोचनाम्

कमलासनपूज्यां च कमलाङ्गसमुद्भवाम् ।
वह्निशुद्धांशुकाधानां बिम्बोष्ठीं सुदतीं सतीम् ॥ ४२ ॥

बिभ्रतीं कबरीभारं मालतीमाल्यसंयुतम् । ईषद्धास्यप्रसन्नास्यां रत्नभूषणभूषिताम्

सुवेषाढ्याञ्च सुस्नातां मुनिमानसमोहिनीम् ।
कस्तूरीबिन्दुभिः सार्धं सुगन्धिचन्दनेन्दुभिः ॥ ४४ ॥
सिन्दूरबिन्दुनाऽलेनाऽप्यलकाधः स्थलोज्ज्वलाम् ।
सुप्रशस्तनितम्बाढ्यां बृहच्छ्रोणिपयोधराम् ॥ ४५ ॥

कामदेवाधाररूपां कामबाणप्रपीडिताम् । तां दृष्ट्वा रमणीयाञ्च यज्ञो मूर्च्छामवापह
पत्नीं तामेव जग्राह विधिबोधितपूर्वकम् । दिव्यं वर्षशतञ्चैव तां गृहीत्वा तु निर्जने
यज्ञो रेमे मुदा युक्तो रामेशो रमया सह । गर्भं दधार सा देवी दिव्यं द्वादशवर्षकम्
ततः सुषाव पुत्रं च फलं वै सर्वकर्मणाम् । परिपूर्णे कर्मणि च तत्पुत्रः फलदायकः
यज्ञो दक्षिणया सार्धं पुत्रेण चफलेन च । कर्मिणाम्फलदाता चेत्येवं वेदविदोविदुः

यज्ञश्च दक्षिणां प्राप्य पुत्रञ्च फलदायकम् ।
फलं ददौ च सर्वेभ्यः कर्मणां चैव नारद ॥ ५१ ॥

तदा देवादयस्तुष्टाः परिपूर्णमनोरथाः । स्वस्थाने ते ययुः सर्वेधर्मवक्त्रादिदं श्रुतम्
कृत्वाकर्म च कर्ता च तूर्णं दद्याच्च दक्षिणाम् । तत्क्षणं फलमाप्नोति वेदैरुक्तमिदंमुने
कर्मी कर्मणि पूर्णेच तत्क्षणेयदिदक्षिणाम् । नदद्याद्ब्राह्मणेभ्यश्चदैवेनाज्ञानतोऽथवा
मुहूर्ते समतीते तु द्विगुणा सा भवेद्ध्रुवम् । एकरात्रेव्यतीतेचभवेच्छतगुणा च सा

त्रिरात्रे तच्छतगुणा सप्ताहे द्विगुणा ततः । मासेलक्षगुणाप्रोक्ताब्राह्मणानां च वर्धते
सम्वत्सरे व्यतीते तुसात्रिकोटिगुणाभवेत् । कर्मतद्यजमातानांसर्वंवैनिष्फलंभवेत्
स च ब्रह्मस्वहारी च न कर्माऽर्होऽशुचिर्नरः । दरिद्रोव्याधियुक्तश्च तेनपापेन पातकी
तद्गृहाद्याति लक्ष्मीश्च शापं दत्त्वा सुदारुणम् । पितरोनैवगृह्णन्तितद्दत्तंश्राद्धतर्पणम्
एवं सुराश्च तत्पूजां तद्दत्तामग्निराहुतिम् । दत्तं न दीयते दानं ग्रहीतानैव याचते ॥
उभौ तौ नरके यातश्छिन्नरज्जौयथा घटः । नार्पयेद्यजमानश्चेद्याचितश्चापिदक्षिणाम्

भवेद् ब्रह्मस्वापहारी कुम्भीपाकं व्रजेद् ध्रुवम् ।
वर्षलक्षं वसेत्तत्र यमदूतेन ताडितः ॥ ६२ ॥

ततो भवेत्स चाण्डालो व्याधियुक्तो दरिद्रकः । पातयेत्पुरुषान्सप्तपूर्वांश्चसप्तजन्मतः

इत्येवं कथितं विप्रः किं भूयः श्रोतुमिच्छसि ।

नारद उवाच

यत्कर्म दक्षिणाहीनं को भुङ्क्ते तत्फलं मुने !॥ ६४ ॥
पूजाविधिं दक्षिणायाः पुरा यज्ञकृतं वद ।

नारायण उवाच

कर्मणोऽदक्षिणस्यैव कुत एव फलं मुने !॥ ६५ ॥

सदक्षिणे कर्मणि च फलमेव प्रवर्तते । अदक्षिणं च यत्कर्म तद्भुङ्क्ते च बलिर्मुने ॥
बलये तत्प्रदत्तञ्च वामनेन पुरा मुने । अश्रोत्रियः श्राद्धद्रव्यमश्रद्धादानमेव च ॥ ६७ ॥
वृषलीपतिविप्राणां पूजाद्रव्यादिकञ्चयत् । असद्द्विजैः कृतं यज्ञमशुचेः पूजनञ्च यत्
गुरावभक्तस्य कर्मबलिभुङ्क्तेनसंशयः । दक्षिणायाश्चयद्ध्यानंस्तोत्रंपूजाविधिक्रमम्

तत्सर्वं कण्वशाखोक्तं प्रवक्ष्यामि निशामय ।
पुरा सम्प्राप्य तां यज्ञः कर्मदक्षाञ्च दक्षिणाम् ॥ ७० ॥
मुमोहाऽस्याः स्वरूपेण तुष्टाव कामकातरः ।

यज्ञ उवाच

पुरा गोलोकगोपी त्वं गोपीनां प्रवरावरा ॥ ७१ ॥

राधासमातत्सखीचश्रीकृष्णप्रेयसीप्रिया। कार्त्तिकी पूर्णिमायांतुरासेराधामहोत्सवे
आविर्भूतादक्षिणांसालक्ष्म्याश्चतेनदक्षिणा। पुरात्वञ्चसुशीलाख्याख्याताशीलेनशोभने

लक्ष्मी दक्षांसभागात्त्वं राधाशापाच्च दक्षिणा।
गोलोकात्त्वं परिभ्रष्टा मम भाग्यादुपस्थिता ॥ ७४ ॥

कृपां कुरुमहाभागे! मामेव स्वामिनं कुरु। कर्मिणां कर्मणां देवी त्वमेवफलदासदा

त्वया विना च सर्वेषां सर्वं कर्म च निष्फलम्।
त्वया विना तथा कर्म कर्मिणां च न शोभते ॥ ७६ ॥

ब्रह्मविष्णुमहेशाश्च दिक्पालादय एव च। कर्मणश्च फलं दातुं न शक्ताश्चत्वयाविना
कर्मरूपी स्वयं ब्रह्मा फलरूपी महेश्वरः। यज्ञरूपी विष्णुरहं त्वमेषां साररूपिणी ॥
फलदातृपरं ब्रह्म निर्गुणा प्रकृतिः परा। स्वयं कृष्णश्च भगवान्स चशक्तस्त्वयासह
त्वमेव शक्तिः कान्ते मे शश्वज्जन्मनि जन्मनि। सर्वकर्मणि शक्तोऽहंत्वयासहवरानने
इत्युक्त्वा च पुरस्तस्थौ यज्ञाधिष्ठातृदेवता। तुष्टा बभूव सा देवी भेजेतंकमलाकला
इदं च दक्षिणास्तोत्रं यज्ञकालेच यः पठेत्। फलंच सर्वयज्ञानां प्राप्नोतिनाऽत्रसंशयः
राजसूये वाजपेये गोमेधे नरमेधके। अश्वमेधे लाङ्गले च विष्णुयज्ञे यशस्करे ॥ ८३॥
धनदे भूमिदे पूर्ते फलदे गजमेधके। लोह यज्ञे स्वर्णयज्ञे रत्नयज्ञेऽथ ताम्रके ॥ ८४ ॥
शिवयज्ञे रुद्रयज्ञे शक्रयज्ञे च बन्धुके। वृष्टौ वरुणयागे च कण्डके वैरिमर्दने ॥ ८५ ॥
शुचियज्ञे धर्मयज्ञेऽध्वरे च पापमोचने। ब्रह्माणी कर्मयागे च योनियागे च भद्रके ॥
एतेषां च समारम्भे इदं स्तोत्रं च यःपठेत्। निर्विघ्नेनचतत्कर्मसर्वंभवतिनिश्चितम्
इदं स्तोत्रञ्च कथितं ध्यानंपूजाविधिं शृणु। शालग्रामेघटेवाऽपिदक्षिणांपूजयेत्सुधीः

लक्ष्मीदक्षांससम्भूतां दक्षिणां कमलाकलाम्।
सर्वकर्मसुदक्षाञ्च फलदां सर्वकर्मणाम् ॥ ८९ ॥
विष्णोः शक्तिस्वरूपाञ्च पूजितां वन्दितां शुभाम्।
शुद्धिदां शुद्धिरूपाञ्च सुशीलां शुभदां भजे ॥ ९० ॥

ध्यात्वाऽनेनैव वरदां मूलेन पूजयेत्सुधीः। दत्त्वा पाद्यादिकं देव्यै वेदोक्तेनैव नारद!

ॐ श्रीं क्लीं ह्रीं दक्षिणायै स्वाहेति च विचक्षणः ।
पूजयेद्विधिवद्भक्त्या दक्षिणां सर्वपूजिताम् ॥ ६२ ॥

इत्येवं कथितं ब्रह्मन्दक्षिणाख्यानमेव च । सुखदं प्रीतिदं चैव फलदं सर्वकर्मणाम्
इदञ्च दक्षिणाख्यानं यः शृणोति समाहितः । अङ्गहीनश्च तत्कर्म न भवेद्भारते भुवि
अपुत्रो लभते पुत्रं निश्चितं च गुणान्वितम् । भार्याहीनो लभेद्भार्यां सुशीलां सुन्दरीं पराम्
वरारोहां पुत्रवतीं विनीतां प्रियवादिनीम् । पतिव्रतां च शुद्धां च कुलजां च वधूं वराम्
विद्याहीनो लभेद्विद्यां धनहीनो लभेद्धनम् । भूमिहीनो लभेद्भूमिं प्रजाहीनो लभेत्प्रजाम्
सङ्कटे बन्धुविच्छेदे विपत्तौ बन्धने तथा । मासमेकमिदं श्रुत्वा मुच्यते नाऽत्र संशयः

इति श्रीदेवीभागवते माहापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे
नारायणनारदसम्वादे दक्षिणोपाख्याने पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

## षट्चत्वारिंशोऽध्यायः

### षष्ठ्युपाख्यानवर्णनम्

नारद उवाच

अनेकानां च देवीनां श्रुतमाख्यानमुत्तमम् । अन्यासां चरितं ब्रह्मन्वद वेदविदाम्वर!

नारायण उवाच

सर्वासां चरितं विप्र वेदेषु त्र पृथक्पृथक् । पूर्वोक्तानाञ्च देवीनां कासां श्रोतुमिहेच्छसि

नारद उवाच

षष्ठी मङ्गलचण्डी च मनसा प्रकृतेः कला । उत्पत्तिमासां चरितं श्रोतुमिच्छामि तत्त्वतः

नारायण उवाच

षष्ठांशा प्रकृतेर्या च सा च षष्ठी प्रकीर्तिता । बालकानामधिष्ठात्री विष्णुमाया च बालदा
मातृकासु च विख्याता देवसेनाभिधा च या ।

प्राणाधिकप्रिया साध्वी स्कन्दभार्या च सुव्रता ॥ ५ ॥

आयुःप्रदा च बालानां धात्री रक्षणकारिणी ।

सततं शिशुपार्श्वस्था योगेन सिद्धियोगिनी ॥ ६ ॥

तस्याः पूजाविधिं ब्रह्मन्नितिहासमिदं शृणु । यच्छ्रुतं धर्मवक्त्रेण सुखदंपुत्रदं परम्

राजा प्रियव्रतश्चाऽऽसीत्स्वायम्भुवमनोः सुतः ।

योगीन्द्रो नोद्वहद्भार्यां तपस्यासु रतः सदा ॥ ८ ॥

ब्रह्माज्ञया च यत्नेन कृतदारो बभूव ह । सुचिरं कृतदारश्च न लेभे तनयं मुने !॥ ९ ॥

पुत्रेष्टियज्ञं तं चापि कारयामास कश्यपः । मालिन्यै तस्य कान्तायै मुनिर्यज्ञचरुं ददौ

भुक्त्वा च तं चरुं तस्याः सद्यो गर्भो बभूव ह ।

दधार तं च सा देवी दैवं द्वादशवत्सरम् ॥ ११ ॥

ततः सुषाव सा ब्रह्मन्कुमारं कनकप्रभम् । सर्वावयवसम्पन्नं मृतमुत्तारलोचनम्

तं दृष्ट्वा रुरुदुः सर्वा नार्यश्च बान्धवस्त्रियः । मूर्च्छामवाप तन्माता पुत्रशोकेन भूयसा

श्मशानं च ययौ राजा गृहीत्वा बालकं मुने !।

रुरोद तत्र कान्तारे पुत्रं कृत्वा स्ववक्षसि ॥ १४ ॥

नोत्सृजद्बालकं राजा प्राणांस्त्यक्तुं समुद्यतः ।

ज्ञानयोगं विसस्मार पुत्रशोकात्सुदारुणात् ॥ १५ ॥

एतस्मिन्नन्तरे तत्र विमानञ्च ददर्श सः । शुद्धस्फटिकसङ्काशं मणिराजविनिर्मितम्

तेजसा ज्वलितं शश्वच्छोभितं क्षौमवाससा ।

नानाचित्रविचित्राढ्यं पुष्पमालाविराजितम् ॥ १७ ॥

ददर्श तत्र देवीं च कमनीयांमनोहराम् । श्वेतचम्पकवर्णाभां शश्वत्सुस्थिरयौवनाम्

ईषद्धास्यप्रसन्नास्यां रत्नभूषणभूषिताम् । कृपामयीं योगसिद्धांभक्ताऽनुग्रहकातराम्

दृष्ट्वा तां पुरतो राजा तुष्टाव परमादरम् । चकार पूजनं तस्या विहाय बालकं भुवि

पप्रच्छ राजा तां तुष्टां ग्रीष्मसूर्यसमप्रभाम् ।

तेजसा ज्वलितां शान्तां कान्तां स्कन्दस्य नारद !॥ २१ ॥

राजोवाच

का त्वं सुशोभने! कान्ते! कस्य कान्ताऽसि सुव्रते !।
कस्य कन्या वरारोहे! धन्या मान्या च योषिताम् ॥ २२ ॥

नृपेन्द्रस्य वचःश्रुत्वा जगन्मङ्गलचण्डिका । उवाच देवसेनासा देवानां रणकारिणी
देवानां दैत्यग्रस्तानां पुरासेना बभूव सा । जयं ददौ सा तेभ्यश्चदेवसेना च तेन सा

श्रीदेवसेनोवाच

ब्रह्मणो मानसीकन्या देवसेनाऽहमीश्वरी । सृष्ट्वा मां मनसाधातादद्दौस्कन्दायभूमिप
मातृकासुचविख्यातास्कन्दभार्याचसुव्रता । विश्वेषष्ठीतिविख्याताषष्ठांशाप्रकृतेःपरा
अपुत्राय पुत्रदाऽहं प्रियादात्री प्रियाय च । धनदाऽहंदरिद्रेभ्यःकर्मिभ्यश्च स्वकर्मदा
सुखं दुःखं भयं शोको हर्षोमङ्गलमेव च । सम्पत्तिश्चविपत्तिश्च सर्वं भवति कर्मणा
कर्मणा बहुपुत्रश्च वंशहीनः स्वकर्मणा । कर्मणा मृतपुत्रश्च कर्मणा चिरजीवनः ॥
कर्मणा गुणवांश्चैव कर्मणा चाऽङ्गहीनकः । कर्मणा बहुभार्यश्च भार्याहीनश्च कर्मणा

कर्मणा रूपवान्धर्मी रोगी शश्वत्स्वकर्मणा ।
कर्मणा च भवेद्व्याधिः कर्मणाऽऽरोग्यमेव च ॥ ३१ ॥

तस्मात्कर्म परंराजन्सर्वेभ्यश्च श्रुतौश्रुतम् । इत्येवमुक्त्वासादेवीगृहीत्वाबालकंमुने!
महाज्ञानेन सा देवी जीवयामास लीलया । राजा ददर्श तं बालंसंस्मितं कनकप्रभम्
देवसेना च पश्यन्तं नृपमापृच्छ्य सा तदा । गृहीत्वा बालकंदेवी गगनंगन्तुमुद्यता
पुनस्तुष्टाव तां राजा शुष्ककण्ठोष्ठतालुकः । नृपस्तोत्रेण सादेवी परितुष्टा बभूव ह

उवाच तं नृपं ब्रह्मन्! वेदोक्तं कर्म निर्मितम् ।

देव्युवाच

त्रिषु लोकेषु त्वं राजा स्वायम्भुवमनोः सुतः ॥ ३६ ॥

ममपूजाञ्चसर्वत्रकारयित्वास्वयं कुरु । तदादास्यामि पुत्रं ते कुलपद्मं मनोहरम् ॥
सुव्रतं नामविख्यातंगुणवन्तंसुपण्डितम् । जातिस्मरञ्चयोगीन्द्रंनारायणकलात्मकम्
शतक्रतुकरं श्रेष्ठं क्षत्त्रियाणां च वन्दितम् । मत्तमातङ्गलक्षाणांधृतवन्तंबलं शुभम्

धनिनं गुणिनं शुद्धं विदुषांप्रियमेव च । योगिनांज्ञानिनांचैवसिद्धिरूपंतपस्विनाम्
यशस्विनञ्च लोकेषु दातारं सर्वसम्पदाम् । इत्येवमुक्त्वा सादेवीतस्मैतद्वालकंददौ
राजा चकार स्वीकारं पूजार्थञ्च प्रियव्रतः । जगामदेवीस्वर्गञ्च दत्त्वातस्मैशुभं वरम्
आजगाम सहामात्यः स्वगृहं हृष्टमानसः । आगत्य कथयामास वृत्तान्तं पुत्रहेतुकम्
श्रुत्वा बभूवुः सन्तुष्टा नरा नार्यश्च नारद !। मङ्गलं कारयामास सर्वत्र पुत्रहेतुकम्
देवीं च पूजयामास ब्राह्मणेभ्यो धनं ददौ । राजाचप्रतिमासेषुशुक्लषष्ठ्यांमहोत्सवम्

षष्ठ्या देव्याश्च यत्नेन कारयामास सर्वतः ।
बालानां सूतिकागारे षष्ठाहे यत्नपूर्वकम् ॥ ४६ ॥

तत्पूजां कारयामास चैकविंशतिवासरे । बालानां शुभकार्ये च शुभाऽन्नप्राशने तथा
सर्वत्र वर्धयामास स्वयमेव चकार ह । ध्यानं पूजाविधानञ्चस्तोत्रंमत्तो निशामय
यच्छ्रुतं धर्मवक्त्रेण कौथुमोक्तं च सुव्रत !। शालग्रामे घटेवाऽथवटमूलेऽथवा मुने

भित्त्यां पुत्तलिकां कृत्वा पूजयेद्वा विचक्षणः ।
षष्ठांशां प्रकृतेः शुद्धां प्रतिष्ठाप्य च सुप्रभाम् ॥ ५० ॥

सुपुत्रदां च शुभदां दयारूपां जगत्प्रसूम् । श्वेतचम्पकवर्णाभां रत्नभूषणभूषिताम्
पवित्ररूपां परमां देवसेनां परांभजे । इतिध्यात्वा स्वशिरसि पुष्पंदत्वा विचक्षणः
पुनर्ध्यात्वा च मूलेन पूजयेत्सुव्रतां सतीम् । पाद्यार्घ्याचमनीयैश्चगन्धपुष्पप्रदीपकैः
नैवेद्यैर्विविधैश्चापि फलेन शोभनेन च । ॐ ह्रींषष्ठीदेव्यैस्वाहेति विधिपूर्वकम् ॥
अष्टाक्षरं महामन्त्रं यथाशक्ति जपेन्नरः । ततः स्तुत्वा च प्रणमेद्भक्तियुक्तः समाहितः
स्तोत्रञ्च सामवेदोक्तं वरंपुत्रफलप्रदम् । अष्टाक्षरं महामन्त्रं लक्षधा यो जपेत्ततः
सुपुत्रञ्च लभेन्नूनमित्याह कमलोद्भवः । स्तोत्रं शृणु मुनिश्रेष्ठ सर्वकामशुभावहम् ॥
वाञ्छाप्रदञ्च सर्वेषां गूढं वेदेषु नारद !। नमो देव्यै महादेव्यै सिद्ध्यैशान्त्यैनमोनमः
शुभायै देवसेनायै षष्ठ्यै देव्यैनमोनमः । वरदायै पुत्रदायै धनदायै नमो नमः ॥ ५६

सुखदायै मोक्षदायै षष्ठ्यै देव्यै नमोनमः ।
षष्ठ्यै षष्ठांशरूपायै सिद्धायै च नमो नमः ॥ ६० ॥

मायायै सिद्धयोगिन्यै षष्ठीदेव्यै नमो नमः। सारायै शारदायै च परादेव्यै नमोनमः बालाधिष्ठातृदेव्यै च षष्ठीदेव्यै नमोनमः। कल्याणदायै कल्याण्यै फलदायै च कर्मणाम् प्रत्यक्षायै स्वभक्तानां षष्ठ्यै देव्यै नमोनमः। पूज्यायै स्कन्दकान्तायै सर्वेषां सर्वकर्मसु देवरक्षणकारिण्यै षष्ठीदेव्यै नमोनमः। शुद्धसत्त्वस्वरूपायै वन्दितायै नृणां सदा हिंसाक्रोधवर्जितायै षष्ठीदेव्यै नमोनमः। धनं देहि प्रियां देहि पुत्रं देहि सुरेश्वरी मानं देहि जयं देहि द्विषो जहि महेश्वरि !। धर्मं देहि यशोदेहि षष्ठीदेव्यै नमोनमः

देहि भूमिं प्रजां देहि विद्यां देहि सुपूजिते !।
कल्याणञ्च जयं देहि षष्ठीदेव्यै नमो नमः ॥ ६७ ॥

इति देवीञ्च संस्तूय लेभे पुत्रं प्रियव्रतः। यशस्विनं च राजेन्द्रः षष्ठीदेव्याःप्रसादतः षष्ठीस्तोत्रमिदंब्रह्मन्यः श्रृणोति तु वत्सरम्। अपुत्रो लभतेपुत्रं वरं सुचिरजीवनम् वर्षमेकं च या भक्त्या सम्पूज्येदंश्रृणोति च। सर्वपापाद्विनिर्मुक्तोमहावन्ध्याप्रसूयते वीरं पुत्रञ्च गुणिनं विद्यावन्तं यशस्विनम्। सुचिरायुष्यवन्तं च सूतेदेवीप्रसादतः

काकवन्ध्या च या नारी मृतवत्सा च या भवेत्।
वर्षं श्रुत्वा लभेत्पुत्रं षष्ठीदेवीप्रसादतः ॥ ७२ ॥
रोगयुक्ते च बाले च पिता माता श्रृणोति चेत्।
मासेन मुच्यते बालः षष्ठीदेवीप्रसादतः ॥ ७३ ॥

इतिश्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे नारायणनारदसम्वादे षष्ठ्युपाख्याने षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

## सप्तचत्वारिंशोऽध्यायः

### मङ्गलचण्ड्युपाख्यानवर्णनम्

श्रीनारायण उवाच

कथितं षष्ठ्युपाख्यानं ब्रह्मपुत्र! यथाऽऽगमम्। देवीमङ्गलचण्डीच तदाख्यानं निशामय
तस्याः पूजादिकं सर्वं धर्मवक्त्रेण यच्छ्रुतम्। श्रुतिसंमतमेवेष्टं सर्वेषां विदुषामपि
दक्षा या वर्तते चण्डीकल्याणेषुच मङ्गला। मङ्गलेषुचया दक्षा साच मङ्गलचण्डिका
पूज्यायावर्ततेचण्डीमङ्गलोऽपिमहीसुतः। मङ्गलाऽभीष्टदेवीया सावामङ्गलचण्डिका
मङ्गलो मनुवंश्यश्च सप्तद्वीपधरापतिः। तस्य पूज्याऽभीष्टदेवी तेन मङ्गलचण्डिका
मूर्तिभेदेन सा दुर्गा मूलप्रकृतिरीश्वरी। कृपारूपाऽतिप्रत्यक्षा योषितामिष्टदेवता॥
प्रथमे पूजिता सा च शङ्करेण परात्परा। त्रिपुरस्य वधे घोरे विष्णुना प्रेरितेन च॥
ब्रह्मन्ब्रह्मोपदेशेन दुर्गतेन च सङ्कटे। आकाशात्पतिते याने दैत्येन पातितेरुषा॥ ८॥
ब्रह्मविष्णूपदिष्टश्च दुर्गां तुष्टाव शङ्करः। सा च मङ्गलचण्डी या बभूव रूपभेदतः॥
उवाच पुरतः शम्भोर्भयंनास्तीति ते प्रभो!। भगवान्वृषरूपश्चसर्वेशस्ते भविष्यति
युद्धशक्तिस्वरूपाऽहं भविष्यामि न संशयः। मायात्मना च हरिणा सहायेनवृषध्वज

जहि दैत्यं स्वशत्रुं च सुराणां पदघातकम्।

इत्युक्त्वान्तर्हिता देवी शम्भोः शक्तिर्बभूव सा॥ १२॥

विष्णुदत्तेन शस्त्रेण जघानतमुमापतिः। मुनीन्द्रपतिते दैत्ये सर्वे देवा महर्षयः॥१३
तुष्टुवुः शङ्करं देवं भक्तिनम्रात्मकन्धराः। सद्यः शिरसि शम्भोश्च पुष्पवृष्टिर्बभूवह
ब्रह्माविष्णुश्चसन्तुष्टोददौतस्मै शुभाशिषम्। ब्रह्मविष्णूपदिष्टश्चसुस्नातःशङ्करस्तथा
पूजयामासतांभक्त्यादेवीं मङ्गलचण्डिकाम्। पाद्यार्घ्याचमनीयैश्च वस्त्रैश्चविविधैरपि
पुष्पचन्दननैवेद्यैर्भक्त्या नानाविधैर्मुने। छागैर्मेषैश्च महिषैर्गवयैः पक्षिभिस्तथा॥
वस्त्रालङ्कारमाल्यैश्च पायसैः पिष्टकैरपि। मधुभिश्च सुधाभिश्च फलैर्नानाविधैरपि॥

सङ्गीतैर्नर्तकैर्वाद्यैरुत्सवैर्नामकीर्तनैः। ध्यात्वा माध्यन्दिनोक्तेन ध्यानेन भक्तिपूर्वकम्
ददौ द्रव्याणि मूलेन मन्त्रेणैव च नारद !। ॐह्रींश्रींक्लींसर्वपूज्येदेवि! मङ्गलचण्डिके
हूंहूं फट्स्वाहाऽप्येकविंशाक्षरो मन्त्रः। पूज्यः कल्पतरुश्चैव भक्तानां स च कामदः॥
दशलक्षजपेनैव मन्त्रसिद्धिर्भवेद्ध्रुवम्। ध्यानञ्च श्रूयतां ब्रह्मन्वेदोक्तं सर्वसम्मतम्
देवींषोडशवर्षीयांशश्वत्सुस्थिरयौवनाम्। बिम्बोष्ठींसुदतींशुद्धां शतपद्मनिभाननाम्

श्वेतचम्पकवर्णाभां सुनीलोत्पललोचनाम्।

जगद्धात्रीञ्च दात्रीञ्च सर्वेभ्यः सर्वसम्पदाम्॥ २४॥

संसारसागरे घोरे ज्योतिरूपां सदा भजे। देव्याश्च ध्यानमित्येवं स्तवनंश्रूयतांमुने

महादेव उवाच

रक्ष रक्ष जगन्मातर्देवि! मङ्गलचण्डिके !। हारिके ! विपदां राशेर्हर्षमङ्गलकारिके !॥
हर्षमङ्गलदक्षे! च हर्षमङ्गलदायिके !। शुभे मङ्गलदक्षे ! च शुभे ! मङ्गलचण्डिके !॥
मङ्गले! मङ्गलार्हे! च सर्वमङ्गलमङ्गले !। सतां मङ्गलदे! देवि ! सर्वेषां मङ्गलालये !॥
पूज्ये ! मङ्गलवारे च मङ्गलाभीष्टदेवते !। पूज्ये ! मङ्गलभूपस्य मनुवंशस्य सन्ततम्॥
मङ्गलाधिष्ठातृ! देवि! मङ्गलानाञ्च मङ्गले !। संसारमङ्गलाधारे! मोक्षमङ्गलदायिनि !॥
सारे! च मङ्गलाधारे पारे! च सर्वकर्मणाम्। प्रतिमङ्गलवारे च पूज्ये! मङ्गसुखप्रदे !
स्तोत्रेणानेन शम्भुश्चस्तुत्वामङ्गलचण्डिकाम्। प्रतिमङ्गलवारेचपूजांदत्त्वागतःशिवः
प्रथमे पूजिता देवी शिवेन सर्वमङ्गला। द्वितीये पूजिता सा च मङ्गलेन ग्रहेण च॥
तृतीये पूजिता भद्रा मङ्गलेन नृपेण च। चतुर्थे मङ्गलेवारे सुन्दरीभिः प्रपूजिता॥
पञ्चमे मङ्गलाकाङ्क्षिनरैर्मङ्गलचण्डिका। पूजिता प्रतिविश्वेषु विश्वेशपूजिता सदा॥
ततः सर्वत्र सम्पूज्या बभूव परमेश्वरी। देवैश्च मुनिभिश्चैव मानवैर्मनुभिर्मुने॥३६॥
देव्याश्च मङ्गलस्तोत्रं यः शृणोतिनसमाहितः। तन्मङ्गलंभवेत्तस्य न भवेत्तदमङ्गलम्

वर्धते पुत्रपौत्रैश्च मङ्गलञ्च दिने दिने॥ ३७॥

श्रीनारायण उवाच

उक्तं द्वयोरुपाख्यानं ब्रह्मपुत्र! यथागमम्। श्रूयतां मनसाख्यानं यच्छ्रुतं धर्मवक्त्रतः

सा च कन्या भगवती कश्यपस्य च मानसी ।
तेनैव मनसा देवी मनसा या च दीव्यति ॥ ३६ ॥
मनसा जायते या च परमात्मानमीश्वरम् । तेनसा मनसा देवी तेन योगेन दीव्यति
आत्मारामा च सा देवी वैष्णवीसिद्ध योगिनी ।
त्रियुगञ्च तपस्तप्त्वा कृष्णस्य परमात्मनः ॥ ४१ ॥
जरत्कारुशरीरञ्च दृष्ट्वा यत्क्षीणमीश्वरः । गोपीपतिर्नाम चक्रे जरत्कारुरिति प्रभुः ॥
वाञ्छितञ्च ददौ तस्मैकृपयाच कृपानिधिः । पूजाञ्च कारयामास चकारचस्वयंप्रभुः
स्वर्गे च नागलोके च पृथिव्यां ब्रह्मलोकतः । भृशं जगत्सुगौरीसासुन्दरीचमनोहरा
जगद्गौरीतिविख्यातातेनसापूजितासती । शिवशिष्याचसादेवीतेन शैवी प्रकीर्तिता
विष्णुभक्ताऽतीवशश्वद्वैष्णवीतेनकीर्तिता । नागानांप्राणरक्षित्री यज्ञेपारीक्षितस्यच
नागेश्वरीति विख्याता सा नागभगिनीति च ।
विषं संहर्तुमीशा या तेन विषहरी स्मृता ॥ ४७ ॥
सिद्धयोगहरात्प्राप तेनसा सिद्धयोगिनी । महाज्ञानञ्च योगञ्च मृतसञ्जीवनीं पराम्
महाज्ञानयुतांताञ्चप्रवदन्तिमनीषिणः । आस्तीकस्यमुनीन्द्रस्यमातासापितपस्विनी
आस्तीकमाताविज्ञाताजगत्यां सुप्रतिष्ठिता । प्रियामुनेर्जरत्कारोर्मुनीन्द्रस्यमहात्मनः
योगिनोविश्वपूज्यस्य जरत्कारुप्रियाततः । जरत्कारुर्जगद्गौरीमनसासिद्धियोगिनी
वैष्णवीनागभगिनीशैवी नागेश्वरी तथा । जरत्कारुप्रियाऽऽस्तीकमाताविषहरेतिच
महाज्ञानयुता चैव सा देवी विश्वपूजिता ।
द्वादशैतानि नामानि पूजाकाले तु यःपठेत् ॥ ५३ ॥
तस्य नागभयं नास्ति तस्य वंशोद्भवस्य च । नागभीतेच शयने नागग्रस्तेचमन्दिरे
नागशोभे महादुर्गे नागवेष्टितविग्रहे । इदं स्तोत्रं पठित्वा तु मुच्यते नाऽत्र संशयः
नित्यं पठेद्यस्तं दृष्ट्वा नागवर्गः पलायते । दशलक्षजपेनैव स्तोत्रसिद्धिर्भवेन्नृणाम् ॥
स्तोत्रसिद्धिर्भवेद्यस्यसविषंभोक्तुमीश्वरः । नागैश्च भूषणं कृत्वा सभवेन्नागवाहनः
नागासनो नागतल्पो महासिद्धो भवेन्नरः ।

अन्ते च विष्णुना सार्धं क्रीडत्येव दिवानिशम् ॥ ५८ ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे नारायणनारदसम्वादे मङ्गलचण्डीमनसयोःक्रमेणाख्यानवर्णनंनाम सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

# अष्टचत्वारिंशोऽध्यायः

## समनसाध्यानादिमनसोपाख्यानम्

श्रीनारायण उवाच

मत्तः पूजाविधानञ्च श्रूयतां मुनिपुङ्गव !। ध्यानञ्च सामवेदोक्तंप्रोक्तं देवीविधानकम्
श्वेतचम्पकवर्णाभांरत्नभूषणभूषिताम् । वह्निशुद्धांशुकाधानां नागयज्ञोपवीतिनीम्
महाज्ञानयुतां तां च प्रवरज्ञानिनां वराम् ।
सिद्धाधिष्ठातृदेवीञ्च सिद्धां सिद्धिप्रदां भजे ॥ ३ ॥
इतिध्यात्वा च तां देवीं मूलेनैव प्रपूजयेत् । नैवेद्यैर्विविधैर्धूपैः पुष्पगन्धानुलेपनैः
मूलमन्त्रैश्च वेदोक्तैर्भक्तानां वाञ्छितप्रदः । मुने कल्पतरुर्नाम सुसिद्धो द्वादशाक्षरः ॥
ॐह्रींश्रींक्लींऐं मनसादेव्यै स्वाहेतिकीर्त्तितः । पञ्चलक्षजपेनैवमन्त्रसिद्धिर्भवेन्नृणाम्
मन्त्रसिद्धिर्भवेत्तस्य स सिद्धोजगतीले । सुधासमं विषंतस्यधन्वन्तरिसमो भवेत्
ब्रह्मन्स्नात्वा तु सङ्क्रात्यां गूढशाल सुयत्नतः ।
आवाह्य देवीमीशानां पूजयेद्योऽतिभक्तितः ॥ ८ ॥
पञ्चम्यांमनसाध्यायन्देव्यैदद्याच्चयोबलिम् । धनवान्पुत्रवांश्चैवकीर्तिमान्सभवेद्ध्रुवम्
पूजाविधानं कथितं तदाख्यानं निशामय ।
कथयामि महाभाग! यच्छ्रुतं धर्मवक्त्रतः ॥ १० ॥
पुरा नागभयाक्रान्ता बभूवुर्मानवाभुवि । गतास्ते शरणं सर्वे कश्यपं मुनिपुङ्गवम् ॥
मन्त्रांश्च ससृजे भीतः कश्यपो ब्रह्मणान्वितः । वेदबीजानुसारेण चोपदेशेन ब्रह्मणः

मन्त्राधिष्ठातृदेवीं तां मनसा ससृजे तथा। तपसा मनसा तेन बभूवमनसा च सा॥
कुमारीसाचसम्भूता जगामशङ्करालयम्। भक्त्यासम्पूज्य कैलासेतुष्टावचन्द्रशेखरम्
दिव्यवर्षसहस्रं तं सिषेवे च मुनेः सुता। आशुतोषो महेशश्च तां च तुष्टो बभूव ह
महाज्ञानं ददौ तस्यै पाठयामास साम च। कृष्णमन्त्रं कल्पतरुं ददावष्टाक्षरं मुने!
लक्ष्मीमायाकामबीजं ङेन्तं कृष्णपदं ततः। त्रैलोक्यमङ्गलंनाम कवचं पूजनक्रमम्
पुरश्चर्याक्रमं चाऽपि वेदोक्तं सर्वसम्मतम्। प्राप्यमृत्युञ्जयान्मन्त्रंसासतीचमुनेःसुता
जगाम तपसे साध्वी पुष्करं शङ्कराज्ञया। त्रियुगञ्चतपस्तप्त्वाकृष्णस्यपरमात्मनः
सिद्धा बभूव सा देवीददर्शपुरतः प्रभुम्। दृष्ट्वा कृशाङ्गीं बालाञ्चकृपयाचकृपयानिधिः

पूजाञ्च कारयामास चकार च स्वयं हरिः।
वरञ्च प्रददौ तस्यै पूजिता त्वं भवे भव॥ २१॥

वरं दत्त्वा च कल्याण्यै ततश्चान्तर्दधे हरिः। प्रथमे पूजिता सा चकृष्णेनपरमात्मना
द्वितीये शङ्करेणैव कश्यपेन सुरेण च। मुनिना मनुना चैव नागेन मानवादिभिः॥
बभूव पूजितासा च त्रिषु लोकेषु सुव्रता। जरत्कारुमुनीन्द्राय कश्यपस्तां ददौपुरा
अयाचितो मुनिश्रेष्ठोजग्राहब्राह्मणाज्ञया। कृत्वोद्वाहंमहायोगीविश्रान्तस्तपसाचिरम्
सुष्वाप देव्या जघने वटमूले च पुष्करे। निद्रांजगामसमुनिःस्मृत्वानिद्रेशमीश्वरम्
जगामाऽस्तंदिनकरःसायंकालउपस्थिते। सञ्चिन्त्यमनसासाध्वीमनसासापतिव्रता

धर्मलोपभयेनैव चकाराऽऽलोचनं सती।
अकृत्वा पश्चिमां सन्ध्यां नित्याञ्चैव द्विजन्मनाम्॥ २८॥

ब्रह्महत्यादिकं पापंलभिष्यति पतिर्मम। नोपतिष्ठतियःपूर्वांनोपास्तेयस्तुपश्चिमाम्

स सर्वत्राऽशुचिर्नित्यं ब्रह्महत्यादिकं लभेत्।
वेदोक्तमिति सञ्चिन्त्य बोधयमास सुन्दरी॥ ३०॥
स च बुद्धो मुनिश्रेष्ठस्तां चुकोप भृशं मुने!।

मुनिरुवाच

कथं मे सुखिनः साध्वि! निद्राभङ्गः कृतस्त्वया॥ ३१॥

व्यर्थं व्रतादिकंतस्यायाभर्तुश्चाऽपकारिणी। तपश्चाऽनशनश्चैव व्रतं दानादिकञ्चयत्
भर्तुरप्रियकारिण्याः सर्वंभवतिनिष्फलम्। ययाप्रियःपूजितश्चश्रीकृष्णःपूजितस्तया
पतिव्रताव्रतार्थञ्चपतिरूपोहरिः स्वयम्। सर्वदानं सर्वयज्ञः सर्वतीर्थनिषेवणम्॥ ३४
सर्वंव्रतं तपः सर्वमुपवासादिकञ्चयत्। सर्वधर्मश्च सत्यञ्च सर्वदेवप्रपूजनम्॥ ३५
तत्सर्वंस्वामिसेवायाःकलांनार्हन्ति षोडशीम्। पुण्ये चभारतेवर्षेपतिसेवांकरोतिया
वैकुण्ठे स्वामिना सार्धं सा याति ब्रह्मणः पदम्।
विप्रियं कुरुते भर्तुर्विप्रियं वदति प्रियम्॥ ३७॥
असत्कुले प्रसूता हि तत्फलं श्रूयतांसति!। कुम्भीपाकंव्रजेत्साचयावच्चन्द्रदिवाकरौ
ततोभवतिचाण्डालीपतिपुत्रविवर्जिता। इत्युक्त्वाचमुनिश्रेष्ठो बभूव स्फुरिताधरः
चकम्पे तेन सा साध्वी भयेनोवाच तं पतिम्।

साध्व्युवाच

सन्ध्यालोपभयेनैव निद्राभङ्गः कृतस्तव॥ ४०॥
कुरुशान्तिं महाभाग दुष्टायाममसुव्रत। शृङ्गाराऽऽहारनिद्राणां यश्च भङ्गं करोति वै
स व्रजेत्कालसूत्रञ्चैयावच्चन्द्रदिवाकरौ। इत्युक्त्वा मनसादेवीस्वामिनश्चरणाम्बुजे
पपात भक्त्या भीता च रुरोद च पुनःपुनः। कुपितञ्चमुनिं दृष्ट्वा श्रीसूर्यं शप्तुमुद्यतम्
तत्राऽऽजगाम भगवान्सन्ध्यया सह नारद!।
तत्राऽऽगत्य मुनिं सम्यगुवाच भास्करः स्वयम्॥ ४४॥
विनयेन च भीतश्च तया सह यथोचितम्।

भास्कर उवाच

सूर्यास्तसमयं दृष्ट्वा साध्वी धर्मभयेन च॥ ४५॥
बोधयामास त्वां विप्र! शरणंत्वामहं गतः। क्षमस्वभगवन्ब्रह्मन्मांशप्तुंनोचितंमुने!
ब्राह्मणानां च हृदयं नवनीतसमं सदा। तेषां क्षणार्धं क्रोधश्च यतो भस्मभवेज्जगत्
पुनःस्रष्टुं द्विजः शक्तो न तेजस्वी द्विजात्परः।
ब्राह्मणो ब्रह्मणो वंशः प्रज्वलन्ब्रह्मतेजसा॥ ४८॥

श्रीकृष्णं भावयेन्नित्यं ब्रह्मज्योतिः सनातनम् ।
सूर्यस्य वचनं श्रुत्वा द्विजस्तुष्टो बभूव ह ॥ ४६ ॥

सूर्योजगाम स्वस्थानंगृहीत्वाब्राह्मणाशिषम् । तत्याजमनसांविप्रःप्रतिज्ञापालनायच रुदतीं शोकसंयुक्तां हृदयेन विदूयता । सासस्मारगुरुं शम्भुमिष्टदेवं विधिं हरिम् कश्यपं जन्मदातारं विपत्तौ भयकर्शिता । तत्राऽऽजगामगोपीशो भगवाञ्छम्भुरेवच विधिश्च कश्यपश्चैव मनसापरिचिन्तितः । दृष्ट्वा विप्रोऽभीष्टदेवं निर्गुणंप्रकृतेःपरम् तुष्टाव परया भक्त्या प्रणनाम मुहुर्मुहुः । नमश्चकारशम्भुञ्च ब्रह्माणं कश्यपं तथा ॥ कथमागमनं देवा इतिप्रश्नं चकार सः । ब्रह्मातद्वचनंश्रुत्वा सहसा समयोचितम् ॥ प्रत्युवाच नमस्कृत्य हृषीकेशपदाम्बुजम् । यदित्यक्ता धर्मपत्नी धर्मिष्ठा मनसा सती

कुरुष्वाऽस्यां सुतोत्पत्तिं स्वधर्मपालनाय वै ।
जायायां च सुतोत्पत्तिं कृत्वा पश्चात्त्यजेन्मुने !॥ ५७ ॥
अकृत्वा तु सुतोत्पत्तिं विरागी यस्त्यजेत्प्रियाम् ।
स्रवते तस्य पुण्यञ्च चालन्याञ्च यथा जलम् ॥ ५८ ॥

ब्रह्मणो वचनं श्रुत्वा जरत्कारुर्मुनीश्वरः । चकारनाभिसंस्पर्शयोगेन मन्त्रपूर्वकम् ॥

मनसाया मुनिश्रेष्ठ! मुनिश्रेष्ठ उवाच ताम् ।

जरत्कारुरुवाच

गर्भेणाऽनेन मनसे! तव पुत्रो भविष्यति ॥ ६० ॥
जितेन्द्रियाणां प्रवरो धार्मिको ब्राह्मणाग्रणीः ।
तेजस्वी च तपस्वी च यशस्वी च गुणान्वितः ॥ ६१ ॥
वरो वेदविदाञ्चैव ज्ञानिनां योगिनां तथा ।
स च पुत्रो विष्णुभक्तो धार्मिकः कुलमुद्धरेत् ॥ ६२ ॥

नृत्यन्ति पितरः सर्वे जन्ममात्रेणवैमुदा । पतिव्रतासुशीला यासाप्रियाप्रियवादिनी धर्मिष्ठा पुत्रमाता च कुलस्त्री कुलपालिता । हरिभक्तिप्रदोबन्धुर्नचाऽभीष्टसुखप्रदः यो बन्धुश्चेत्स च पिताहरिवर्त्मप्रदर्शकः । सागर्भधारिणीया च गर्भवासविमोचनी

दयारूपा च भगिनीयमभीतिविमोचनी । विष्णुमन्त्रप्रदाताच स गुरुर्विष्णुभक्तिदः

गुरुश्च ज्ञानदो यो हि यज्ज्ञानं कृष्णभावनम् ।

आब्रह्मस्तम्बपर्यन्तं यतो विश्वं चराचरम् ॥ ६७ ॥

आविर्भूतं तिरोभूतं किम्वा ज्ञानं तदन्यतः । वेदजं यज्ञजं यद्यत्तत्सारं हरिसेवनम् ॥

तत्त्वानां सारभूतश्च हरेरन्यद्विडम्बनम् । दत्तंज्ञानंमया तुभ्यं स स्वामी ज्ञानदोहियः

ज्ञानात्प्रमुच्यते बन्धात्स रिपुर्यो हि बन्धतः ।

विष्णुभक्तियुतं ज्ञानं नो ददाति हि यो गुरुः ॥ ७० ॥

स रिपुः शिष्यघाती च यतोबन्धान्नमोचयेत् । जननींगर्भजक्लेशाद्यमयातनया तथा

न मोचयेद्यः स कथं गुरुस्तातो हि बान्धवः । परमानन्दरूपश्च कृष्णमार्गमनश्वरम्

न दर्शयेद्यः सततं कीदृशो बान्धवो नृणाम् ।

भज साध्वि परं ब्रह्माऽच्युतं कृष्णञ्च निर्गुणम् ॥ ७३ ॥

निर्मूलञ्चभवेत्पुंसां कर्म वै तस्यसेवया । मयाच्छलेनत्वं त्यक्ताक्षमस्वैतन्ममप्रिये

क्षमायुतानां साध्वीनां सत्त्वात्क्रोधो न विद्यते ।

पुष्करे तपसे यामि गच्छ देवि! यथासुखम् ॥ ७५ ॥

श्रीकृष्णचरणाम्भोजेनिस्पृहाणांमनोरथाः । जरत्कारुवचः श्रुत्वामनसाशोककातरा

साश्रुनेत्रा च विनयादुवाच प्राणवल्लभम् ।

मनसोवाच

दोषो नाऽस्त्येव मे त्यक्तुं निद्राभङ्गेन ते प्रभो !॥ ७७ ॥

यत्र स्मरामि त्वां नित्यं तत्र मामागमिष्यसि ।

बन्धुभेदः क्लेशतमः पुत्रभेदस्ततः परम् ॥ ७८ ॥

प्राणेशभेदः प्राणानां विच्छेदात्सर्वतः परः । पतिःपत्निव्रतानां तु शतपुत्राधिकप्रियः

सर्वस्मात्तुप्रियःस्त्रीणांप्रियस्तेनोच्यतेबुधैः । पुत्रे यथैकपुत्राणां वैष्णवानांयथाहरौ

नेत्रे यथैकनेत्राणां तृषितानां यथा जले । क्षुधितानां यथाऽन्नेच कामुकानाञ्चमैथुने

यथापरस्वेचौराणांयथाजारेकुयोषिताम् । विदुषाञ्चयथाशास्त्रेवाणिज्येवणिजांयथा

तथा शश्वन्मनः कान्ते साध्वीनां योषितां प्रभो !।
इत्युक्त्वा मनसा देवी पपात स्वामिनः पदे ॥ ८३ ॥

क्षणञ्चकार क्रोडे तां कृपया च कृपानिधिः । नेत्रोदकेन मनसां स्नापयामासतांमुनिः
साश्रुनेत्रा मुनेःक्रोडं सिषेचभेदकातरा । तदाज्ञानेन तौ द्वौ च विशोकौ सम्बभूवतुः

स्मारं स्मारं पदाम्भोजं कृष्णस्य परमात्मनः ।
जगाम तपसे विप्रः स्वकान्तां सम्प्रबोध्य च ॥ ८६ ॥

जगाममनसाशम्भोः कैलासंमन्दिरंगुरोः । पार्वतीबोधयामासमनसां शोककर्शिताम्
शिवश्चातीव ज्ञानेन शिवेन च शिवालयः । सुप्रशस्तेदिने साध्वी सुषुवे मङ्गलक्षणे

नारायणांशं पुत्रं तं योगिनां ज्ञानिनां गुरुम् ।
गर्भस्थितो महाज्ञानं श्रुत्वा शङ्करवक्त्रतः ॥ ८९ ॥

सम्बभूवच योगीन्द्रोयोगिनांज्ञानिनांगुरुः । जातकं कारयामासवाचयामासमङ्गलम्
वेदांश्चपाठयामासशिवायचशिवःशिशोः । मणिरत्नकिरीटांश्च ब्राह्मणेभ्योददौशिवः
पार्वतीच गवां लक्षंरत्नानिविविधानिच । शम्भुश्च चतुरो वेदान्वेदाङ्गानितरांस्तथा
बालकं पाठयामास ज्ञानं मृत्युञ्जयं परम् । भक्तिरस्त्यम्बिकाकान्तेऽभीष्टदेवेगुरौतथा
यस्यास्तेनचतत्पुत्रो बभूवाऽऽस्तीकएवच । जगामतपसे विष्णोः पुष्करंशङ्कराज्ञया
सम्प्राप्यच महामन्त्रं ततश्च परमात्मनः । दिव्यं वर्षत्रिलक्षञ्च तपस्तप्त्वा तपोधनः
आजगाममहायोगीनमस्कर्तुं शिवं प्रभुम् । शङ्करञ्च नमस्कृत्य स्थित्वातत्रैवबालक

सा चाऽऽजगाम मनसा कश्यपस्याऽऽश्रमं पितुः ।
तां सपुत्रां सुतां दृष्ट्वा मुदम्प्राप प्रजापतिः ॥ ९७ ॥
शतलक्षञ्च रत्नानां ब्राह्मणेभ्यो ददौ मुने !।
ब्राह्मणान्भोजयामास सोऽसङ्ख्यान् श्रेयसे शिशोः ॥ ९८ ॥

अदितिश्च दितिश्चान्यामुदम्प्रापपरन्तप !। सा सपुत्राच सुचिरं तस्थौताताल[illegible]
तदीयं पुनराख्यानं वक्ष्यामि तन्निशामय । अथाभिऽमन्युतनये ब्रह्मशापपरी[illegible] ॥
बभूव सहसा ब्रह्मन्दैवदोषेण कर्मणा । सप्ताहे समतीते तु तक्षकस्त्वाज्ञ[illegible]

शशाप शृङ्गी तत्रैव कौशिक्याश्चजलेनवै । राजा श्रुत्वा तत्प्रवृत्तिंनिर्वातस्थानमागतः
तत्र तस्थौ च सप्ताहं देहरक्षणतत्परः । सप्ताहं समतीते तु गच्छन्तं तक्षकं पथि ॥
धन्वन्तरिर्नृपं भोक्तुं ददर्श गामुकः पथि । तयोर्बभूव सम्वादःसुप्रीतिश्च परस्परम्

धन्वन्तरिर्मणिं प्राप तक्षकः स्वेच्छया ददौ ।

स ययौ तं गृहीत्वा तु सन्तुष्टो हृष्टमानसः ॥ १०५ ॥

तक्षको भक्षयामास नृपं तं मञ्चके स्थितम् । राजा जगामतरसादेहं त्यक्त्वाऽपरत्रच
संस्कारं कारयामास पितुर्वैजनमेजयः । राजा चकार यज्ञञ्च सर्पसत्रं ततो मुने !॥

प्राणांस्तत्याज सर्पाणां समूहो ब्रह्मतेजसा ।

स तक्षको वै भीतस्तु महेन्द्रं शरणं ययौ ॥ १०८ ॥

सेन्द्रं च तक्षकं हन्तुं विप्रवर्गः समुद्यतः । अथदेवाश्चसेन्द्राश्चसञ्जग्मुर्मनसाऽन्तिकम्
तां तुष्टाव महेन्द्रश्च भयकातरविह्वलः । ततः आस्तीक आगत्य यज्ञञ्च मातुराज्ञया ॥
महेन्द्रतक्षकप्राणान्ययाचे भूमिप परम् । ददौ वरं नृपश्रेष्ठः कृपया ब्राह्मणाज्ञया ॥

यज्ञं समाप्य विप्रेभ्यो दक्षिणाञ्च ददौ मुदा ।

विप्राश्च मुनयो देवा गत्वा च मनसान्तिकम् ॥ ११२ ॥

मनसां पूजयामासुस्तुष्टुवुश्चपृथक्पृथक् । शक्रःसम्भृतसम्भारो भक्तियुक्तःसदाशुचिः
मनसां पूजयामास तुष्टाव परमादरम् । नत्वा षोडशोपचारं बलिञ्च तत्प्रियं तदा ॥
प्रददौ परितुष्टश्च ब्रह्मविष्णुशिवाज्ञया । सम्पूज्य मनसां देवीं प्रययुः स्वालयञ्च ते

इत्येवं कथितं सर्वं किं भूयः श्रोतुमिच्छसि ।

नारद उवाच

केन स्तोत्रेण तुष्टाव महेन्द्रो मनसां सतीम् ॥ ११६ ॥

पूजाविधिक्रमं तस्याः श्रोतुमिच्छामि तत्त्वतः ।

नारायण उवाच

सुस्नातः शुचिराचान्तो धृत्वा धौते च वाससी ॥ ११७ ॥

रत्नसिंहासने देवीं वासयामास भक्तितः । स्वर्गङ्गाया जलेनैव रत्नकुम्भस्थितेन च

स्नापयामास मनसां महेन्द्रो वेदमन्त्रतः। वासलीवासयामास वह्निशुद्धे मनोहरे॥
सर्वाङ्गे चन्दनं कृत्वा पादार्घ्यंभक्तिसंयुतः। गणेशंचदिनेशंचवह्निविष्णुंशिवंशिवाम्
सम्पूज्याऽऽदौ देवषट्कं पूजयामास तां सतीम्।
ॐ ह्रीं श्रीं मनसादेव्यै स्वाहेत्येवं च मन्त्रतः॥ १२१॥
दशाक्षरेण मूलेन ददौ सर्वं यथोचितम्। दत्त्वा षोडशोपचारान्दुर्लभान्देवनायकः॥
पूजयामास भक्त्या च विष्णुना प्रेरितो मुदा। वाद्यं नानाप्रकारं च वादयामासतत्रवै
बभूव पुष्पवृष्टिश्च नभसो मनसोपरि। देवप्रियाज्ञया तत्र ब्रह्मविष्णुशिवाज्ञया॥१२४
तुष्टाव साश्रुनेत्रश्च पुलकाङ्कितविग्रहः।

पुरन्दर उवाच

देवि! त्वां स्तोतुमिच्छामि साध्वीनां प्रवरां वराम्॥ १२५॥
परात्परां च परमां नहि स्तोतुं क्षमोऽधुना।
स्तोत्राणां लक्षणं वेदे स्वभावाख्यानतत्परम्॥ १२६॥
न क्षमः प्रकृते! वक्तुं गुणानां गणनांतव। शुद्धसत्त्वस्वरूपात्वंकोपहिंसाविवर्जिता
न च शक्तो मुनिस्तेन त्यक्तुं याञ्चा कृता यतः।
त्वं मया पूजिता साध्वी जननी मे यथाऽदितिः॥ १२८॥
दयारूपा च भगिनी क्षमारूपा यथाप्रसूः। त्वया मे रक्षिताःप्राणाःपुत्रदाराःसुरेश्वरि!
अहं करोमि त्वत्पूजां प्रीतिश्च वर्धतां सदा। नित्यायद्यपिपूज्यात्वंसर्वत्रजगदम्बिके
तथाऽपितवपूजांचवर्धयामिसुरेश्वरि। येत्वामाषाढसङ्क्रान्त्यां पूजयिष्यन्तिभक्तितः
पञ्चम्यां मनसाख्यायां मासान्ते वा दिनेदिने। पुत्रपौत्रादयस्तेषांवर्धन्तेचधनानिवै
यशस्विनः कीर्त्तिमन्तो विद्यावन्तो गुणान्विताः।
ये त्वां न पूजयिष्यन्ति निन्दन्त्यज्ञानतो जनाः॥ १३३॥
लक्ष्मीहीना भविष्यन्ति तेषांनागभयंसदा। त्वंस्वयंसर्वलक्ष्मीश्चवैकुण्ठेकमलालया
नारायणांशो भगवाञ्जरत्कारुर्मुनीश्वरः। तपसा तेजसा त्वां च मनसा ससृजे पिता
अस्माकं रक्षाणायैवतेनत्वंमनसाभिधा। मनसादेविशक्त्यात्वंस्वात्मनासिद्धयोगिनी

तेन त्वं मनसादेवी पूजिता वन्दिता भव। येभक्त्यामनसांदेवाःपूजयन्त्यनिशंभृशम्
तेन त्वां मनसांदेवीं प्रवदन्तिमनीषिणः। सत्यस्वरूपादेवित्वंशश्वत्सत्यनिषेवणात्
यो हि त्वां भावयेन्नित्यं स त्वां प्राप्नोति तत्परः।
इन्द्रश्च मनसां स्तुत्वा गृहीत्वा भगिनीवरम् ॥ १३६ ॥
प्रजगाम स्वभवनं भूषया सपरिच्छदम्। पुत्रेण सार्धं सा देवी चिरंतस्थौपितुर्गृहे
भ्रातृभिः पूजिता शश्वन्मान्या वन्द्या च सर्वतः।
गोलोकात्सुरभिर्ब्रह्मन् तत्राऽऽगत्य सुपूजिताम् ॥ १४१ ॥
तां स्नापयित्वा क्षीरेण पूजयामाससादरम्। ज्ञानंचकथयामासगोप्यंसर्वंसुदुर्लभम्
तथा देवैः पूजिता सा स्वर्लोकं च पुनर्ययौ। इन्द्रस्तोत्रं पुण्यबीजंमनसांपूजयेत्पठेत्
तस्य नागभयंनास्तितस्यवंशोद्भवस्यच। विषंभवेत्सुधातुल्यंसिद्धस्तोत्रोयदाभवेत्
पञ्चलक्षजपेनैव सिद्धस्तोत्रो भवेन्नरः। सर्पशायी भवेत्सोऽपि निश्चितं सर्पवाहनः

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे
मनसोपाख्यानं नामाऽष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

# एकोनपञ्चाशत्तमोऽध्यायः

## सुरभ्युपाख्यानवर्णनम्

नारद उवाच

का वा सा सुरभिर्देवीगोलोकादागताचया। तज्जन्मचरितंब्रह्मञ्छ्रोतुमिच्छामियत्नतः

नारायण उवाच

गवामधिष्ठातृदेवी गवामाद्या गवां प्रसूः। गवां प्रधाना सुरभिर्गोलोके सासमुद्भवा
सर्वादिसृष्टेश्चरितं कथयामि निशामय। बभूव तेन तज्जन्म पुरा वृन्दावने वने ॥ ३ ॥
एकदा राधिकानाथो राधया सह कौतुकी। गोपाङ्गनापरिवृतः पुण्यं वृन्दावनं ययौ

सहसा तत्र रहसिविजहार स कौतुकात् । बभूवक्षीरपानेच्छातस्यस्वेच्छामयस्यच
ससृजे सुरभिं देवीं लीलया वामपार्श्वतः । वत्सयुक्तां दुग्धवतींवत्सोनाममनोरथः

दृष्ट्वा सवत्सां श्रीदामा नवभाण्डे दुदोह च ।
क्षीरं सुधातिरिक्तं च जन्ममृत्युजराहरम् ॥ ७ ॥

तदुत्थं च पयः स्वादु पापौ गोपीपतिःस्वयम् । सरोबभूवपयसांभाण्डविस्रंसनेनच
दीर्घं च विस्तृतं चैव परितः शतयोजनम् । गोलोकेऽयंप्रसिद्धश्चसोऽपिक्षीरसरोवरः
गोपिकानाञ्चराधायाःक्रीडावापीबभूवसा । रत्नेन्द्ररचितापूर्णभूताचाऽपीश्वरेच्छया
बभूव कामधेनूनां सहसा लक्षकोटयः । यावन्तस्तत्र गोपाश्च सुरभ्या लोमकूपतः ॥
तासां पुत्राश्चबहवःसम्बभूवुरसङ्ख्यकाः । कथिता च गवांसृष्टिस्तयाचपूरितंजगत्
पूजां चकार भगवान् सुरभ्याश्च पुरा मुने !। ततो बभूव तत्पूजा त्रिषु लोकेषुदुर्लभा
दीपान्विता परदिनेश्रीकृष्णस्याऽऽज्ञयाहरेः । बभूवसुरभिःपूज्याधर्मवक्त्रादिदंश्रुतम्
ध्यानं स्तोत्रं मूलमन्त्रं यद्यत्पूजाविधिक्रमम् । वेदोक्तंचमहाभागनिबोधकथयामिते
ॐसुरभ्यै नम इति मन्त्रस्तस्याः षडक्षरः । सिद्धो लक्षजपेनैव भक्तानां कल्पपादपः
ध्यानं यजुर्वेदगीतं तस्याः पूजा च सर्वतः। ऋद्धिदा वृद्धिदा चैवमुक्तिदासर्वकामदा
लक्ष्मीस्वरूपां परमां राधासहचरीं पराम् । गवामधिष्ठातृदेवीं गवामाद्यां गवांप्रसूम्
पवित्ररूपां पूतां च भक्तानां सर्वकामदाम् । यया पूतं सर्वविश्वं तांदेवींसुरभिंभजे
घटे वा धेनुशिरसि बन्धस्तम्भे गवामपि । शालग्रामे जलाग्नौ वासुरभिंपूजयेद्द्विजः
दीपान्विता परदिने पूर्वाह्ने शक्तिसंयुतः । यः पूजयेच्च सुरभिं स वै पूज्योभवेद्भुवि
एकदा त्रिषु लोकेषु वाराहे विष्णुमायया । क्षीरं जहारसुरभिश्चिन्तिताश्चसुरादयः
ते गत्वा ब्रह्मलोके च ब्रह्माणं तुष्टुवुस्तदा । तदाज्ञया च सुरभिं तुष्टाव पाकशासनः

पुरन्दर उवाच

नमो देव्यै महादेव्यै सुरभ्यै च नमो नमः । गवां बीजस्वरूपायै नमस्ते जगदम्बिके

नमो राधाप्रियायै च पद्मांशायै नमो नमः ।
नमः कृष्णप्रियायै च गवां मात्रे नमो नमः ॥ २५ ॥

कल्पवृक्षस्वरूपायै सर्वेषां सततं परे। क्षीरदायै धनदायै बुद्धिदायै नमोनमः॥
शुभायै च सुभद्रायै गोप्रदायै नमो नमः।
यशोदायै कीर्तिदायै धर्मदायै नमो नमः॥ २७॥
स्तोत्रश्रवणमात्रेण तुष्टा हृष्टा जगत्प्रसूः। आविर्बभूव तत्रैव ब्रह्मलोके सनातनी॥२८
महेन्द्राय वरं दत्त्वा वाञ्छितं चाऽपि दुर्लभम्।
जगाम सा च गोलोकं ययुर्देवादयो गृहम्॥ २९॥
बभूव विश्वं सहसा दुग्धपूर्णञ्च नारद!। दुग्धं घृतं ततो यज्ञस्ततः प्रीतिः सुरस्य च
इदं स्तोत्रं महापुण्यं भक्तियुक्तश्च यः पठेत्।
स गोमान्धनवांश्चैव कीर्तिमान्पुत्रवांस्तथा॥ ३१॥
स स्नातःसर्वतीर्थेषुसर्वयज्ञेषुदीक्षितः। इहलोके सुखं भुक्त्वा यात्यन्तेकृष्णमन्दिरे
सुचिरं निवसेत्तत्र करोति कृष्णसेवनम्। न पुनर्भवनं तत्र ब्रह्मपुत्रो भवेत्ततः॥३२
इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे
सुरभ्युपाख्याननामैकोनपञ्चाशत्तमोऽध्यायः॥ ४९॥

---

## पञ्चाशत्तमोऽध्यायः

### देव्याः सावरणपूजावर्णनम्

नारद उवाच

श्रुतंसर्वमुपाख्यानंप्रकृतीनांयथातथम्। यच्छ्रुत्वा मुच्यते जन्तुर्जन्मसंसारबन्धनात्
अधुना श्रोतुमिच्छामि रहस्यं वेदगोपितम्।
राधायाश्चैव दुर्गाया विधानं श्रुतिचोदितम्॥ २॥
महिमा वर्णितोऽतीव भवता परयोर्द्वयोः। श्रुत्वातंतद्गतं चेतो न कस्यस्यान्मुनीश्वर
ययोरंशोजगत्सर्वंयन्नियम्यंचराचरम्। ययोर्भक्त्या भवेन्मुक्तिस्तद्विधानंवदाऽधुना

नारायण उवाच

शृणु नारद! वक्ष्यामि रहस्यं श्रुतिचोदितम्।

यन्न कस्याऽपि चाऽऽख्यातं सारात्सारं परात्परम्॥ ५॥

श्रुत्वापरस्मैनोवाच्यंयतोऽतीवरहस्यकम्। मूलप्रकृतिरूपिण्याः सम्विदोजगदुद्भवे प्रादुर्भूतं शक्तियुग्मं प्राणबुद्ध्यधिदैवतम्। जीवानाञ्चैव सर्वेषां नियन्तृप्रेरकं सदा तदधीनं जगत्सर्वं विराडादि चराचरम्। यावत्तयोः प्रसादोन तावन्मोक्षोहि दुर्लभः ततस्तयोः प्रसादार्थंनित्यंसेवेततद्द्वयम्। तत्रादौराधिकामन्त्रं शृणु नारदभक्तितः

ब्रह्मविष्ण्वादिभिर्नित्यंसेवितोयःपरात्परः।

श्रीराधेतिचतुर्थ्यन्तं वह्निर्जाया ततः परम्॥ १०॥

षडक्षरो महामन्त्रो धर्माद्यर्थप्रकाशकः।

मायाबीजादिकश्चायं वाञ्छाचिन्तामणिः स्मृतः॥ ११॥

वक्त्रकोटिसहस्रैस्तुजिह्वाकोटिशतैरपि। एतन्मन्त्रस्यमाहात्म्यंवर्णितुं नैव शक्यते जग्राह प्रथमं मन्त्रं श्रीकृष्णो भक्तितत्परः। उपदेशान्मूलदेव्या गोलोके रासमण्डले विष्णुस्तेनोपदिष्टस्तु तेन ब्रह्माविराट् तथा। तेनधर्मस्तेनचाऽहमित्येषाहि परम्परा

अहं जपामि तं मन्त्रं तेनाऽहमृषिरीडितः।

ब्रह्माद्याः सकला देवा नित्यं ध्यायन्ति तां मुदा॥ १५॥

कृष्णार्चायां नाऽधिकारो यतो राधार्चनं विना।

वैष्णवैः सकलैस्तस्मात्कर्तव्यं राधिकार्चनम्॥ १६॥

कृष्णप्राणाधिदेवीसातदधीनोविभुर्यतः। रासेश्वरीतस्य नित्यं तया हीनोनतिष्ठति

राध्नोति सकलान्कामांस्तस्माद्राधेतिकीर्तिता।

अत्रोक्तानां मनूनाञ्च ऋषिरस्म्यहमेव च॥ १८॥

छन्दश्चदेवीगायत्रीदेवताऽत्र च राधिका। तारोबीजंशक्तिबीजं शक्तिस्तुपरिकीर्तिता मूलावृत्त्याषडङ्गानि कर्तव्यानीतरत्र च। अथध्यायेन्महादेवीं राधिकांरासनायिकाम्

पूर्वोक्तरीत्या तु मुने! सामवेदे विगीतया।

श्वेतचम्पकवर्णाभां शरदिन्दुसमाननाम् ॥ २१ ॥
कोटिचन्द्रप्रतीकाशां शरदम्भोजलोचनाम् ।
बिम्बाधरां पृथुश्रोणीं काञ्चीयुननितम्बिनीम् ॥ २२॥
कुन्दपङ्क्तिसमानाभदन्तपङ्क्तिविराजिताम् ।
क्षौमाम्बरपरीधानां वह्निशुद्धांशुकान्विताम् ॥ २३ ॥

ईषद्धास्यप्रसन्नास्यां करिकुम्भयुगस्तनीम् । सदा द्वादशवर्षीयां रत्नभूषणभूषिताम्
शृङ्गारसिन्धुलहरीं भक्तानुग्रहकातराम् । मल्लिकामालतीमालाकेशपाशविराजिताम्
सुकुमाराङ्गलतिकांरासमण्डलमध्यगाम् ।वराभयकरांशान्तांशश्वत्सुस्थिरयौवनाम्

रत्नसिंहासनासीनां गोपीमण्डलनायिकाम् ।
कृष्णप्राणाधिकां वेदबोधितां परमेश्वरीम् ॥ २७ ॥

एवं ध्यात्वा ततो बाह्येशालग्रामेघटेऽथवा । यन्त्रे वाऽष्टदलेदेवीं पूजयेत्सुविधानतः

आवाह्य देवीं तत्पश्चादासनादि प्रदीयताम् ।
मूलमन्त्रं समुच्चार्य चाऽऽसनादीनि कल्पयेत् ॥ २६ ॥
पाद्यन्तु पादयोर्दद्यान्मस्तकेऽर्घ्यं समीरितम् ।
मुखे त्वाचमनीयं स्याद् त्रिवारं मूलविद्यया ॥ ३० ॥

मधुपर्कंततोदद्यादेकांगां च पयस्विनीम् । ततोनयेत्स्नानशालां ताञ्च तत्रैवभावयेत्
अभ्यङ्गादिस्नानविधिकल्पयित्वाऽथवाससी । ततश्च चन्दनं दद्यान्नानालङ्कारपूर्वकम्
पुष्पमाला बहुविधास्तुलसीमञ्जरीयुताः । पारिजातप्रसूनानि शतपत्रादिकानि च ॥
ततः कुर्यात्पवित्रं तत्परिवारार्चनं विभोः । अग्नीशासुरवायव्यमध्ये दिक्ष्वङ्गपूजनम्
कृत्वा पश्चादष्टदले दक्षिणावर्ततोऽग्रतः । मालावतीमग्रदले वह्निकोणेच माधवीम् ॥
रत्नमालां दक्षिणेच नैर्ऋत्ये तु सुशीलकाम् । पश्चाद्दले शशिकलापूजयेन्मतिमान्नरः
मारुते पारिजातांचाप्युत्तरेचपरावतीम् । ईशानकोणेसम्पूज्या सुन्दरीप्रियकारिणी

ब्राह्म्यादयस्तु तद्बाह्येऽप्याशापालांस्तु भूपुरे ।
वज्रादिकान्यायुधानि देवीमित्थं प्रपूजयेत ॥ ३८ ॥

ततो देवीं सावरणां गन्धाद्यैरुपचारकैः । राजोपचारसहितैः पूजयेन्मतिमान्नरः ॥३६
ततः स्तुवीतदेवेशींस्तोत्रैर्नामसहस्रकैः । सहस्रमङ्ख्यञ्च जपं नित्यं कुर्यात्प्रयत्नतः
य एवं पूजयेद्देवीं राधांरासेश्वरीं पराम् । सभवेद्विष्णुतुल्यस्तुगोलोकंयातिसन्ततम्

यः कार्त्तिक्यां पौर्णमास्यां राधाजन्मोत्सवं बुधः ।
कुरुते तस्य सान्निध्यं दद्याद्रासेश्वरी परा ॥ ४२ ॥

केनचित्कारणेनैव राधावृन्दावने वने । वृषभानुसुता जाता गोलोकस्थायिनी सदा

अत्रोक्तानां तु मन्त्राणां वर्णसंख्याविधानतः ।
पुरश्चरणकर्मोक्तं दशांशं होममाचरेत् ॥ ४४ ॥
तिलैस्त्रिस्वादुसंयुक्तैर्जुहुयाद्भक्तिभावतः ।

नारद उवाच

स्तोत्रं वद मुने! सम्यग्येन देवी प्रसीदति ॥ ४५ ॥

नारायण उवाच

नमस्ते परमेशानि! रासमण्डलवासिनि !।
रासेश्वरि ! नमस्तेऽस्तु कृष्णप्राणाधिकप्रिये !॥ ४६ ॥

नमस्त्रैलोक्यजननि! प्रसीद करुणार्णवे ! । ब्रह्मविष्ण्वादिभिर्देवैर्वन्द्यमानपदाम्बुजे !
नमःसरस्वतीरूपे! नमः सावित्रि! शङ्करि !। गङ्गापद्मावतीरूपे! षष्ठि! मङ्गलचण्डिके!

नमस्ते तुलसीरूपे ! नमो लक्ष्मीस्वरूपिणि ! ।
नमो दुर्गे ! भगवति ! नमस्ते सर्वरूपिणि! ॥ ४६ ॥

मूलप्रकृतिरूपां त्वांभजामः करुणार्णवाम् । संसारसागरादस्मादुद्धराम्ब! दयां कुरु
इदं स्तोत्रं त्रिसन्ध्यंयःपठेद्राधांस्मरन्नरः । ननस्यदुर्लभंकिञ्चित्कदाचिच्चभविष्यति
देहान्तेच वसेन्नित्यं गोलोकेरासमण्डले । इदं रहस्यं परमं नचाऽऽख्येयन्तुकस्यचित्
अधुना शृणु विप्रेन्द्र! दुर्गादेव्याविधानकम् । यस्याःस्मरणमात्रेणपलायन्तेमहापदः
एनां नभजतेयोहितादृङ्नास्त्येवकुत्रचित् । सर्वोपास्यासर्वमाताशैवीशक्तिर्महाद्भुता
सर्वबुद्ध्यधिदेवीयमन्तर्यामिस्वरूपिणी । दुर्गसङ्कटहन्त्रीति दुर्गेति प्रथिता भुवि ॥

वैष्णवानाञ्च शैवानामुपास्येयञ्च नित्यशः। मूलप्रकृतिरूपा सा सृष्टिस्थित्यन्तकारिणी
तस्या नवाक्षरं मन्त्रं वक्ष्ये मन्त्रोत्तमोत्तमम्। वाग्भवं शम्भुवनिताकामबीजं ततः परम्
चामुण्डायै पदं पश्चाद्विच्चे इत्यक्षरद्वयम्। नवाक्षरो मनुः प्रोक्तो भजतां कल्पपादपः

ब्रह्मविष्णुमहेशाना ऋषयोऽस्य प्रकीर्तिताः।
छन्दांस्युक्तानि सततं गायत्र्युष्णिगनुष्टुभः॥ ५६॥

महाकालीमहालक्ष्मीःसरस्वत्यपि देवताः। स्याद्रक्तदन्तिकाबीजं दुर्गा च भ्रामरी तथा
नन्दाशाकम्भरीदेव्यौ भीमा च शक्तयः स्मृताः। धर्मार्थकाममोक्षेषु विनियोग उदाहृतः

ऋषिच्छन्दोदैवतानि मौलौ वक्त्रे हृदि न्यसेत्।
स्तनयोः शक्तिबीजानि न्यसेत्सर्वार्थसिद्धये॥ ६२॥

बीजत्रयैश्चतुर्भिश्च द्वाभ्यां सर्वेण चैव हि। षडङ्गानि मनोः कुर्याज्जातियुक्तानि देशिकः
शिखायां लोचनद्वन्द्वं श्रुतिनासाननेषु च। गुदे न्यसेन्मन्त्रवर्णान्सर्वेण व्यापकं चरेत्
खड्गचक्रगदाबाणचापानि परिघं तथा। शूलं भुशुण्डीञ्च शिरः शङ्खं सन्दधतीं करैः
महाकालीं त्रिनयनां नानाभूषणभूषिताम्। नीलाञ्जनसमप्रख्यां दशपादाननां भजे
मधुकैटभनाशार्थं यां तुष्टावाम्बुजासनः। एवं ध्यायेन्महाकालीं कामबीजस्वरूपिणीम्
अक्षमालाञ्च परशुं गदेषु कुलिशानि च। पद्मं धनुष्कुण्डिकाञ्च दण्डं शक्तिमसिं तथा
चर्माम्बुजं तथा घण्टां सुरापात्रञ्च शूलकम्। पाशं सुदर्शनञ्चैव दधतीमरुणप्रभाम्
रक्ताम्बुजासनगतां मायाबीजस्वरूपिणीम्। महालक्ष्मीं भजेदेवं महिषासुरमर्दिनीम्
घण्टाशूले हलं शङ्खं मुसलञ्च सुदर्शनम्। धनुर्बाणान्हस्तपद्मैर्दधानां कुन्दसन्निभाम्

शुम्भादिदैत्यसंहर्त्रीं वाणीबीजस्वरूपिणीम्।
महासरस्वतीं ध्यायेत्सच्चिदानन्दविग्रहाम्॥ ७२॥

यन्त्रमस्याः शृणु प्राज्ञ! त्र्यस्रं षट्कोणसंयुतम्। ततोऽष्टदलपद्मञ्च चतुर्विंशतिपत्रकम्
भूगृहेण समायुक्तं यन्त्रमेवं विचिन्तयेत्। शालग्रामे घटे वाऽपि यन्त्रे वा प्रतिमासु वा
बाणलिङ्गेऽथवा सूर्ये यजेद्देवीमनन्यधीः। जयादिशक्तिसंयुक्ते पीठे देवीं प्रपूजयेत्
पूर्वकोणे सरस्वत्या सहितं पद्मजं यजेत्। श्रिया सह हरिं तत्र नैरृते कोणके यजेत्

पार्वत्या सहितं शम्भुं वायुकोणेसमर्चयेत् । देव्याउत्तरतःपूज्यःसिंहोवामेमहासुरम्
महिषं पूजयेदन्ते षट्कोणेषुयजेत्क्रमात् । नन्दजां रक्तदन्ताञ्चतथाशाकम्भरींशिवाम्
दुर्गां भीमां भ्रामरीञ्च ततो वसुदलेषु च । ब्राह्मीं माहेश्वरीं चैवकौमारींवैष्णवींतथा
वाराहीं नारसिंहीञ्च ऐन्द्रीं चामुण्डकां तथा । पूजयेच्च ततः पश्चात्तत्त्वपत्रेषु पूर्वतः

विष्णुमायां चेतनाञ्च बुद्धिं निद्रां क्षुधां तथा ।
छायां शक्तिं परां तृष्णां शान्तिं जातिञ्च लज्जया ॥ ८१ ॥
शान्तिं श्रद्धां कीर्तिलक्ष्म्यौ धृतिं वृत्तिं श्रुतिं स्मृतिम् ।
दयां तुष्टिं ततः पुष्टिं मातृभ्रान्ती इति क्रमात् ॥ ८२ ॥

ततो भूपुरकोणेषु गणेशं क्षेत्रपालकम् । बटुकं योगीनीश्चाऽपि पूजयेन्मतिमान्नरः ॥
इन्द्राद्यानपि तद्बाह्ये वज्राद्यायुधसंयुतान् । पूजयेदनयारीत्यादेवींसावरणां ततः ॥
राजोपचारान्विविधान्दद्यादम्बाप्रतुष्टये । ततो जपेन्नवार्णञ्च मन्त्रं मन्त्रार्थपूर्वकम् ॥
ततः सप्तशतीस्तोत्रं देव्या अग्रे तु सम्पठेत् । नाऽनेन सदृशं स्तोत्रंविद्यते भुवनत्रये
ततश्चानेन देवेशीं तोषयेत्प्रत्यहं नरः । धर्मार्थकाममोक्षाणामालयं जायते नरः ॥ ८७
इतिकथितं विप्र ! श्रीदुर्गाया विधानकम् । कृतार्थता येन भवेत्तदेतत्कथितं तव ॥
सर्वे देवा हरिब्रह्मप्रमुखा मनवस्तथा । मुनयो ज्ञाननिष्ठाश्च योगिनश्चाऽऽश्रमास्तथा

लक्ष्म्यादयस्तथा देव्यः सर्वे ध्यायन्ति तां शिवाम् ।
तदैव जन्मसाफल्यं दुर्गास्मरणमस्ति चेत् ॥ ९० ॥

चतुर्दशाऽपि मनवो ध्यात्वा चरणपङ्कजम् । मनुत्वं प्राप्तवन्तश्च देवाःस्वंस्वंपदंतथा
तदेतत्सर्वमाख्यातं रहस्यातिरहस्यकम् । प्रकृतीनां पञ्चकस्य तदंशानाञ्चवर्णनम् ॥
श्रुत्वैतन्मनुजोनित्यंपुरुषार्थचतुष्टयम् । लभते नाऽत्र सन्देहः सत्यंसत्यंमयोदितम्

अपुत्रो लभते पुत्रं विद्यार्थी प्राप्नुयाच्च ताम् ।
यं यं कामं स्मरेद्वापि तं तं श्रुत्वा समाप्नुयात् ॥ ९४ ॥

नवरात्रे पठेदेतद्देव्यग्रे तु समाहितः । परितुष्टा जगद्धात्री भवत्येव हि निश्चितम् ॥
नित्यमेकैकमध्यायं पठेद्यः प्रत्यहं नरः । तस्य वश्या भवेद्देवी देवीप्रियकरो हि सः

शकुनांश्च परीक्षेतनित्यमस्मिन्यथाविधि । कुमारीदिव्यहस्तेन यद्वाबटुकराम्बुजात्

मनोरथं तु सङ्कल्प्य पुस्तकं पूजयेत्ततः ।

देवीञ्च जगदीशानीं प्रणमेच्च पुनः पुनः ॥ ६८ ॥

सुस्नातां कन्यकां तत्राऽऽनीयाऽभ्यर्च्य यथाविधि ।

शलाकां रोपयेन्मध्ये तया स्वर्णेन निर्मिताम् ॥ ६६ ॥

शुभं वाऽप्यशुभं तत्र यदायाति च तद्भवेत् ।

उदासीनेऽप्युदासीनं कार्यं भवति निश्चितम् ॥ १०० ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां नवमस्कन्धे

श्रीदेवीसावरणपूजाविधिवर्णनंनामपञ्चाशत्तमोऽध्यायः ॥ ५० ॥

समाप्तश्चाऽयं नवमस्कन्धः ॥

---

महादेवी प्रसन्ना वरदा भवतु ॥

॥ श्रीगणेशायनमः ॥

* श्रीमहालक्ष्म्यैनमः *

# देवीभागवतपुराणम्

## दशमःस्कन्धः

### प्रथमोऽध्यायः

#### मनुकृतंदेव्याराधनवर्णनम्

नारद उवाच

नारायण! धराधार! सर्वपालनकारण !। भवतोदीरितं देवीचरितं पापनाशनम् ॥ १॥

मन्वन्तरेषु सर्वेषु सा देवी यत्स्वरूपिणी। यदाकारेण कुरुते प्रादुर्भावं महेश्वरी ॥

तान्नः सर्वान्समाख्याहि देवीमाहात्म्यमिश्रितान्।

यथा च येन येनेह पूजिता संस्तुताऽपि हि ॥ ३॥

मनोरथान्पूरयति भक्तानां भक्तवत्सला। तन्नः शुश्रूषमाणानां देवीचरितमुत्तमम् ॥

वर्णयस्व कृपासिन्धो! येनाऽऽप्नोति सुखं महत्।

श्रीनारायण उवाच

भक्तानां भक्तिजननं महासम्पत्तिकारकम् । जगद्योनिर्महातेजा ब्रह्मा लोकपितामहः ॥
आविरासीन्नाभिपद्माद्देवदेवस्य चक्रिणः । स चतुर्मुख आसाद्य प्रादुर्भावं महामते ॥
मनुं स्वायम्भुवं नाम जनयामास मानसात् ।
स मानसो मनुः पुत्रो ब्रह्मणः परमेष्ठिनः ॥ ८ ॥
शतरूपां च तत्पत्नीं जज्ञेधर्मस्वरूपिणीम् । स मनुः क्षीरसिन्धोश्च तीरे परमपावने
देवीमाराधयामास महाभाग्यफलप्रदाम् । मूर्त्तिच मृण्मयींतस्याविधायपृथिवीपतिः
उपासते स्म तां देवीं वाग्भवंसजपन् रहः । निराहारोजितश्वासोनियमव्रतकर्शितः
एकपादेन सन्तिष्ठन् धरायामनिशं स्थिरः ।
शतवर्षं जितःकामःक्रोधस्तेनमहात्मना ॥ १२ ॥
भजे स्थावरतां देव्याश्चरणौ चिन्तयन् हृदि । तस्य तत्तपसा देवीप्रादुर्भूताजगन्मयी
उवाच वचनं दिव्यं वरं वरय भूमिप !। तत आनन्दजनकं श्रुत्वा वाक्यं महीपतिः॥
वरयामास तान्हृत्स्थान् वरानमरदुर्लभान् ।

मनुरुवाच

जय देवि! विशालाक्षि! जय सर्वान्तरस्थिते !॥ १५ ॥
मान्ये! पूज्ये! जगद्धात्रि! सर्वमङ्गलमङ्गले !। त्वत्कटाक्षावलोकेनपद्मभूः सृजतेजगत्
वैकुण्ठः पालयत्येव हरः संहरते क्षणात् । शचीपतिस्त्रिलोक्याश्चशासकोभवदाज्ञया
प्राणिनः शिक्षयत्येव दण्डेन च परेतराट् । यादसामधिपः पाशी पालनं मादृशामपि
कुरुते स कुबेरोऽपि निधीनां पतिरव्ययः । हुतभुङ्नैर्ऋतो वायुरीशानः शेष एवच
त्वदंशसम्भवा एव त्वच्छक्तिपरिबृंहिताः ।
अथाऽपि यदि मे देवि वरो देयोऽस्ति साम्प्रतम् ॥ २० ॥
तदा प्रह्वाःसर्गकार्ये विघ्नानश्यन्तुमेशिवे !। वाग्भवस्याऽपिमन्त्रस्ययेकेचिदुपसेविनः
तेषां सिद्धिः सत्वराऽपि कार्याणां जायतामपि ।
ये सम्वादमिमं देवि! पठन्ति श्रावयन्ति च ॥ २२ ॥
तेषां लोके भुक्तिमुक्ती सुलभेभवतांशिवे !। जातिस्मरत्वंभवतुवक्तृत्वंसौष्ठवंतथा

नसिद्धिःकर्ममार्गसंसिद्धिरपिचाऽस्तु हि। पुत्रपौत्रसमृद्धिश्च जायेदित्येवमेवच॥

इति श्रीदेवीभागवतेमहापुराणेऽष्टादशसाहस्र्यां संहितायां दशमस्कन्धे
मनुकृतंदेव्याःस्तवनंनाम प्रथमोऽध्यायः॥ १॥

---

## द्वितीयोऽध्यायः

### विन्ध्यवासिनीप्रसङ्गेविन्ध्योपाख्यानम्

श्रीदेव्युवाच

भूमिपाल! महाबाहो! सर्वमेतद्भविष्यति। यत्त्वया प्रार्थितं तत्ते ददामि मनुजाधिप!
अहं प्रसन्ना दैत्येन्द्रनाशनाऽमोघविक्रमा। वाग्भवस्य जपेनैव तपसा ते सुनिश्चितम्

राज्यं निष्कण्टकं तेऽस्तु पुत्रा वंशकरा अपि।
मयि भक्तिर्दृढा वत्स मोक्षान्ते सत्पदे भवेत्॥ ३॥

एवं वरान्महादेवी तस्मै दत्त्वा महात्मने। पश्यतस्तु मनोरेव जगाम विन्ध्यपर्वतम्

योऽसौ विन्ध्याचलो रुद्धः कुम्भोद्भवमहर्षिणा।
भानुमार्गावरोधार्थं प्रवृत्तो गगनं स्पृशन्॥५॥

सा विन्ध्यवासिनी विष्णोरनुजावरदेश्वरी। बभूवपूज्यालोकानांसर्वेषांमुनिसत्तम!

ऋषय ऊचुः

कोऽसौ विन्ध्याचलः सूत! किमर्थं गगनं स्पृशन्।
भानुमार्गावरोधं च किमर्थं कृतवानसौ॥ ७॥

कथं च मैत्रावरुणिः पर्वतं तं महोन्नतम्। प्रकृतिस्थं चकारेति सर्वंविस्तरतोवद

नहि तृप्यामहे साधो! त्वदास्यगलिताऽमृतम्।
देव्याश्चरित्ररूपाख्यं पीत्वा तृष्णा प्रवर्धते॥ ६॥

सूत उवाच

आसीद्विन्ध्याचलो नाम मान्यःसर्वधराभृताम् ।

महावनसमूहाढ्यो महापादपसम्वृतः ॥ १० ॥

[सुपुष्पितैरनेकैश्चलतागुल्मैस्तुसम्वृतः] । मृगा वराहा महिषा व्याघ्राःशार्दूलकाअपि वानराः शशका ऋक्षाः शृगालाश्च समन्ततः । विचरन्तिसदाहृष्टाःपुष्टाःएवमहोद्यमाः नदीनदजलक्रान्तो देवगन्धर्वकिन्नरैः । अप्सरोभिः किम्पुरुषैः सर्वकामफलद्रुमैः॥ एतादृशे विन्ध्यनगे कदाचित्पर्यटन्महीम् । देवर्षिः परमप्रीतोजगामस्वेच्छयामुनिः तं दृष्ट्वासनगो मङ्क्षु तूर्णमुत्थायसम्भ्रमात् । पाद्यमर्घ्यं तथादत्त्वावरासनमथाऽर्पयत्

सुखोपविष्टं देवर्षिं प्रसन्नं नग ऊचिवान् ।

विन्ध्य उवाच

देवर्षे! कथ्यतां जात आगमः कुत उत्तमः ॥ १६ ॥

तवाऽऽगमनतो जातमनर्घ्यं मममन्दिरम् । तव चङ्क्रमणंदेवाऽभयार्थं हि यथा रवेः

अपूर्वं जन्मतो वृत्तं तद् ब्रूहि मम नारद !।

नारद उवाच

ममाऽऽगमनमिन्द्रारे! जातं स्वर्णगिरेरथ ॥ १८ ॥

तत्र दृष्टा मया लोकाः शक्राग्नियमपाशिनाम् । सर्वेषांलोकपालानांभवनानिसमन्ततः

मया दृष्टानि विन्ध्याग! नानाभोगप्रदानि च ।

इति चोक्त्वा ब्रह्मयोनिः पुनरुच्छ्वासमाविशात् ॥ २० ॥

उच्छ्वसन्तं मुनिं दृष्ट्वापुनःपप्रच्छशैलराट् । उच्छ्वासकारणंकिंतद्ब्रूहिदेवर्षेमम

इत्याकर्ण्य नगस्योक्तं देवर्षिरमितद्युतिः ।

अब्रवीच्छ्रूयतां वत्स! ममोच्छ्वासस्य कारणम् ॥ २२ ॥

गौरीगुरुस्तु हिमवाञ्छिवस्य श्वशुरः किल ।

सम्बन्धित्वात्पशुपतेः पूज्यआसीत्क्ष्माभृताम् ॥ २३ ॥

एवमेव च कैलासःशिवस्यावसथःप्रभुः । पूज्यः पृथ्वीभृतांजातोलोकेपापौघदारणः

प्रधः पर्वतो नीलो गन्धमादन एव च । पूज्याः स्वस्थानमासाद्य सर्वएवक्षमाभृतः
पर्येति च विश्वात्मा सहस्रकिरणः स्वराट् । सग्रहर्क्षगणोपेतः सोऽयंकनकपर्वतः
त्मानं मनुते श्रेष्ठं वरिष्ठं चधराभृताम् । सर्वेषामहमेवाग्र्योनास्तिलोकेषुमत्समः
एवं मानाभिमानं तं स्मृत्वोच्छ्वासो मयोज्झितः ।
न्तु नैतावताकृत्यं तपोवलवतां नग! । प्रसङ्गतो मयोक्तं ते गमिष्यामि निजंगृहम्

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां दशमस्कन्धे
विन्ध्योपाख्यानवर्णनं नामद्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः

### मेरुगर्वापहारायविन्ध्योत्थानवर्णनम्

सूत उवाच

वं समुपदिश्याऽयं देवर्षिः परमः स्वराट् । जगाम ब्रह्मणोलोकंस्वैरचारीमहामुनिः
गते मुनिवरे विन्ध्यश्चिन्तां लेभेऽनपायिनीम् ।
नैव शान्ति स लेभे च सदाऽन्तःकृतशोचनः ॥ २ ॥
कथं किन्त्वत्र मे कार्यं कथं मेरुं जयाम्यहम् ।
नैव शान्ति लभे नाऽपि स्वास्थ्यं मे मानसे भवेत् ॥ ३ ॥
"धिगुत्साहं च मानं च धिङ्मे कीर्ति च धिक्कुलम् ।"
धिग्बलं मे पौरुषं धिक् स्मृतं पूर्वैर्महात्मभिः ।
एवं चिन्तयमानस्य विन्ध्यस्य मनसि स्फुटम् ॥ ४ ॥
ादुर्भूता मतिः कार्ये कर्तव्या दोषकारिणी । मेरुप्रदक्षिणांकुर्वन्नित्यमेवदिवाकरः
ग्रहर्क्षगणोपेतः सदा दृप्यत्ययंनगः । तस्य मार्गस्य संरोधं करिष्यामि निजैःकरैः

तदा निरुद्धो द्युमणिः परिक्रामेत्कथं नगम् एवं मार्गे निरुद्धे तु मया दिनकरस्यच

भग्नदर्पो दिव्यनगो भविष्यति विनिश्चितम् ।

एवं निश्चित्य विन्ध्याद्रिः खं स्पृशन्ववृधे भुजैः ॥ ८ ॥

महोन्नतैः शृङ्गवरैः सर्वं व्याप्य व्यवस्थितः ।

कदोदेष्यति भास्वांस्तं रोधयिष्याम्यहं कः

एवं सञ्चिन्तयानस्यसाव्यतीयाय शर्वरी । प्रभातं विमलं जज्ञे दिशोवितमिराः करैः कुर्वन्स निर्गतो भानुरुदयायोदये गिरौ । प्रकाशतेस्म विमलं नभो भानुकरैः शुभैः विकाशं नलिनींभेजेमीलनञ्चकुमुद्वती । स्वानिकार्याणि सर्वेच लोकाःसमुपतस्थिरे हव्यं कव्यं भूतबलिं देवानाञ्च प्रवर्धयन् । प्राह्णापराह्णमध्याह्नविभागेन दिवषांपतिः

एवं प्राचीं तथाऽऽग्नेयीं समाश्वास्य वियोगिनीम् ।

ज्वलन्तीं चिरकालीनविरहादिव कामिनीम् ॥ १४

भास्करोऽथ कृशानोश्चदिशं नूनंविहायच । याम्यां गन्तुं ततस्तूर्णंप्रतस्थेकमलाकरः

न शेकुश्चाऽग्रतो गन्तुं ततोऽनूरुर्व्यजिज्ञपत् ।

अनूरुरुवाच

भानो! मानोन्नतो विन्ध्यो निरुध्य गगनं स्थितः ॥ १६ ॥

स्पर्धते मेरुणा प्रेप्सुस्त्वद्वृत्ताञ्च प्रदक्षिणाम् ।

सूत उवाच

अनूरुवाक्यमाकर्ण्य सविता ह्यास चिन्तयन् ॥ १७ ॥

अहोगगनमार्गोऽपिरुध्यतेचाऽतिविस्मयः । प्रायःशूरोनकिंकुर्यादुत्पथेवर्त्मनिस्थितः निरुद्धो नो वाजिमार्गो दैवंहि बलवत्तरम् । राहुबाहुग्रहव्यग्रो यः क्षणंनाऽवतिष्ठते स चिरंरुद्धमार्गोऽपिकिंकरोति विधिर्बली । एवंचमार्गे संरुद्धे लोकाःसर्वेचसेश्वराः नान्वविन्दन्त शरणं कर्तव्यं नाऽन्वपद्यत । चित्रगुप्तादयः सर्वे कालं जानन्ति सूर्यतः संरुद्धोविन्ध्यगिरिणाअहोदैवविपर्ययः । यदा निरुद्धः सविता गिरिणा स्पर्धया तदा

नष्टः स्वाहास्वधाकारो नष्टप्रायमभूज्जगत् ।

एवञ्च पाश्चिमा लोका दाक्षिणात्यास्तथैव च ॥ २३ ॥
निद्रामीलितचक्षुष्का निशामेव प्रपेदिरे । प्राञ्चस्तथोत्तराहाश्चतीक्ष्णतापप्रतापिताः
मृता नष्टाश्च भग्नाश्चविनाशमभजन्प्रजाः । हाहाभूतं जगत्सर्वं स्वधाकव्यविवर्जितम्
देवाः सेन्द्राः समुद्विग्नाः किं कुर्म इतिवादिनः ॥ २५ ॥
इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां दशमस्कन्धे
देवीमाहात्म्ये विन्ध्योपाख्यानंनाम तृतीयोऽध्याय. ॥ ३ ॥

---

## चतुर्थोऽध्यायः

### ब्रह्मादिभीरुद्रप्रार्थनवर्णनम्

सूत उवाच

ततः सर्वे सुरगणा महेन्द्रप्रमुखास्तदा । पद्मयोनिं पुरस्कृत्य रुद्रं शरणमन्वयुः ॥१
उपतस्थुःप्रणतिभिःस्तोत्रैश्चारुविभूतिभिः । देवदेवं गिरिशयं शशिलोलितशेखरम्

देवा ऊचुः

जयदेव! गणाध्यक्ष! उमालालितपङ्कज !। अष्टसिद्धिविभूतीनां दात्रे भक्तजनाय ते ॥
महामायाविलसितस्थानाय परमात्मने । वृषाङ्कायामरेशाय कैलाशस्थितिशालिने ॥
अहिर्बुध्न्याय मान्यायमनवे मानदायिने । अजाय बहुरूपाय स्वात्मारामाय शम्भवे
गणनाथाय देवाय गिरिशाय नमोऽस्तु ते ।
महाविभूतिदात्रे ते महाविष्णुस्तुताय च ॥ ६ ॥
विष्णुहृत्कञ्जवासाय महायोगरताय च । योगगम्याय योगाय योगिनां पतये नमः
योगीशाय नमस्तुभ्यं योगानां फलदायिने । दीनदानपरायाऽपि दयासागरमूर्तये ॥
आर्तिप्रशमनायोग्रवीर्याय गुणमूर्तये । वृषध्वजाय कालाय कालकालाय ते नमः ॥

सूत उवाच

एवं स्तुतः स देवेशो यज्ञभुग्भिर्वृषध्वजः । प्राहगम्भीरयावाचा प्रहसन्विबुधर्षभान्

श्रीभगवानुवाच

प्रसन्नोऽहं दिविषदः! स्तोत्रेणोत्तमपूरुषाः !। मनोरथं पूरयामि सर्वेषां देवतर्षभाः !॥

देवा ऊचुः

सर्वदेवेश! गिरिश! शशिमौलिविराजित !। आर्तानांशङ्करस्त्वञ्चशं विधेहिमहाबल!

पर्वतो विन्ध्यनामाऽस्तिमेरुद्वेष्टामहोन्नतः । भानुमार्गनिरोद्धाहिसर्वेषांदुःखदोऽनघ

तद्वृद्धिस्तम्भयेशान सर्वकल्याणकृद्भव !। भानुसञ्चाररोधेन कालज्ञानं कथम्भवेत् ॥

नष्टस्वाहास्वधाकारे लोके कः शरणं भवेत् ।

अस्माकञ्च भयार्तानां भवानेव हि दृश्यते ॥ १५ ॥

दुःखनाशकरो देव प्रसीद! गिरिजापते !।

श्रीभगवानुवाच

नाऽस्माकं शक्तिरस्तीह तद्वृद्धिस्तम्भने सुराः ॥ १६ ॥

इममेवं वदिष्यामो भगवन्तंरमाधवम् । सोऽस्माकं प्रभुरात्माच पूज्यःकारणरूपधृक्

गोविन्दो भगवान्विष्णुः सर्वकारणकारणः ।

तं गत्वा कथयिष्यामः स दुःखान्तो भविष्यति ॥ १८ ॥

इत्येवमाकर्ण्य गिरीशभाषितं देवाश्च सेन्द्राः सपयोजसम्भवाः ।

रुद्रं पुरस्कृत्य च वेपमाना वैकुण्ठलोकं प्रति जग्मुरञ्जसा ॥ १९ ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यांसंहितायां दशमस्कन्धे

रुद्रप्रार्थनंनाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः

### स्तवप्रसन्नेनविष्णुनादेवेभ्योवरदानम्

सूत उवाच

ते गत्वा देवदेवेशं रमानाथं जगद्गुरुम् । विष्णुं कमलपत्राक्षं ददृशुः प्रभयान्वितम्

स्तोत्रेण तुष्टुवुर्भक्त्या गद्गदस्वरसत्कृताः ।

देवाऊचुः

जय विष्णो! रमेशाऽऽद्य महापुरुषपूर्वज !॥ २ ॥

दैत्यारे! कामजनक! सर्वकामफलप्रद ! । महावराह! गोविन्द! महायज्ञस्वरूपक !॥

महाविष्णो! ध्रुवेशाऽऽद्य! जगदुत्पत्तिकारण !। मत्स्यावतारेवेदानामुद्धाराधाररूपक!

सत्यव्रतधराधीश! मत्स्यरूपाय ते नमः । जयाऽकूपारदैत्यारे! सुरकार्यसमर्पक !॥

अमृताप्तिकरेशान! कूर्मरूपाय ते नमः । जयाऽऽदिदैत्यनाशार्थमादिसूकररूपधृक ॥

महोद्धारकृतोद्योगकोलरूपाय ते नमः । नारसिंहं वपुः कृत्वा महादैत्यं ददार यः ॥७

करजैर्वरदृप्ताङ्गं तस्मै नृहरये नमः। वामनं रूपमास्थाय त्रैलोक्यैश्वर्यमोहितम् ॥

बलिं सञ्छलयामास तस्मै वामनरूपिणे । दुष्टक्षत्रविनाशाय सहस्रकरशत्रवे ॥ ६ ॥

रेणुकागर्भजाताय जामदग्न्याय ते नमः । दुष्टराक्षसपौलस्त्यशिरश्छेदपटीयसे ॥१०

श्रीमद्दाशरथे तुभ्यं नमोऽनन्तक्रमाय च । कंसदुर्योधनाद्यैश्चदैत्यैः पृथ्वीशलाञ्छनैः

भाराक्रान्तां महीं योऽसावुज्जहारमहाविभुः । धर्मं संस्थापयामासपापं कृत्वासुदूरतः

तस्मै कृष्णाय देवाय नमोऽस्तु बहुधा विभो !।

दुष्टयज्ञविघाताय पशुहिंसानिवृत्तये ॥ १३ ॥

बौद्धरूपं दधौ योऽसौतस्मैदेवाय तेनमः । म्लेच्छप्रायेऽखिलेलोकेदुष्टराजन्यपीडिते

कल्किरूपं समादध्यौ देवदेवाय ते नमः । दशावतारास्ते देवभक्तानां रक्षणाय वै ॥

दुष्टदैत्यविघाताय तस्मात्त्वं सर्वदुःखहृत् । जयभक्तार्तिनाशाय धृतं नारीजलात्मसु

रूपंयेनत्वयादेव! कोऽन्यस्त्वत्तोदयानिधिः । इत्येवंदेवदेवेशंस्तुत्वाश्रीपीतवाससम्
प्रणेमुर्भक्तिसहिताः साष्टाङ्गं विबुधर्षभाः । तेषां स्तवं समाकर्ण्य देवःश्रीपुरुषोत्तमः
उवाच विबुधान्सर्वान्हर्षयञ्छ्रीगदाधरः ।

श्रीभगवानुवाच

प्रसन्नोऽस्मि स्तवेनाऽहं देवास्तापं विमुञ्चथ ॥ १६ ॥
भवतां नाशयिष्यामि दुःखं परमदुःसहम् । वृणुध्वञ्च वरं मत्तो देवाः परमदुर्लभम्
ददामि परमप्रीतः स्तवस्याऽस्य प्रसादतः । य एतत्पठतेस्तोत्रंकल्यउत्थायमानवः
मयि भक्तिं परां कृत्वा न तं शोकः स्पृशेत्कदा ।
अलक्ष्मीकालकर्णी च नाऽऽक्रामेत्तद् गृहं सुराः ॥ २२ ॥
नोपसर्गा नवेतालानग्रहाब्रह्मराक्षसाः । न रोगावातिकाःपैत्ताःश्लेष्मसम्भविनस्तथा
नाऽकालमरणं तस्यकदापिचभविष्यति । सन्ततिश्चिरकालस्थाभोगाःसर्वेसुखादयः
सम्भविष्यन्ति तन्मर्त्यगृहे यस्तोत्रपाठकः । किंपुनर्बहुनोक्तेनस्तोत्रंसर्वार्थसाधकम्
एतस्यपठनान्नृणां भुक्तिमुक्ती न दूरतः । देवा भवत्सु यद्दुःखं कथ्यतां तदसंशयम्
नाशयामि न सन्देहश्चाऽत्र कार्योऽणुरेव च । एवंश्रीभगवद्वाक्यंश्रुत्वासर्वेदिवौकसः
प्रसन्नमनसः सर्वे पुनरूचुर्वृषाकपिम् ।

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां दशमस्कन्धे
श्रीविष्णुनादेवेभ्योवरदानंनाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः

### अगस्त्यस्तुतिपूर्वकंदेवेभ्योमुनिनाप्रीतेनसान्त्वनादानम्

सूत उवाच

श्रीशस्य वचनाद्देवाः सन्तुष्टा सर्वं एव हि । प्रसन्नमनसो भूत्वा पुनरेनं समूचिरे ॥

देवा ऊचुः

देवदेव! महाविष्णो! सृष्टिस्थित्यन्तकारण !।

विष्णो विन्ध्यनगोऽर्कस्य मार्गरोधं करोति हि ॥ २ ॥

तेनभानुविरोधेन सर्वं एव महाविभो !। अलब्धभोगभागा हि किं कुर्मः कुत्रयामहि

श्रीभगवानुवाच

या कर्त्री सर्वंजगतामाद्या च कुलवर्धनी । देवी भगवती तस्याः पूजकः परमद्युतिः

अगस्त्यो मुनिवर्योऽसौ वाराणस्यां समासते ।

तत्तेजोवञ्चकोऽगस्त्यो भविष्यति सुरोत्तमाः !॥ ५ ॥

तंप्रसाद्यद्विजवरमगस्त्यंपरमौजसम् । याचध्वंविबुधाःकाशींगत्वानिःश्रेयसःपदीम्

सूत उवाच

एवं समुपदिष्टास्तेविष्णुनाविबुधोत्तमाः । प्रतीताः प्रणताःसर्वेजग्मुर्वाराणसींपुरीम्

क्षणेन विबुधश्रेष्ठागत्वाकाशीपुरींशुभाम् । मणिकर्णीं समाप्लुत्यसचैलंभक्तिसंयुताः

सन्तर्प्य देवांश्च पितॄन्दत्त्वा दानंविधानतः । आगत्यमुनिवर्यस्यस्वाऽऽश्रमंपरमंमहत्

प्रशान्तश्वापदाकीर्णंनानापादपसङ्कुलम् । मयूरैः सारसैर्हंसैश्चक्रवाकैरुपाश्रितम् ॥१०

महावराहैः कोलैश्च व्याघ्रैः शार्दूलकैरपि । मृगैरुरुभिरत्यर्थंखड्गैः शरभकैरपि ॥ ११

समाश्रितं परमया लक्ष्म्या मुनिवरं तदा । दण्डवत्पतिताः सर्वे प्रणेमुश्च पुनः पुनः

देवाऊचुः

जयद्विजगणाधीश! मान्य पूज्य! धरासुर !। वातापीबलनाशाय नमस्ते कुम्भयोनये

लोपामुद्रापते! श्रीमन्मित्रावरुणसम्भव !।
सर्वविद्यानिधेऽगस्त्य! शास्त्रयोने! नमोऽस्तु ते ॥ १४ ॥
यस्योदये प्रसन्नानि भवन्त्युज्ज्वलभाञ्ज्यपि ।
तोयानि तोयराशीनां तस्मै तुभ्यं नमोऽस्तुते ॥ १५ ॥
काशपुष्पविकासाय लङ्कावासप्रियाय च । जटामण्डलयुक्ताय सशिष्यायनमोऽस्तुते
जय सर्वामरस्तव्यगुणराशे! महामुने !। वरिष्ठाय च पूज्याय सस्त्रीकाय नमोऽस्तुते
प्रसादः क्रियतां स्वामिन्वयं त्वां शरणं गताः ।
दुस्तराच्छैलजाद्दुःखात्पीडिताः परमद्युते !॥ १८ ॥
इत्येवं संस्तुतोऽगस्त्योमुनिः परमधार्मिकः । प्राह प्रसन्नयावाचाविहसन्द्विजसत्तमः

मुनिरुवाच

भवन्तः परमश्रेष्ठा देवास्त्रिभुवनेश्वराः । लोकपालामहात्मानो निग्रहाऽनुग्रहक्षमाः ॥
योऽमरावत्यधीशानः कुलिशं यस्य चाऽऽयुधम् ।
सिद्धयष्टकश्च यद्द्वारि स शक्रो मरुताम्पतिः ॥ २१ ॥
वैश्वानरः कृशानुर्हि हव्यकव्यवहोऽनिशम् ।
मुखं सर्वामराणां हि सोऽग्निः किं तस्य दुष्करम् ॥ २२ ॥
रक्षोगणाधिपोभामःसर्वेषांकर्मसाक्षिकः । दण्डव्यग्रकरोदेवःकिंतस्याऽसुकरं सुराः!
तथाऽपि यदि देवेशाः! कार्यं मच्छक्तिसिद्धिभृत् ।
अस्ति चेदुच्यतां देवाः करिष्यामि न संशयः ॥ २४ ॥
एवं मुनिवरेणोक्तं निशम्यविबुधर्षभाः । प्रतीताः प्रणयोद्विग्नाः कार्यं निजगदुर्निजम्
महर्षे! विन्ध्यगिरिणा!निरुद्धोऽर्कविनिर्गमः । त्रैलोक्यंतेनसाम्बष्टंहाहाभूतमचेतनम्
तद्वृद्धिस्तम्भयमुने!निजयातपसःश्रिया । भवतस्तेजसाऽगस्त्यनूनंनक्षोभविष्यति
एतदेवाऽस्मदीयश्च कार्यं कर्तव्यमस्ति हि ।

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां दशमस्कन्धे अगस्त्यद्वारादेवसान्त्वनंनाम षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः

### विन्ध्यसमुन्नतिकुण्ठनवर्णनम्

सूत उवाच

इतिवाक्यं समाकर्ण्य विबुधानां द्विजोत्तमः । करिष्येकार्यमेतद्धः प्रत्युवाचततोमुनिः
अङ्गीकृते तदा कार्ये मुनिनाकुम्भजन्मना । देवाः प्रमुदिताः सर्वे बभूवुर्द्विजसत्तमाः ॥

ते देवाः स्वानि धिष्ण्यानि भेजिरे मुनिवाक्यतः ।
पत्नीं मुनिवरः श्रीमानुवाच नृपकन्यकाम् ॥ ३ ॥

अये नृपसुते! प्राप्तो विघ्नोऽनर्थस्य कारकः । भानुमार्गनिरोधेनकृतो विन्ध्यमहीभृता
अज्ञातं कारणंतच्चस्मृतंवाक्यंपुरातनम् । काशीमुद्दिश्ययद्गीतंमुनिभिस्तत्त्वदर्शिभिः

अविमुक्तं न मोक्तव्यं सर्वथैव मुमुक्षुभि- ।
किन्तु विघ्ना भविष्यन्ति काश्यां निवसतां सताम् ॥ ६ ॥

सोऽन्तरायोमयाप्राप्तःकाश्यांनिवसताप्रिये । इत्येवमुक्त्वाभार्यांतां मुनिःपरमतापनः
मणिकर्ण्यांसमाप्लुत्यदृष्ट्वाविश्वेश्वरंविभुम् । दण्डपाणिंसमभ्यर्च्यकालराजंसमागतः
कालराजमहाबाहो! भक्तानां भयहारक !! कथं दूरयसे पुर्याः काशीपुर्यास्त्वमीश्वरः
त्वंकाशीवासविघ्नानां नाशकोभक्तरक्षकः । मांकिंदूरयसेस्वामिन्भक्तार्तिविनिवारक
परापवादो नोक्तो मे न पैशुन्यं नचानृतम् । केनकर्मविपाकेन काश्या दूरं करोषिमाम्

एवं प्राथ्र्य च तं कालनाथं कुम्भोद्भवो मुनिः ।
जगाम साक्षिविघ्नेशं सर्वविघ्ननिवारणम् ॥ १२ ॥

तं दृष्ट्वाऽभ्यर्च्य सम्प्रार्थ्य ततः पुर्या विनिर्गतः ।
लोपामुद्रापतिः श्रीमानगस्त्यो दक्षिणां दिशम् ॥ १३ ॥

काशीविरहसन्तप्तो महाभाग्यनिधिर्मुनिः । संस्मृत्याऽनुक्षणंकाशींजगामसहभार्यया
तपोयानमिवाऽऽरुह्य निमिषार्धेनतै मुनिः । अग्रे ददर्श तं विन्ध्यं रुद्धाम्बरमथोन्नतम्

चकम्पे चाऽचलस्तूर्णं दृष्ट्वाऽग्रे स्थितं मुनिम् ।

गिरिः खर्वतरो भूत्वा विवक्षुरवनीमिव ॥ १९ ॥

दण्डवत्पतितो भूमौ साष्टाङ्गं भक्तिभावितः । तं दृष्ट्वानम्रशिखरं विन्ध्यंनाममहागिरिम्

प्रसन्नवदनोऽगस्त्योमुनिर्विन्ध्यमथाऽब्रवीत् । वत्सैवंतिष्ठतावत्त्वंयावदागम्यतेमया

अशक्तोऽहं गण्डशैलारोहणेतवपुत्रक !। एवमुक्त्वामुनिर्याम्यदिशम्प्रति गमोत्सुकः

आरुह्य तस्य शिखराण्यवारुहदनुक्रमात् । गतो याम्यदिशंचापि श्रीशैलंप्रेक्ष्यवर्त्मनि

मलयाचलमासाद्य तत्राऽऽश्रमपरोऽभवत् । साऽपिदेवीतत्रविन्ध्यमागतामनुपूजिता

लोकेषु प्रथिता विन्ध्यवासिनीति च शौनक !।

सूत उवाच

एतच्चरित्रं परमं शत्रुनाशनमुत्तमम् ॥ २२ ॥

अगस्त्यविन्ध्यनगयोराख्यानं पापनाशनम् । राज्ञांविजयदंतच्चद्विजानां ज्ञानवर्धनम्

वैश्यानां धान्यधनदंशूद्राणांसुखदंतथा । धर्मार्थीधर्ममाप्नोति धनार्थीधनमाप्नुयात्

कामानवाप्नुयात्कामी भक्त्या चाऽस्य सकृच्छ्रवात् ।

एवं स्वायम्भुवमनुर्देवीमाराध्य भक्तितः ॥ २५ ॥

लेभे राज्यं धरायाश्च निजमन्वन्तराश्रयम् ॥ २६ ॥

इत्येतद्वर्णितं सौम्य! मयामन्वन्तराश्रितम् । आद्यंचरित्रंश्रीदेव्याःकिंपुनःकथयामिते

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां दशमस्कन्धे

विन्ध्यसमुन्नतिकुण्ठनंनाम सप्तमोऽध्यायः ॥ ७ ॥

# अष्टमोऽध्यायः

## मनूत्पत्तिवर्णनम्

शौनक उवाच

आद्यो मन्वन्तरः प्रोक्तोभवताचाऽयमुत्तमः । अन्येषामुद्भवंब्रूहिमनूनां दिव्यतेजसाम्

सूत उवाच

एवमाद्यस्यचोत्पत्तिंश्रुत्वास्वायम्भुवस्यहि ।अन्येषांक्रमशस्तेषांसम्भूतिंपरिपृच्छति

नारदः परमो ज्ञानी देवीतत्त्वार्थकोविदः ।

नारद उवाच

मनूनां मे समाख्याहि सूत्पत्तिञ्च सनातन !॥ ३ ॥

नारायण उवाच

प्रथमोऽयं मनुः स्वायम्भुवउक्तोमहामुने !। देव्याराधनतो येन प्राप्तंराज्यमकण्टकम्

प्रियव्रतोत्तानपादौ मनुपुत्रौ महौजसौ । राज्यपालनकर्तारौ विख्यातौ वसुधातले

द्वितीयश्च मनुः स्वारोचिष उक्तोमनीषिभिः । प्रियव्रतसुतः श्रीमानप्रमेयपराक्रमः

सस्वारोचिषनामाऽपिकालिन्दीकूलतोमनुः । निवासं कल्पयामाससर्वसत्त्वप्रियङ्करः

जीर्णपत्राशनो भूत्वा तपः कर्तुमनुव्रतः । देव्या मूर्तिं मृण्मयीं च पूजयामासभक्तितः

एवं द्वादश वर्षाणि वनस्थस्य तपस्यतः । देवी प्रादुरभूत्तात! सहस्रार्कसमद्युतिः ॥

ततः प्रसन्नादेवेशी स्तवराजेन सुव्रता । ददौ स्वारोचिषायैव सर्वमन्वन्तराश्रयम्

आधिपत्यंजगद्धात्रीतारिणीतिप्रथामगात् । एवंस्वारोचिषमनुस्तारिण्याराधनात्ततः

आधिपत्यञ्च लेभे स सर्वारातिविवर्जितम् ।

धर्मं संस्थाप्य विधिवद्राज्यं पुत्रैः समं विभुः ॥ १२ ॥

भुक्त्वा जगाम स्वर्लोकं निजमन्वन्तराश्रयात् । तृतीय उत्तमोनाम प्रियव्रतसुतोमनुः

गङ्गाकूले तपस्तप्त्वा वाग्भवं सञ्जपन्रहः । वर्षाणि त्रीण्युपवसन्देव्यनुग्रहमाविशत्

स्तुत्वा देवीं स्तोत्रवरैर्भक्तिभावितमानसः ।
राज्यं निष्कण्टकं लेभे सन्ततिं चिरकालिकीम् ॥ १५ ॥
राज्योत्थान्यपि सौख्यानि भुक्त्वा धर्मान्युगस्य च ।
सोऽप्याजगाम पदवीं राजर्षिवरभाविताम् ॥ १६ ॥
चतुर्थस्तामसो नाम प्रियव्रतसुतो मनुः । नर्मदादक्षिणे कूले समाराध्य जगन्मयीम्
महेश्वरीं कामराजकूटजापपरायणः । वासन्ते शारदे काले नवरात्रसपर्यया ॥१८॥
तोषयामास देवेशीं जलजाक्षीमनूपमाम् ।
तस्याः प्रसादमासाद्य नत्वा स्तोत्रैरनुत्तमैः ॥ १९ ॥
अकण्टकं महद्राज्यं बुभुजे गतसाध्वसः । पुत्रान्बलोद्धताङ्कूरान्दशवीर्यनिकेतनान्
उत्पाद्य निजभार्यायां जगामाऽम्बरमुत्तमम् । पञ्चमो मनुराख्यातो रैवतस्तामसानुजः
कालिन्दीकूलमाश्रित्य जजाप कामसञ्ज्ञकम् ।
बीजं परमवाग्दर्पदायकं साधकाश्रयम् ॥ २० ॥
एतदाराधनादाप स्वाराज्यर्द्धिमनुत्तमाम् । बलमप्रहतं लोके सर्वसिद्धिविधायकम्
सन्ततिं चिरकालीनां पुत्रपौत्रमयीं शुभाम् ।
धर्मान्व्यस्य व्यवस्थाप्य विषयानुपभुज्य च ॥ २४ ॥
जगामाप्रतिमः शूरो महेन्द्रालयमुत्तमम् ॥ २५ ॥
इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां दशमस्कन्धे
चाक्षुषमनूत्पत्तिवर्णनंनामाऽष्टमोऽध्यायः ॥ ८ ॥

# नवमोऽध्यायः

## चाक्षुषमनुवृत्तवर्णनम्

### श्रीनारायण उवाच

अथाऽतः श्रूयतां चित्रं देवीमाहात्म्यमुत्तमम् । अङ्गपुत्रेणमनुनायथाऽऽसंराज्यमुत्तमम्

अङ्गस्य राज्ञः पुत्रोऽभूच्चाक्षुषो मनुरुत्तमः । षष्ठः सपुलहं नाम ब्रह्मर्षिं शरणं गतः ॥२

ब्रह्मर्षे! त्वामहं प्राप्तः शरणं प्राणतार्तिहन् !।

शाधि मां किङ्करं स्वामिन्येनाऽहं प्राप्नुयां श्रियम् ॥ ३ ॥

मेदिन्याश्चाधिपत्यंमेस्याद्यथावदखण्डितम् । अव्याहतम्भुजबलंशस्त्रास्त्रनिपुणंक्षमम्

सन्ततिश्चिरकालीनाऽप्यखण्डं वयउत्तमम् ।

अन्तेऽपवर्गलाभश्च स्यात्तथोपदिशाऽद्य मे ॥ ५ ॥

इत्येवं वचनं तस्य मनोःकर्णपथेऽभवत । प्रत्युवाचमुनिःश्रीमान्देव्याःसंराधनम्परम्

राजन्नाकर्णय वचोममश्रोत्रसुखंमहत् । शिवामाराधयाऽद्य त्वं तत्प्रसादादिदम्भवेत्

### चाक्षुष उवाच

कीदृगाराधनं देव्यास्तस्याः परमपावनम् । केनाकारेण कर्तव्यं कारुण्याद्वक्तुमर्हसि

### मुनिरुवाच

राजन्नाकर्ण्यतां देव्याः पूजनं परमव्ययम् । वाग्भवं बीजमव्यक्तं सञ्जप्यमनिशं तथा

त्रिकालं सञ्जपन्मर्त्यो भुक्तिमुक्तीलभेत्तु हि । नबीजं वाग्भवादन्यदस्तिराजन्यनन्दन

जपात्सिद्धिकरं बीर्यबलवृद्धिकरंपरम् । एतस्यजापात्पाद्मोऽपिसृष्टिकर्तामहाबलः

विष्णुर्यज्जपतः सृष्टिपालकः परिकीर्तितः । महेश्वरोऽपि संहर्ता यज्जपादभवन्नृपः ॥

लोकपालास्तथाऽन्येऽपि निग्रहानुग्रहक्षमाः । यदाश्रयाद्भूवंस्ते बलबीर्यमदोद्धताः

एवंत्वमपिराजन्यमहेशींजगदम्बिकाम् । समाराध्य महर्द्धिश्चलप्स्यसेऽचिरकालतः

एवं स मुनिवर्येण पुलहेन प्रबोधितः । अङ्गपुत्रस्तपस्तप्तुं जगाम विरजां नदीम् ॥

स च तेपे तपस्तीव्रंवाग्भवस्यजपेरतः। बीजस्य पृथिवीपालः शीर्णपर्णाशनोविभुः
प्रथमेऽब्देपल्लवाशोद्वितीयेतोयभक्षणः। तृतीयेऽब्दे पवनभुक्तस्थौस्थाणुरिवाचलः
एवं द्वादशवर्षाणित्यक्ताहारस्यभूभुजः। वाग्भवंजपतोनित्यं मतिरासीच्छुभान्विता
तथा च देव्याः परमं मन्त्रं सञ्जपतोरहः। प्रादुरासीज्जगन्माता साक्षाच्छ्रीपरमेश्वरी
तेजोमयी दुराधर्षा सर्वदेवमयीश्वरी ।उवाचाङ्गतनूजन्तं प्रसन्ना ललिताक्षरम् ॥२०

देव्युवाच

पृथिवीपाल! ते यत्स्याच्चिन्तितं परमं वरम्।
तद् ब्रूहि सम्प्रदास्यामि तपसा ते सुतोषिता ॥ २१ ॥

चाक्षुष उवाच

जानासि देवदेवेशि! यत्प्रार्थ्यंमनसेप्सितम्। अन्तर्यामिस्वरूपेणतत्सर्वं देवपूजिते
तथाऽपि मम भाग्येनजातंयत्तवदर्शनम्। ब्रवीमि देविमे देहिराज्यं मन्वन्तराश्रितम्

श्रीदेव्युवाच

दत्तमन्वन्तरस्याऽस्य राज्यं राजन्यसत्तम !।
पुत्रा महाबलास्ते च भविष्यन्ति गुणाधिकाः ॥ २४ ॥

राज्यंनिष्कण्टकंभाविमोक्षोऽन्तेचापिनिश्चितः। एवं दत्त्वा वरंदेवीमनवेवरमुत्तमम्
जगामाऽदर्शनंसद्यस्तेनभक्त्याचसंस्तुता। सोऽपिराजामनुः षष्ठःप्रसादात्तुतदाश्रयात्

बभूव मनुमान्योऽसौ सार्वभौमसुखैर्वृतः।
पुत्रास्तस्यबलोद्युक्ताः कार्यभार सहाद्भुताः ॥ २७ ॥

देवीभक्ताश्च शूराश्च महाबलपराक्रमाः। अन्यत्र माननीयाश्च महाराज्यसुखास्पदाः
एवं च चाक्षुषमनुर्देव्याराधनतः प्रभुः। बभूव मनुवर्योऽसौ जगामाऽन्ते शिवापदम्

इति श्रीदेवीभागवते महापुराणे ऽष्टादशसाहस्र्यां संहितायां दशमस्कन्धे
देवीचरित्रे चाक्षुषमनुवृत्तवर्णनंनाम नवमोऽध्यायः ॥ ९ ॥

# दशमोऽध्यायः

## सुरथनृपतिवृत्तान्तवर्णनम्

श्रीनारायण उवाच

सप्तमोमनुराख्यातो मनुर्वैवस्वतः प्रभुः। श्राद्धदेवः परानन्दभोक्तामान्यस्तुभूभुजाम्
स च वैवस्वतमनुः परदेव्याः प्रसादतः। तथा तत्तपसा चैव जातो मन्वन्तराधिपः
अष्टमोमनुराख्यातः सावर्णिः प्रथितः क्षितौ। स जन्मान्तरआराध्यदेवींतद्वरलाभतः
जातो मन्वन्तरपतिः सर्वराजन्यपूजितः। महापराक्रमी धीरो देवीभक्तिपरायणः॥

नारद उवाच

कथंजन्मान्तरेतेनमनुनाऽऽराधनंकृतम्। देव्याः पृथिव्युद्भवायास्तन्ममाऽऽख्यातुमर्हसि

श्रीनारायण उवाच

चैत्रवंशसमुद्भूतो राजास्वारोचिषेऽन्तरे। सुरथो नाम विख्यातोमहाबलपराक्रमः
गुणग्राही धनुर्धारी मान्यः श्रेष्ठः कविः कृती। धनसंग्रहकर्ता च दातायाचकमण्डले
अरीणांमर्दनोमानीसर्वास्त्रकुशलोबली। तस्यैकदाबभूवुस्तेकोलाविध्वंसिनोनृपाः
शत्रवः सैन्यसहिताः परिवार्यैनमूर्जिताः। रुरुधुर्नगरीं तस्य राज्ञो मानधनस्य हि॥
तदा स सुरथो नाम राजा सैन्यसमावृतः। निर्ययौ नगरात्स्वीयात्सर्वशत्रुनिबर्हणः
तदा स समरे राजा सुरथः शत्रुभिर्जितः। अमात्यैर्मन्त्रिभिश्चैवतस्यकोशगतं धनम्

हृतं सर्वमशेषेण तदाऽतप्यत भूमिपः।<br>
निष्कासितश्च नगरात्स राजा परमद्युतिः॥ १२॥<br>
जगामाऽश्वमथाऽऽरुह्य मृगयामिषतो वनम्।<br>
एकाकीविजनेऽरण्ये बभ्रामोद्भ्रान्तमानसः॥ १३॥

मुनेःकस्यचिदागत्यस्वाश्रमंशान्तमानसः। प्रशान्तजन्तुसंयुक्तंमुनिशिष्यगणैर्युतम्
उवास कञ्चित्कालं स राजा परमशोभने। आश्रमे मुनिवर्यस्य दीर्घदृष्टेःसुमेधसः॥

एकदा स महीपालो मुनिपूजावसानके । कालेगत्वाप्रणम्याऽऽशुपप्रच्छविनयान्वितः
मुने! मम मनोदुःखंबाधतेचाधिसम्भवम् । ज्ञाततत्त्वस्यभूदेव! निष्प्रज्ञस्यचसन्ततम्
शत्रुभिर्निर्जितस्याऽपि हृतराज्यस्य सर्वशः । तथापि तेषुमनसिममत्वंजायतेस्फुटम्
किं करोमि क्व गच्छामि कथं शर्म लभे मुने !। त्वदनुग्रहमाशासे वदवेदविदाम्वर

मुनिरुवाच

आकर्णय महीपाल! महाश्चर्यकरं परम् । देवीमाहात्म्यमतुलं सर्वकामप्रदं परम् ॥
जगन्मयी महामाया विष्णुब्रह्महरोद्भवा । सा बलादपहृत्यैवजन्तूनां मानसानि हि
मोहाय प्रतिसंयच्छेदितिजानीहि भूमिप !। सासृजत्यखिलंविश्वंसापालयतिसर्वदा
संहारे हररूपेण संहरत्येव भूमिप !। कामदात्री महामाया कालरात्रिर्दुरत्यया ॥ २३॥
विश्वसंहारिणीकालीकमलाकमलालया । तस्यांसर्वंजगज्जातंतस्यांविश्वंप्रतिष्ठितम्
लयमेष्यति तस्याञ्च तस्मात्सैव परात्परा । तस्यादेव्याःप्रसादश्चयस्योपरिभवेन्नृप!
स एव मोहमत्येति नाऽन्यथा धरणीपते !॥ २५ ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां दशमस्कन्धे
सुरथनृपतिवृत्तवर्णनंनाम दशमोऽध्यायः ॥ १० ॥

---

# एकादशोऽध्यायः

## मधुकैटभवधवर्णनम्

राजोवाच

कासादेवी!त्वयाप्रोक्ताब्रूहिकालविदाम्वर !। कामोहयतिसत्त्वानिकारणंकिंभवेद्द्विज
कस्मादुत्पद्यते देवी किंरूपासाकिमात्मिका । सर्वमाख्याहिभूदेव! कृपयाममसर्वतः

मुनिरुवाच

राजन्देव्याःस्वरूपंतेवर्णयामिनिशामय । यथा चोत्पतिता देवीयेनवासाजगन्मयी

यदा नारायणोदेवोविश्वंसंहृत्ययोगराट् । आस्तीर्यशेषंभगवान्समुद्रे निद्रितोऽभवत्
तदा प्रस्वापवशगो देवदेवो जनार्दनः । तत्कर्णमलसञ्जातौ दानवौ मधुकैटभौ ॥
ब्रह्माणं हन्तुमुद्युक्तौ दानवौ घोररूपिणौ । तदा कमलजोदेवो दृष्ट्वा तौ मधुकैटभौ

निद्रितं देवदेवेशं चिन्तामाप दुरत्ययाम् ।

निद्रितो भगवानीशो दानवौ च दुरासदौ ॥ ७ ॥

किं करोमिकगच्छामिकथं शर्म लभे ह्यहम् । एवं चिन्तयतस्तस्यपद्मयोनेर्महात्मनः
बुद्धिः प्रादुरभूत्तात तदा कार्यप्रसाधिनी । यस्यावशंगतोदेवो निद्रितो भगवान्हरिः ॥

तां देवीं शरणं यामि निद्रां सर्वप्रसूतिकाम् ।

ब्रह्मोवाच

देवदेवि! जगद्धात्रि! भक्ताभीष्टफलप्रदे !॥ १० ॥

जगन्माये महामाये समुद्रशयने शिवे !। त्वदाज्ञावशगाः सर्वे स्वस्वकार्यविधायिनः
कालरात्रिर्महारात्रिर्मोहरात्रिर्मदोत्कटा । व्यापिनी वशगा मान्या महानन्दैकशेवधिः
महनीया महाराध्या माया मधुमती मही । परापराणां सर्वेषां परमा त्वं प्रकीर्तिता

लज्जा पुष्टिः क्षमा कीर्तिः कान्तिः कारुण्यविग्रहा ।

कमनीया जगद्वन्द्या जाग्रदादिस्वरूपिणी ॥ १४ ॥

परमापरमेशानी परानन्दापरायणा । एकाऽप्येकस्वरूपा च स द्वितीया द्वयात्मिका॥
त्रयी त्रिवर्गनिलया तुर्या तुर्यपदात्मिका । पञ्चमी पञ्चभूतेशी षष्ठीषष्ठेश्वरीति च
सप्तमी सप्तवारेशी सप्तसप्तवरप्रदा । अष्टमी वसुनाथा च नवग्रहमयीश्वरी ॥ १७ ॥
नवरागकला रम्या नवसङ्ख्या नवेश्वरी । दशमी दशदिक्पूज्यादशाशाव्यापिनीरमा
एकादशात्मिका चैकादशरुद्रनिषेविता । एकादशीतिथिप्रीता एकादशगणाधिपा
द्वादशी द्वादशभुजा द्वादशादित्यजन्मभूः । त्रयोदशात्मिका देवी त्रयोदशगणप्रिया
त्रयोदशाभिधा भिन्ना विश्वेदेवाधिदेवता । चतुर्दशेन्द्रवरदा चतुर्दशमनुप्रसूः ॥२१॥
पञ्चाधिकदशी वेद्या पञ्चाधिकदशी तिथिः । षोडशीषोडशभुजाषोडशेन्दुकलामयी
षोडशात्मकचन्द्रांशुव्याप्तदिव्यकलेवरा । एवं रूपाऽसि देवेशि! निर्गुणे! तामसोदये

त्वया गृहीतो भगवान्देवदेवो रमापतिः ।
एतौ दुरासदौ दैत्यौ विक्रान्तौ मधुकैटभौ ॥ २४ ॥
एतयोश्च वधार्थाय देवेशं प्रति बोधय ।

मुनिरुवाच

एवं स्तुता भगवती तामसी भगवत्प्रिया ॥ २५ ॥
देवदेवं तदा त्यक्त्वा मोहयामास दानवौ । तदैव भगवान्विष्णुःपरमात्माजगत्पतिः प्रबोधमाप देवेशो ददृशे दानवोत्तमौ । तदा तौ दानवौ घोरौ दृष्ट्वा तं मधुसूदनम् ॥ युद्धायकृतसङ्कल्पौ जग्मतुः सन्निधिं हरेः । युयुधेचततस्ताभ्यां भगवान्मधुसूदनः पञ्चवर्षसहस्राणि बाहुप्रहरणो विभुः । तौ तदाऽतिबलोन्मत्तौजगन्मायाविमोहितौ व्रियताम्वर इत्येवमूचतुः परमेश्वरम् । एवं तयोर्वचः श्रुत्वा भगवानादिपूरुषः ॥३०
वव्रे वध्यावुभौ मेऽद्य भवेतामितिनिश्चितम् ।
तौ तदाऽतिबलौ देवं पुनरेवोचतुर्हरिम् ॥ ३१ ॥
आवां जहि न यत्रोर्वी पयसा च परिप्लुता । तथेत्युक्त्वा भगवता गदाशङ्खभृतानृप कृत्वाचक्रेण वैछिन्ने जघने शिरसी तयोः । एवं देवीसमुत्पन्ना ब्रह्मणा संस्तुतानृप महाकाली महाराज सर्वयोगेश्वरेश्वरी । महालक्ष्म्यास्तथोत्पत्तिं निशामय महीपते!

इति श्रीदेवीभागवतेमहापुराणेऽष्टादशसाहस्र्यां संहितायां दशमस्कन्धे देवीमाहात्म्ये मधुकैटभवधवर्णनं नामैकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः

### भगवत्याशुम्भादीनाम्वधवर्णनं सावर्णिमनुकृतेराज्ञे वरदानम्

**मुनिरुवाच**

महिषीगर्भसम्भूतो महाबलपराक्रमः। देवान्सर्वान्पराजित्य महिषोऽभूज्जगत्प्रभुः ॥
सर्वेषांलोकपालानामधिकारान्महासुरः। बलान्निर्जित्यबुभुजे त्रैलोक्यैश्वर्यमद्भुतम् ॥
ततः पराजिताः सर्वे देवाः स्वर्गपरिच्युताः। ब्रह्माणञ्चपुरस्कृत्यतेजग्मुर्लोकमुत्तमम्
यत्रोत्तमौ देवदेवौ संस्थितौ शङ्कराच्युतौ। वृत्तान्तंकथयामासुर्महिषस्यदुरात्मनः
देवानाञ्चैव सर्वेषां स्थानानितरसाऽसुरः। विनिर्जित्य स्वयंभुङ्क्ते बलवीर्यमदोद्धतः
महिषासुरनामाऽसौदुष्टदैत्योऽमरेश्वरौ। वधोपायश्चतस्याऽऽशुचिन्त्यतामसुरार्दनौ
एवं श्रुत्वा स भगवान्देवानामार्तियुग्वचः। चकार कोपं सुबहुं तथा शङ्करपद्मजौ ॥

एवं कोपयुतस्याऽस्य हरेरास्यान्महीपते!।
तेजः प्रादुरभूद्दिव्यं सहस्रार्कसमद्युति ॥ ८ ॥

अथानुक्रमतस्तेजः सर्वेषां त्रिदिवौकसाम्। शरीरादुद्भवं प्राप हर्षयद्विबुधाधिपान्
यदभूच्छम्भुजं तेजो मुखमस्योदपद्यत। केशाबभूवुर्याम्येन वैष्णवेन च बाहवः ॥
सौम्येन च स्तनौजातौमाहेन्द्रेणच मध्यमः। वारुणेन ततोभूप! जङ्घोरूसम्बभूवतुः
नितम्बौ तेजसा भूमेः पादौ ब्राह्मेण तेजसा। पादाङ्गुल्योभानवेनवासवेन कराङ्गुलीः
कौबेरेण तथा नासा दन्ताः सञ्जज्ञिरे तदा। प्रजापत्येनोत्तमेन तेजसाचवसुधाधिप
पावकेन च सञ्जातं लोचनत्रितयंशुभम्। सान्ध्येन तेजसाजातेभ्रुकुट्यौतेजसानिर्भा
कर्णौ वायव्यतो जातौ तेजसो मनुजाधिप!। सर्वेषां तेजसादेवीजातामहिषमर्दिनी
शूलं ददौ शिवोविष्णुश्चक्रं शङ्खञ्च पाशभृत्। हुताशनोददौ शक्तिमारुतश्चापसायकौ
वज्रं महेन्द्रः प्रददौ घण्टाञ्चैरावताद्गजात्। कालदण्डंयमोब्रह्मा चाक्षमालाकमण्डलू
दिवाकरो रश्मिमालां रोमकूपेषु संददौ। कालः खड्गं तथाचर्मनिर्मलंवसुधाधिप

समुद्रो निर्मलं हारमजरे चाऽम्बरे नृप !।
चूडामणिं कुण्डले च कटकानि तथाऽङ्गदे ॥ १६ ॥

अर्धचन्द्रं निर्मलञ्च नूपुराणि तथा ददौ । ग्रैवेयकं भूषणञ्च तस्यै देव्यै मुदान्वितः विश्वकर्माचोर्मिकाञ्च ददौ तस्यै धरापते !। हिमवान्वाहनं सिंहंरत्नानिविविधानिच पानपात्रं सुरापूर्णं ददौ तस्यै धनाधिपः । शेषश्च भगवान्देवो नागहारं ददौ विभुः अन्यैरशेषविबुधैर्मानिता सा जगन्मयी । तां तुष्टुवुर्महादेवीं देवामहिषपीडिताः॥ नानास्तोत्रैर्महेशानीं जगदुद्भवकारिणीम् । तेषां निशम्यदेवेशी स्तोत्रंविबुधपूजिता महिषस्यवधार्थाय महानादञ्चकार ह । तेन नादेन महिषश्चकितोऽभूद्धरापते !॥ २५ आससादजगद्धात्रीं सर्वसैन्यसमावृतः । ततः स ययुधे देव्या महिषाख्यो महासुरः शस्त्रास्त्रैर्बहुधा क्षिप्तैः पूरयन्नम्बरान्तरम् । चिक्षुरो ग्रामणीः सेनापतिर्दुर्धरदुर्मुखौ ॥

बाष्कलस्ताम्रकश्चैव बिडालवदनोऽपरः ।
एतैश्चान्यैरसङ्ख्यातैः सङ्ग्रामान्तकसन्निभैः ॥ २८ ॥

योधैः परिवृतो वीरो महिषोदानवोत्तमः । ततःसाकोपताम्राक्षीदेवीलोकविमोहिनी जघानयोधान्समरे देवी महिषमाश्रितान् । ततस्तेषु हतेष्वेव सदैत्योरोषमूर्च्छितः आससाद तदा देवीं तूर्णं मायाविशारदः । रूपान्तराणि सम्भेजे माययादानवेश्वरः तानि तान्यस्य रूपाणि नाशयामाससातदा । ततोऽन्तेमाहिषंरूपबिभ्राणममरार्दनम् पाशेन बद्ध्वासुदृढंछित्त्वाखड्गेन तच्छिरः । पातयामासमहिषंदेवीदेवगणान्तकम्

हाहाकृतं ततः शेषसैन्यं भग्नं दिशो दश ।
तुष्टुवुर्दैवदेवेशीं सर्वे देवाः प्रमोदिताः ॥ ३४ ॥

एवं लक्ष्मीःसमुत्पन्नामहिषासुरमर्दिनी । राजञ्छृणुसरस्वत्याःप्रादुर्भावोयथाऽभवत् एकदा शुम्भनामाऽऽसीद्दैत्योमदबलोत्कटः । निशुम्भश्चापितद्भ्राताम्याबलपराक्रमः तेन सम्पीडिता देवाः सर्वे भ्रष्टश्रियो नृप । हिमवन्तमथासाद्य देवीं तुष्टवुरादरात्

देवा ऊचुः

जयदेवेशि! भक्तानामार्त्ति ! नाशनकोविदे !। दानवान्तकरूपे ! त्वमजरामरणेऽनघे !॥

देवेशि ! भक्तिसुलभे ! महाबलपराक्रमे !। विष्णुशङ्करब्रह्मादिस्वरूपेऽनन्तविक्रमे ! ॥ सृष्टिस्थितिकरे!नाशकारिके!कान्तिदायिनि!। महाताण्डवसुप्रीतेमोददायिनिमाधवि प्रसीद देवदेवेशि! प्रसीद करुणानिधे !। निशुम्भशुम्भसम्भूतभयापाराम्बुवारिधेः! उद्धराऽस्मान्प्रपन्नार्तिनाशिके! शरणागतान् । एवं संस्तुवतांतेषांत्रिदशानां धरापते! प्रसन्ना गिरिजाऽऽह ब्रूतस्तवनकारणम् । एतस्मिन्नन्तरेतस्याःकोशरूपात्समुत्थिता कौशिकी!साजगत्पूज्यादेवान्प्रीत्येदमब्रवीत् । प्रसन्नाऽहंसुरश्रेष्ठास्तवेनोत्तमरूपिणी व्रियतां वर इत्युक्तेदेवाःसम्वव्रिरेवरम् । शुम्भनामाऽवरोभ्रातानिशुम्भस्तस्य विश्रुतः

त्रैलोक्यमोजसा क्रान्तं दैत्येन बलशालिना ।
तद्वधश्चिन्त्यतां देवि! दुरात्मा दानवेश्वरः ॥ ४६ ॥
बाधते सततं देवि तिरस्कृत्य निजौजसा ।

श्री देव्युवाच

देवशत्रुं पातयिष्ये निशुम्भं शुम्भमेव च ॥ ४७ ॥

स्वस्थास्तिष्ठतभद्रंवःकण्टकंनाशयामि वः । इत्युक्त्वादेवदेवेशीदेवान्सेन्द्रान्दयामयी

जगामाऽदर्शनं सद्यो मिषतां त्रिदिवौकसाम् ।
देवाः समागता हृष्टाः सुवर्णाद्रिगुहा शुभाम् ॥ ४८ ॥
चण्डमुण्डौ पश्यतः स्म भृत्यौ शुम्भनिशुम्भयोः ।
दृष्ट्वा तां चारुसर्वाङ्गीं देवी लोकविमोहिनीम् ॥ ५० ॥

कथयामासतू राज्ञेभृत्यौतौ चण्डमुण्डकौ । देव! सर्वासुर! श्रेष्ठ! रत्नभोगार्ह!मानद!

अपूर्वा कामिनी दृष्टा चाऽऽवाभ्यां रिपुमर्दन !।
तस्याः सम्भोगयोग्यत्वमस्त्येव तव साम्प्रतम् ॥ ५२ ॥

तां समानय चार्वङ्गींभुङ्क्ष्व सौख्यसमन्वितः । तादृशीनासुरी नारीगन्धर्वीनदानवी न मानवी नाऽपि देवी यादृशी सा मनोहरा । एवं भृत्यवचः श्रुत्वाशुम्भःपरबलार्दनः दूतं सम्प्रेषयामास सुग्रीवं नाम दानवम् । स दूतस्त्वरितं गत्वादेव्याःसविधमादरात् वृत्तान्तं कथयामास देव्यै शुम्भस्ययद्वचः । देवीशुम्भासुरोनामत्रैलोक्यविजयीप्रभुः

सर्वेषां रत्नवस्तूनां भोक्ता मान्यो दिवौकसाम् ।
तदुक्तं शृणु मे देवि! रत्नभोक्ताऽहमव्ययः ॥ ५७ ॥
त्वं चाऽपि रत्नभूताऽसि भज मां चारुलोचने !॥ सर्वेषु यानि रत्नानिदेवासुरनरेषु च
तानि मय्येव सुभगे! भज मां कामजैः रसैः ।

देव्युवाच

सत्यं वदसि हे दूत! दैत्यराजप्रियङ्करम् ॥ ५६ ॥
प्रतिज्ञा या मया पूर्वं कृता साऽप्यनृता कथम् । भवेतां शृणुमेदूतयाप्रतिज्ञामयाकृता
यो मे दर्पं विधुनुते योमे बलमपोहति । यो मे प्रतिबलो भूयात्स एवमम भोगभाक्
ततः एनांप्रतिज्ञांमेसत्यांकृत्वाऽसुरेश्वरः । गृह्णातुपाणितरसातस्याऽशक्यंकिमत्रहि
तस्माद्गच्छ महादूत! स्वामिनं ब्रूहि चाऽऽदृतः ।
प्रतिज्ञां चाऽपि मे सत्यां विधास्यति बलाधिकः ॥ ६३ ॥
एवं वाक्यं महादेव्याः समाकर्ण्य सदानवः । कथयामासशुम्भायदेव्यावृत्तान्तमादितः
तदाप्रियं दूतवाक्यं शुम्भः श्रुत्वा महाबलः । कोपमाहारयामास महान्त दनुजाधिपः
ततो धूम्राक्षनामानं दैत्यंदैत्यपतिः प्रभुः । आदिदेश शृणु वचो धूम्राक्ष! मम चादृतः
तां दुष्टां केशपाशेषु धृत्वाऽप्यानीयतां मम । समीपमविलम्बेन शीघ्रंगच्छस्वमेपुरः
इत्यादेशं समासाद्य दैत्येशो धूम्रलोचनः । षष्ट्यासुराणां सहितःसहस्राणांमहाबलः
तुहिनाचलमासाद्य देव्याः सविधमेव सः । उच्चैर्देवींजगादाऽऽशुभज दैत्यपतिंशुभे!
शुम्भं नाम महावीर्यं सर्वभोगानवाप्नुहि । नोचेत्केशान्गृहीत्वात्वांनेष्येदैत्यपतिंप्रति
इत्युक्ता सा ततो देवी दैत्येन त्रिदशारिणा ।
उवाच दैत्य! यद्ब्रूषे तत्सत्यं ते महाबल !॥ ७१ ॥
राजा शुम्भासुरस्त्वं चकिंकरिष्यसितद्वद । इत्युक्तोदैत्यपोऽधावत्तूर्णंशस्त्रसमन्वितः
भस्मसात्तं चकाराऽऽशु हुङ्कारेण महेश्वरी । ततः सैन्यंवाहनेन देव्या भग्नं महीपते!
दिशोदशाभजच्छीघ्रं हाहाभूतमचेतनम् । तद्वृत्तान्तंसमाश्रुत्यसशुम्भोदैत्यराड्विभुः
चुकोप च महाकोपाद् भ्रुकुटीकुटिलाननः । ततःकोपपरीतात्मादैत्यराजःप्रतापवान्

चण्डं मुडं रक्तबीजं क्रमतः प्रैषयद्विभुः । ते च गत्वा त्रयो दैत्याविक्रान्तावहुविक्रमाः
देवीं ग्रहीतुमारब्धयत्नास्तेह्यभवन्बलात् । तानापतत एवाऽसौ जगद्धात्री मदोत्कट
शूलं गृहीत्वा वेगेन पातयामास भूतले । ससैन्यान्निहताञ्श्रुत्वादैत्यांस्त्रीन्दानवेश्वरौ
शुम्भश्चैवनिशुम्भश्च समाजग्मतुरोजसा । निशुम्भश्चैव शुम्भश्च कृत्वा युद्धमहोत्कटम्
देव्याश्च वशगौजातौनिहतौ च तयाऽसुरौ । इति दैत्यवरं शुम्भंघातयित्वाजगन्मयी
विबुधैः संस्तुता तद्वत्सक्षाद्वागीश्वरीपरा । एवंतेवर्णितोराजन्प्रादुर्भावोऽतिरम्यकः
काल्याश्चैवमहालक्ष्म्याःसरस्वत्याःक्रमेणच । परा परेश्वरी देवी जगत्सर्गं करोति च
पालनं चैव संहारंसैव देवी दधाति हि । तां समाश्रय देवेशीं जगन्मोहनिवारिणीम्
महामायां पूज्यतमां सा कार्यं ते विधास्यति ।

श्रीनारायण उवाच

इति राजा वचः श्रुत्वा मुनेः परमशोभनम् ॥ ८३ ॥
देवीं जगाम शरणं सर्वकामफलप्रदाम् । निराहारो यतात्मा च तन्मनाश्च समाहितः
देवीमूर्तिं मृण्मयीं च पूजयामास भक्तितः । पूजनान्ते बलिं तस्यै निजगात्रासृजंददत्
तदा प्रसन्ना देवेशी जगद्योनिः कृपावती । प्रादुर्बभूव पुरतो वरं ब्रूहीति भाषिणी ॥
स राजा निजमोहस्य नाशनंज्ञानमुत्तमम् । राज्यंनिष्कण्टकंचैवयाचतिस्ममहेश्वरीम्

श्रीदेव्युवाच

राजन्निष्कण्टकं राज्यं ज्ञानं वै मोहनाशनम् । भविष्यति मया दत्तमस्मिन्नेवभवेतव
अन्यच्च शृणु भूपाल! जन्मान्तरविचेष्टितम् ।
भानोर्जन्म समासाद्य सावर्णिर्भविता भवान् ॥ ८६ ॥
तत्र मन्वन्तरस्यापिपतित्वं बहुविक्रमम् । सन्ततिंबहुलाञ्चाऽपिप्राप्स्यतेमद्वराद्भवान्
एवं दत्त्वा वरं देवीजगामाऽदर्शनं तदा । सोऽपि देव्याः प्रसादेनजातोमन्वन्तराधिपः
एवं ते वर्णितं साधो! सावर्णेर्जन्म कर्म च । एतत्पठंस्तथाशृण्वन्देव्यनुग्रहमाप्नुयात्

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां दशमस्कन्धे
सलक्ष्मीसरस्वतीदेवीचरित्रंसावर्णिमनुवृत्तान्तवर्णनंनामद्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः

### सवैवस्वतमनुपुत्राणांदेव्याराधनवर्णनंभ्रामरीवृत्तप्रतिपादनम्

**श्रीनारायण उवाच**

अथाऽतः श्रूयतां शेषमनूनां चित्रमुद्भवम् । यस्य स्मरणमात्रेण देवीभक्तिः प्रजायते
आसन्वैवस्वतमनोः पुत्राः षड् विमलोदयाः । करूषश्च पृषध्रश्च नाभागो दिष्ट एव च
शर्यातिश्चत्रिशङ्कुश्च सर्व एवमहाबलाः । ततः षडेव ते गत्वा कालिन्द्यास्तीरमुत्तमम्

निराहारा जितश्वासाः पूजां चक्रुस्ततः स्थिताः ।
देव्या महीमयीं मूर्तिं विनिर्माय पृथक्पृथक् ॥ ४ ॥

*विविधैरुपचारैस्तां पूजयामासुरादृताः । ततश्च सर्व एवैते तपःसारा महाबलाः ॥*
जीर्णपर्णाशना वायुभक्षणास्तोयजीवनाः । धूम्रपानारश्मिपानाः क्रमशश्च बहुश्रमाः॥
ततस्तेषामादरेणाऽऽराधनं कुर्वतां सदा । विमला मतिरुत्पन्ना सर्वमोहविनाशिनी

बभूवुर्मनुपुत्रास्ते देवीपादैकचिन्तनाः ।
मत्या विमलया तेषामात्मन्येवाऽखिलं जगत् ॥ ८ ॥

दर्शनं सञ्जगामाऽऽशु तदद्भुतमिवाऽभवत् । एवं द्वादशवर्षान्ते तपसा जगदीश्वरी ॥
प्रादुर्बभूव देवेशी सहस्रार्कसमद्युतिः । तां दृष्ट्वा विमलात्मानो राजपुत्राः षडेव ते ॥

तुष्टुवुर्भक्तिनम्रान्तःकरणा भावसंयुताः ।

राजपुत्रा ऊचुः

*महेश्वरि! जयेशानि! परमे! करुणालये !॥ ११ ॥*

वाग्भवाराधनप्रीते! वाग्भवप्रतिपादिने !। क्लीङ्कारविग्रहे! देवि! क्लीङ्कारप्रीतिदायिनि!
कामराजमनोमोददायिनीश्वरतोषिणि !। महामाये! मोदपरे! महासाम्राज्यदायिनि !
विष्ण्वर्कहरशक्रादिस्वरूपे! भोगवर्धिनि !। एवं स्तुता भगवती राजपुत्रैर्महात्मभिः

प्रसादसुमुखी देवी प्रोवाच वचनं शुभम् ।

श्रीदेव्युवाच

राजपुत्रा महात्मानो भवन्तस्तपसा युताः ॥ १५ ॥
निष्कल्मषाः शुद्धधियो जाता वै मदुपासनात् ।
वरं मनोगतं सर्वं याचध्वमविलम्बितम् ॥ १६ ॥
प्रसन्नाऽहं प्रदास्यामि युष्माकं मनसि स्थितम् ।

राजपुत्रा ऊचुः

देवि! निष्कण्टकं राज्यं सन्ततिश्चिरजीविनी ॥ १७ ॥
भोगा अव्याहताः कामंयशस्तेजोमतिश्च ह । अकुण्ठितत्वं सर्वेषामेष एव वरोहितः

श्रीदेव्युवाच

एवमस्तु च सर्वेषांभवतां यन्मनोगतम् । अथाऽन्यदपि मे वाक्यंश्रूयतामादरादिदम्
भवन्तः सर्व एवैते मन्वन्तरपतीश्वराः । सन्तत्या दीर्घया भोगैरनेकैरपि सङ्गमः ॥
अखण्डितबलैश्वर्यं यशस्तेजोविभूतयः । भवितारो मत्प्रसादाद्राजपुत्राः क्रमेण तु

श्रीनारायण उवाच

एवं तेभ्यो वरान्दत्त्वा भ्रामरी जगदम्बिका ।
अन्तर्धानं जगामाऽऽशु भक्त्या तैः संस्तुता सती ॥ २२ ॥
तेराजपुत्राःसर्वेऽपितस्मिञ्जन्मन्यनुत्तमम् । राज्यंमहीगतान्भोगान्बुभुजुश्चमहौजसः
सन्ततिं चाऽखण्डितां ते समुत्पाद्य महीतले ।
वंशं संस्थाप्य सर्वेऽपि मनूनां पतयोऽभवन ॥ २४ ॥
भवान्तरे क्रमेणैव सावर्णिपदभागिनः । प्रथमो दक्षसावर्णिर्नवमो मनुरीरितः ॥२५
अव्याहतबलो देव्याः प्रसादादभवद्विभुः । द्वितीयो मेरुसावर्णिर्दशमो मनुरेव च ॥
बभूव मन्वन्तरपो महादेवीप्रसादतः । तृतीयो मनुराख्यातः सूर्यसावर्णिनामकः
एकादशो महोत्साहस्तपसास्वेनभावितः । चतुर्थश्चन्द्रसावर्णिर्द्वादशोमनुराड्विभुः
देवीसमाराधनेन जातो मन्वन्तरेश्वरः । पञ्चमो रुद्रसावर्णिस्त्रयोदशमनुः स्मृतः ॥
महाबलो महासत्त्वो बभूव जगदीश्वरः । षष्ठश्च विष्णुसावर्णिश्चतुर्दशमनुः कृती ॥

बभूव देवीवरतो जगतां प्रथितः प्रभुः । चतुर्दशैते मनवो महातेजोबलैर्युताः ॥

देव्याराधनतः पूज्याः वन्द्या लोकेषु नित्यशः ।

महाप्रतापिनः सर्वे भ्रामर्यास्तु प्रसादतः ॥ ३२ ॥

नारद उवाच

केयं साभ्रामरीदेवीकथंजाताकिमात्मिका । तदाख्यानंवदप्राज्ञ! विचित्रं शोकनाशकम्

नतृप्तिमधिगच्छामिपिबन्देवीकथामृतम् । अमृतं पिबतां मृत्युर्नाऽस्यश्रवणतोयतः

श्रीनारायण उवाच

शृणुनारदवक्ष्यामिजगन्मातुर्विचेष्टितम् । अचिन्त्याव्यक्तरूपायविचित्रंमोक्षदायकम्

यद्यच्चरित्रं श्रीदेव्यास्तत्सर्वं लोकहेतवे । निर्व्याजया करुणया पुत्रे मातुर्यथा तथा

पूर्वं दैत्यो महानासीदरुणाख्यो महाबलः । पाताले दैत्यसंस्थाने देवद्वेषी महाखलः

स देवाञ्जेतुकामश्च चकार परमं तपः । पद्मसम्भवमुद्दिश्य स नस्त्राता भविष्यति

गत्वा हिमवतः पार्श्वे गङ्गाजलसुशीतले । पक्वपर्णाशनो योगी संनिरुध्य मरुद्गणम्

गायत्रीजपसंसक्तः सकामस्तमसा युतः । दशवर्षसहस्राणि ततो वारिकणाशनः ॥

दशवर्षसहस्राणि ततः पवनभोजनः । दशवर्षसहस्राणि निराहारोऽभवत्ततः ॥ ४१ ॥

एवं तपस्यतस्तस्य शरीरादुत्थितोऽनलः । ददाहजगतीं सर्वां तदद्भुतमिवाऽभवत्

किमिदंकिमिदंवेतिदेवाःसर्वेचकम्पिरे । सन्त्रस्ताःसकला लोका ब्रह्माणंशरणंययुः

विज्ञापितं देववरैः श्रुत्वा तत्र चतुर्मुखः । गायत्रीसहितो हंससमारूढो ययौ मुदा

प्राणमात्रावशिष्टं तं धमनीशतसङ्कुलम् । शुष्कोदरंक्षामगात्रं ध्यानमीलितलोचनम्

ददर्श तेजसा दीप्तं द्वितीयमिव पावकम् । वरम्वरयभद्रंते वत्स! यन्मनसिस्थितम्

श्रुतिमात्रेणसन्तोषकारकंवाक्यमूचिवान् । श्रुत्वा ब्रह्ममुखाद्वाणींसुधाधारमिवारुणः

उन्मीमिलिताक्षःपुरतो ददर्श जलजोद्भवम् । गायत्रीसहितं देवं चतुर्वेदसमन्वितम्

अक्षस्रक्कुण्डिकाहस्तं जपन्तं ब्रह्म शाश्वतम् ।

दृष्ट्वोत्थाय ननामाऽथ स्तुत्वा स विविधैः स्तवैः ॥ ४६ ॥

वरं वव्रेस्वबुद्धिस्थंमाभवेन्मृत्युरित्यपि । श्रुत्वाऽरुणवचोब्रह्माबोधयामाससादरम्

ब्रह्मविष्णुमहेशाद्या मृत्युनाकवलीकृताः । तदाऽन्येषां नु कावार्ता मरणे दानवोत्तम!
वरं योग्यं ततो ब्रूहि दातुं यः शक्यते मया ।
नाऽत्राऽऽग्रहं प्रकुर्वन्ति बुद्धिमन्तो जनाः क्वचित् ॥ ५२ ॥
इति ब्रह्मवचः श्रुत्वा पुनःप्रोवाचसादरम् । न युद्धेनचशस्त्रास्त्रान्न पुंभ्योनापियोषितः
द्विपादुभ्यो वा चतुष्पादुभ्यो नोभयाकारतस्तथा ।
भवेन्मे मृत्युरित्येवं देव! देहि वरम्प्रभो ॥ ५४ ॥
बलञ्चविपुलंदेहियेनदेवजयोभवेत् । इतितस्यवचःश्रुत्वा तथाऽस्त्वितिवचोऽब्रवीत्
दत्त्वा वरं जगामाऽऽशु पद्मजः स्वं निकेतनम् ।
ततोऽरुणाख्यो दैत्यस्तु पातालात्स्वाश्रयस्थितान् ॥ ५६ ॥
दैत्यानाकारयामास ब्रह्मणो वरदर्पितः । आगत्य तेऽसुराः सर्वे दैत्येशं तं प्रचक्रिरे ॥
दूतञ्च प्रेषयामासुर्युद्धार्थममरावतीम् । दूतवाक्यं तदा श्रुत्वा देवराड् भयकम्पितः
देवैः सार्धंजगामाऽऽशुब्रह्मणःसदनम्प्रति । ब्रह्मविष्णू पुरस्कृत्य जग्मुस्तेशङ्करालयम्
विचारश्चक्रिरे तत्र ते वधार्थं सुरद्रुहाम् । एतस्मिन्समये तत्र दैत्यसेना समावृतः ॥
अरुणाख्यो दैत्यराजो जगामाऽऽशु त्रिविष्टपम् ।
सूर्येन्दुयमवह्नीनामधिकारान्पृथक्पृथक् ॥ ६१ ॥
स्वयञ्चकार तपसानानारूपधरोमुने !। स्वस्वस्थानच्युताःसर्वेजग्मुःकैलासमण्डलम्
शशंसुः शङ्करं देवाः स्वस्वदुःखं पृथक्पृथक् ।
महान्विचारस्तत्राऽऽसीत्किं कर्तव्यमतः परम् ॥ ६३ ॥
न युद्धे न च शस्त्रास्त्रैर्न पुंभ्यो नाऽपि योषितः ।
द्विपादुभ्यो वा चतुष्पादुभ्यो नोभयाकारतोऽपि वा ॥ ६४ ॥
मृत्युर्भवेदिति ब्रह्मा प्रोवाचवचनंयतः । इति चिन्तातुराः सर्वे कर्तुं किञ्चिन्नचक्षमाः
एतस्मिन्समये तत्र वागभूदशरीरिणी । भजध्वं भुवनेशानीं सावः कार्यंविधास्यति
गायत्रीजपसंयुक्तो दैत्यराड् यदि तां त्यजेत् ।
मृत्युयोग्यस्तदा भूयादित्युच्चैस्तोषकारिणी ॥ ६७ ॥

श्रुत्वा दैवीं तथा वाणीं मन्त्रयामासुरादृताः । बृहस्पतिंसमाहूय वचनम्प्राह देवराट्
गुरो! गच्छसुराणान्तु कार्यार्थमसुरम्प्रति । यथा भवेत्स गायत्रीत्यागुस्तस्यतथाकुरु
अस्माभिः परमेशानी सेव्यतेध्यानयोगतः । प्रसन्नासा भगवतीसाहाय्यंतेकरिष्यति
इत्यादिश्य गुरुं सर्वे जग्मुर्जाम्बूनदेश्वरीम् ।
साऽस्मान्दैत्यभयत्रस्तान्पालयिष्यति शोभना ॥ ७१ ॥
तत्र गत्वा तपश्चर्यां चक्रुः सर्वे सुनिश्चिताः । मायाबीजजपासक्ता देवीमखपरायणाः
बृहस्पतिस्ततःशीघ्रंजगामाऽसुरसन्निधौ । आगतं मुनिवर्यन्तं पप्रच्छाऽथसदैत्यराट्
मुनेकुत्राऽऽगमःकस्मात्किमर्थमिति मे वद । नाऽहंयुष्मत्पक्षपातीप्रत्युतारातिरेवच
इति तस्य वचः श्रुत्वा प्रोवाच मुनिनायकः ।
अस्मत्सेव्या च या देवी सा त्वया पूज्यतेऽनिशम् ॥ ७५ ॥
तस्मादस्मत्पक्षपाती न भवेस्त्वं कथंवद । इति तस्य वचःश्रुत्वामोहितोदेवमायया
तत्याज परमं मन्त्रमभिमानेन सत्तम !। गायत्रीत्यागतो दैत्योनिस्तेजस्को बभूव ह
कृतकार्योगुरुस्तस्मात्स्थानान्निर्गतवान्पुनः । ततोवृत्तान्तमखिलं कथयामासवज्रिणे
सन्तुष्टास्ते सुराः सर्वे भेजिरे परमेश्वरीम् । एवम्बहुगतेकाले कस्मिंश्चित्समये मुने
प्रादुरासीज्जगन्माता जगन्मङ्गलकारिणी । कोटिसूर्यप्रतीकाशा कोटिकन्दर्पसुन्दरी
चित्रानुलेपना देवी चित्रवासोयुगान्विता । विचित्रमाल्याभरणा चित्रभ्रमरमुष्टिका
वराभयकरा शान्ता करुणामृतसागरा । नानाभ्रमरसंयुक्तपुष्पमालाविराजिता ॥
भ्रमरीभिर्विचित्राभिरसङ्ख्याभिःसमावृता । भ्रमरैर्गायमानैश्चह्रींकारमनुमन्वहम् ॥
समन्ततः परिवृता कोटिकोटिभिरम्बिका । सर्वशृङ्गारवेषाढ्या सर्ववेदप्रशंसिता ॥
सर्वात्मिका सर्वमयी सर्वमङ्गलरूपिणी । सर्वज्ञा सर्वजननी सर्वा सर्वेश्वरी शिवा
दृष्ट्वा तां तरलात्मानो देवा ब्रह्मपुरोगमाः । तुष्टुवुर्हृष्टमनसो विश्वरश्रयसं शिवाम् ॥

देवा ऊचुः

नमोदेविमहाविद्येसृष्टिस्थित्यन्तकारिणि !। नमःकमलपत्राक्षिसर्वाधारेनमोऽस्तुते
सविश्वतैजसप्राज्ञविराट्सूत्रात्मिके नमः ॥ ८८ ॥

नमोऽव्याकृतरूपायै कूटस्थायै नमोनमः ।

दुर्गे! सर्वादिरहिते! दुष्टसंरोधनार्गले !। निरर्गलप्रेमगम्ये! भर्गे देवि! नमोऽस्तु ते
नमः श्रीकालिके! मातर्नमोनीलसरस्वति !। उग्रतारे! महोग्रे! ते नित्यमेव नमो नमः
नमःपीताम्बरे देवि! नमस्त्रिपुरसुन्दरि! । नमोभैरवि! मातङ्गि! धूमावति! नमो नमः
छिन्नमस्ते नमस्तेऽस्तु क्षीरसागरकन्यके । नमःशाकम्भरिशिवे! नमस्तेरक्तदन्तिके!
निशुम्भशुम्भदलनि! रक्तबीजविनाशिनि !। धूम्रलोचननिर्णाशे! वृत्रासुरनिबर्हिणि!
चण्डमुण्डप्रमथिनि! दानवान्तकरे! शिवे !। नमस्तेविजये!गङ्गे! शारदे! विकचानने!
पृथ्वीरूपे! दयारूपे! तेजोरूपे! नमोनमः । प्राणरूपे! महारूपे! भूतरूपे! नमोऽस्तु ते॥
विश्वमूर्ते! दयामूर्ते! धर्ममूर्ते! नमोनमः । देवमूर्ते! ज्योतिमूर्ते! ज्ञानमूर्ते नमोऽस्तुते
गायत्रि! वरदे! देवि! सावित्रि! सरस्वति !। नमःस्वाहेस्वधेमातर्दक्षिणे!तेनमोनमः
नेति नेतीति वाक्यैर्याबोध्यतेसकलागमैः । सर्वप्रत्यक्स्वरूपांतांभजामःपरदेवताम्
भ्रमरैर्वेष्टिता यस्माद्भ्रामरीया ततःस्मृता । तस्यैदेव्यैनमोनित्यंनित्यमेवनमोनमः
नमस्ते पार्श्वयोः पृष्ठे नमस्ते पुरतोऽम्बिके !। नमऊर्ध्वंनमश्चाऽधःसर्वत्रैवनमोनमः
कृपां कुरुमहादेवि! मणिद्वीपाधिवासिनि !। अनन्तकोटिब्रह्माण्डनायिकेजगदम्बिके!
जयदेवि! जगन्मातर्जय देवि! परात्परे !। जय श्रीभुवनेशानि! जयसर्वोत्तमोत्तमे !॥
कल्याणगुणरत्नानामाकरे! भुवनेश्वरि ! । प्रसीद परमेशानि ! प्रसीद जगतोरणे !॥

नारायण उवाच

इति देववचः श्रुत्वा प्रगल्भ मधुरं वचः । उवाचजगदम्बा सा मत्तकोकिलभाषिणी

श्रीदेव्युवाच

प्रसन्नाऽहं सदा देवा वरदेशशिखामणिः । ब्रुवन्तुविबुधाःसर्वे यदेवस्याश्चिकीर्षितम्
देवीवाक्यं सुराःश्रुत्वाप्रोचुर्दुःखस्यकारणम् । दुष्टदैत्यस्यचरितंजगद्बाधाकरंपरम्
देवब्राह्मणवेदानां हेलनं नाशनं तथा । स्थानभ्रंशं सुरादीनाञ्च कथयामासुरादृताः
ब्रह्मणो वरदानञ्च यथावत्ते समूचिरे । श्रुत्वादेवमुखाद्वाणीं महाभगवती तदा ॥
प्रेरयामास हस्तस्थान्भ्रमरान्भ्रमरी तदा । पार्श्वस्थानग्रभागस्थान्नानारूपधरांस्तदा

जनयामास बहुशो यैर्व्याप्तं भुवनत्रयम् । मटचीयूथवत्तेषां समुदायस्तु निर्गतः
तदाऽन्तरिक्षं तैर्व्याप्तमन्धकारः क्षितावभूत् । दिवि पर्वतशृङ्गेषु द्रुमेषु विपिनेष्वपि
भ्रमरा एव सञ्जातास्तदद्भुतमिवाऽभवत् । ते सर्वे दैत्यवक्षांसि दारयामासुरुद्गताः
नरं मधुहरं यद्वन्मक्षिकाः कोपसंयुताः । उपायो न च शस्त्राणां तथाऽस्त्राणां तदाऽभवत्
न युद्धं न च सम्भाषा केवलं मरणं खलु । यस्मिन्यस्मिन्स्थले ये ये स्थिता दैत्या यथायथा
तत्रैव च तथा सर्वे मरणं प्रापुरुत्स्मयाः । परस्परं समाचारो न कस्याप्यभवत्तदा ॥
क्षणमात्रेण ते सर्वे विनष्टा दैत्यपुङ्गवाः । कृत्वेत्थं भ्रमराः कार्यं देविनिकटमाययुः ॥
आश्चर्यमेतदाश्चर्यमितिलोकाः समूचिरे । किं चित्रं जगदम्बाया यस्यामायेयमीदृशी
ततो देवगणाः सर्वे ब्रह्मविष्णुपुरोगमाः । निमग्ना हर्षजलधौ पूजयामासुरम्बिकाम्
नानोपचारैर्विविधैर्नानोपायनपाणयः । जयशब्दं प्रकुर्वाणा मुमुचुः सुमनांसि च ॥
दिवि दुन्दुभयो नेदुर्ननृतुश्चाप्सरोगणाः । पेठुर्वेदान्मुनिश्रेष्ठा गन्धर्वाद्या जगुस्तथा ॥
मृदङ्गमुरजावीणाढक्काडमरुनिःस्वनैः । घण्टाशङ्खनिनादैश्च व्याप्तमासीज्जगत्त्रयम् ॥

नानास्तोत्रैस्तदा स्तुत्वा मूर्ध्न्याधायाऽञ्जलींस्तदा ।
जय मातर्जयेशानीत्येवं सर्वे समूचिरे ॥ १२२ ॥
ततस्तुष्टा महादेवी वरान्दत्त्वा पृथक्पृथक् ।
स्वस्मिंश्च विपुलां भक्तिं प्रार्थिता तैर्ददौ च ताम् ॥ १२३ ॥

पश्यतामेव देवानामन्तर्धानंगता ततः । इति ते सर्वमाख्यातं भ्रामर्याश्चरितं महत् ॥
पठतां शृण्वतां चैव सर्वपापप्रणाशनम् । श्रुतमाश्चर्यजनकं संसारार्णवतारकम् ॥
एवं मनूनां सर्वेषां चरितं पापनाशनम् । देवीमाहात्म्यसंयुक्तं पठन्शृण्वन्शुभप्रदम्
यश्चैतत्पठते नित्यं शृणुयाद्योऽनिशं नरः । सर्वपापविनिर्मुक्तोदेवीसायुज्यमाप्नुयात्

इति श्रीदेवीभागवते महापुराणेऽष्टादश साहस्र्यां संहितायां दशमस्कन्धे
भ्रामरीचरित्रवर्णनंनाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

समाप्तश्चाऽयं दशमस्कन्धः

॥ श्रीगणेशायनमः ॥

* श्रीमहालक्ष्म्यैनमः *

# देवीभागवतपुराणम्

## एकादशःस्कन्धः

### प्रथमोऽध्यायः

#### प्रातश्चिन्तनवर्णनम्

नारद उवाच

भगवन्भूतभव्येश! नारायण! सनातन !। आख्यातं परमाश्चर्यं देवीचारित्रमुत्तमम् ॥
प्रादुर्भावः परो मातुः कार्यार्थमसुरद्रुहाम् । अधिकारात्तिरुकाऽत्रदेवीपूर्णकृपावशात्
अधुनाश्रोतुमिच्छामि येन प्रीणातिसर्वदा । स्वभक्तान्परिपुष्णातितमाचारंवदप्रभो

नारायण उवाच

शृणु! नारद! तत्त्वज्ञ! सदाचारविधिक्रमम् । यदनुष्ठानमात्रेण देवी प्रीणाति सर्वदा
प्रातरुत्थाय कर्तव्यं यद्द्विजेन दिनेदिने । तदहं सम्प्रवक्ष्यामि द्विजानामुपकारकम्
उदयास्तमयं यावद्द्विजःसत्कर्मकृद्भवेत् । नित्यनैमित्तिकैर्युक्तःकाम्यैश्चान्यैरगर्हितैः
आत्मैव न सहायार्थं पिता माताच तिष्ठति । न पुत्रदारानज्ञातिर्धर्मस्तिष्ठति केवलम्

तस्माद्धर्मं सहायार्थं नित्यं सञ्चिनु साधनैः । धर्मेणैव सहायात्तुतमस्तरति दुस्तरम्

आचारः प्रथमो धर्मः श्रुत्युक्तः स्मार्त एव च ।

तस्मादस्मिन्समायुक्तो नित्यं स्यादात्मनो द्विजः ॥ ११ ॥

आचाराल्लभते चाऽऽयुराचाराल्लभते प्रजाः । आचारादन्नमक्षय्यमाचारोहन्ति पातकम्

आचारः परमो धर्मो नृणां कल्याणकारकः । इह लोके सुखीभूत्वापरत्रलभतेसुखम्

अज्ञानान्धजनानां तु मोहितंभ्रामितात्मनाम् । धर्मरूपो महादीपोमुक्तिमार्गप्रदर्शकः

आचारात्प्राप्यते श्रैष्ठ्यमाचारात्कर्म लभ्यते ।

कर्मणो जायते ज्ञानमिति वाक्यं मनोः स्मृतम् ॥ १३ ॥

सर्वधर्मवरिष्ठोऽयमाचारः परमं तपः । तदेवज्ञानमुद्दिष्टं तेन सर्वं प्रसाध्यते ॥ १४ ॥

यस्त्वाचारविहीनोऽत्र वर्तते द्विजसत्तमः । सशूद्रवद्बहिष्कार्योयथाशूद्रस्तथैव सः

आचारो द्विविधः प्रोक्तः शास्त्रीयो लौकिकस्तथा ।

उभावपि प्रकर्तव्यौ न त्याज्यौ शुभमिच्छता ॥ १६ ॥

ग्रामधर्मा जातिधर्मा देशधर्माः कुलोद्भवाः । परिग्राह्या नृभिः सर्वे नैवतांल्लङ्घयेन्मुने

दुराचारोहिपुरुषोलोकेभवतिनिन्दितः । दुःखभागी च सततं व्याधिनाव्याप्त एव च

परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ । धर्ममप्यसुखोदर्कं लोकविद्विष्टमेव च

नारद उवाच

बहुत्वादिहशास्त्राणांनिश्चयःस्यात्कथंमुने ।। कियत्प्रमाणंतद्ब्रूहिधर्ममार्गविनिर्णयम्

नारायण उवाच

श्रुतिस्मृती उभे नेत्रं पुराणं हृदयं स्मृतम् ।

एतत्त्रयोक्त एव स्याद्धर्मो नाऽन्यत्र कुत्रचित् ॥ २१ ॥

विरोधोयत्र तुभवेत्त्रयाणांचपरस्परम् । श्रुतिस्तत्रप्रमाणंस्याद्द्वयोर्द्वैधेश्रुतिर्वरा

श्रुतिद्वैधंभवेद्यत्रतत्रधर्मावुभौस्मृतौ । स्मृतिद्वैधं तु यत्रस्याद्विषयःकल्प्यतांपृथक्

पुराणेषु क्वचिच्चैव तन्त्रदृष्टं यथातथम् । धर्मंवदन्ति तं धर्मं गृह्णीयान्न कथञ्चन ॥

वेदाविरोधि चेत्तन्त्रं तत्प्रमाणंन संशयः । प्रत्यक्षश्रुतिरुद्धं यत्तत्प्रमाणं भवेन्न च ॥

सर्वथा वेद एवासौ धर्ममार्गप्रमाणकः । तेनाऽविरुद्धं यत्किञ्चित्तत्प्रमाणंनचान्यथा
योवेदधर्ममुज्झित्यवर्ततेऽन्यप्रमाणतः । कुण्डानि तस्य शिक्षार्थंयमलोकेवसन्तिहि
तस्मात्सर्वप्रयत्नेन वेदोक्तं धर्ममाश्रयेत् । स्मृतिः पुराणमन्यद्वा तन्त्रं वा शास्त्रमेवच
तन्मूलत्वे प्रमाणं स्यान्नान्यथा तु कदाचन । येकुशास्त्राभियोगेनवर्तयन्तीह मानवान

अधोमुखोर्ध्वपादास्ते यास्यन्ति नरकार्णवम् ।
कामाचाराः पाशुपतास्तथा वै लिङ्गधारिणः ॥ ३० ॥

तप्तमुद्राङ्किता ये च वैखानसमतानुगाः । ते सर्वे निरयं यान्ति वेदमार्गबहिष्कृताः ॥
वेदोक्तमेव सद्धर्मंतस्मात्कुर्यान्नरःसदा । उत्थायोत्थायबोद्धव्यंकिम्मयाऽद्यकृतंकृतम्
दत्तं वा दापितंवापि वाक्येनाऽपि च भाषितम् । उपपापेषु सर्वेषु पातकेषुमहत्स्वपि
अवाप्य रजनीयामं ब्रह्मध्यानं समाचरेत् । ऊरुस्थोत्तानचरणःसव्येचोरौ तथोत्तरम्

उत्तानं किञ्चिदुत्तानं मुखमवष्टभ्य चोरसा ।
निमीलिताक्षः सत्त्वस्थोदन्तैर्दन्तान्न संस्पृशेत् ॥ ३१ ॥
तालुस्थाचलजिह्वश्च सम्वृतास्यः सुनिश्चलः ।
सन्निरुद्धेन्द्रियग्रामो नाऽतिनिम्नस्थितासनः ॥ ३६ ॥

द्विगुणंत्रिगुणंवापिप्राणायाममुपक्रमेत् । ततोध्येयः स्थितोयोऽसौहृदयेदीपवत्प्रभुः
धारयेत्तत्र चाऽऽत्मानं धारणां धारयेद् बुधः । सगर्भश्च विगर्भश्चसगर्भश्चाप्यगर्भकः
सलक्ष्यश्चाप्यलक्ष्यश्चप्राणायामस्तुषड्विधः ।प्राणायामसमोयोगःप्राणायामइतीरितः
प्राणायाम इति प्रोक्तो रेचपूरककुम्भकैः । वर्णत्रयात्मका ह्येते रेचपूरककुम्भकाः ॥
स एव प्रणवः प्रोक्तःप्राणायामश्च तन्मयः । इडया वायुमारोप्यपूरयित्वोदरेस्थितम्
शनैः षोडशमात्राभिरन्ययातं विरेचयेत् । एवं सधूमः प्राणानामायामः कथितोमुने!

आधारे लिङ्गनाभिप्रकटितहृदये तालुमूले ललाटे
द्वे पत्रे षोडशारे द्विदश-दशदल-द्वादशार्धे चतुष्के ।
वासान्ते बालमध्ये डफकठसहिते कण्ठदेशे स्वराणां
हंक्षं तत्त्वार्थयुक्तं सकलदलगतं वर्णरूपं नमामि ॥ ४३ ॥

अरुणकमलसंस्था तद्रजः पुञ्जवर्णा हरनियमितचिह्ना पद्मतन्तुस्वरूपा ।
रविहुतवहराकानायकाऽऽस्यस्तनाढ्या सकृदपि यदि चित्ते सम्वसेस्यात्स मुक्तः ॥
स्थितिः सैव गतिर्यात्रा मतिश्चिन्ता स्तुतिर्वचः ।
अहं सर्वात्मिको देवः स्तुतिः सर्वं त्वदर्चनम् ॥ ४५ ॥
अहं देवी न चान्योऽस्मि ब्रह्मैवाऽहं न शोकभाक् ।
सच्चिदानन्दरूपोऽहं स्वात्मानमिति चिन्तयेत् ॥ ४६ ॥
प्रकाशमानां प्रथमे प्रयाणे प्रतिप्रयाणेऽप्यमृतायमानाम् ।
अन्तः पदव्यामनुसञ्चरन्तीमानन्दरूपामबलाम्प्रपद्ये ॥ ४७ ॥
ततो निजब्रह्मरन्ध्रे ध्यायेत्तं गुरुमीश्वरम् । उपचारैर्मानसैश्च पूजयेत्तु यथाविधि ॥
स्तुवीताऽनेन मन्त्रेण साधको नियतात्मवान् । गुरुर्ब्रह्मागुरुर्विष्णुर्गुरुर्देवोमहेश्वरः
गुरुरेव परम्ब्रह्म तस्मै श्रीगुरवे नमः ॥ ४६ ॥
इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामेकादशस्कन्धे
प्रातश्चिन्तनं नाम प्रथमोऽध्यायः ॥ १ ॥

---

# द्वितीयोऽध्यायः

## शौचविधिवर्णनम्

### श्रीनारायण उवाच

आचारहीनं न पुनन्ति वेदा यदप्यधीताः सह षड्भिरङ्गैः ।
छन्दांस्येनं मृत्युकाले त्यजन्ति नीडं शकुन्ता इव जातपक्षाः ॥ १ ॥
ब्राह्मे मुहूर्तेचोत्थाय तत्सर्वं सम्यगाचरेत् । रात्रेरन्तिमयामे तु वेदाभ्यासञ्चरेद्बुधः
किञ्चित्कालंततःकुर्यादिष्टदेवानुचिन्तनम् । योगीतुपूर्वमार्गेण ब्रह्मध्यानंसमाचरेत्
जीवब्रह्मैक्यता येन जायते तु निरन्तरम् । जीवन्मुक्तश्च भवति तत्क्षणादेव नारद !॥

पञ्चपञ्च उषःकालःसप्तपञ्चाऽरुणोदयः । अष्टपञ्चाशद्भवेत्प्रातःशेषः सूर्योदयःस्मृतः
प्रातरुत्थाययःकुर्याद्विण्मूत्रं द्विजसत्तमः । नैरृत्यामिषुविक्षेपमतीत्याभ्यधिकम्भुवः

विण्मूत्रेऽपि च कर्णस्थ आश्रमे प्रथमे द्विजः ।
निवीतं पृष्ठतः कुर्याद्वानप्रस्थगृहस्थयोः ॥ ७ ॥

कृत्वायज्ञोपवीतंतु पृष्ठतःकण्ठलम्बितम् । विण्मूत्रंतु गृही कुर्यात्कर्णस्थंप्रथमाश्रमी

अन्तर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा ।
वाचं नियम्य यत्नेन ष्ठीवनश्वासवर्जितः ॥ ६ ॥

न फालकृष्टे न जले न चितायां न पर्वते । जीर्णदेवालये कुर्यान्न वल्मीके न शाद्वले
न ससत्त्वेषु गर्तेषु न गच्छन्न पथि स्थितः । सन्ध्ययोरुभयोर्जप्येभोजनेदन्तधावने
पितृकार्ये च दैवे च तथा मूत्रपुरीषयोः । उत्सारे मैथुने वाऽपि तथावैगुरुसन्निधौ
यागे दाने ब्रह्मयज्ञे द्विजो मौनं समाचरेत् । देवता ऋषयः सर्वे पिशाचोरगराक्षसाः

इतो गच्छन्तु भूतानि बहिर्भूमिं करोम्यहम् ।
इति सम्प्रार्थ्य पश्चात्तु कुर्याच्छौचं यथाविधि ॥ १४ ॥

वाय्वग्नी विप्रमादित्यमापःपश्यं तथैवगाः । नकदाचनकुर्वीत विण्मूत्रस्यविसर्जनम्

उदङ्मुखोदि वा कुर्याद्रात्रौ चेद्दक्षिणामुखः ।
तत्र आच्छाद्यविण्मूत्रं लोष्टपर्णतृणादिभिः ॥ १६ ॥
गृहीतलिङ्ग उत्थाय स गच्छेद्वारिसन्निधौ ।
पात्रे जलं गृहीत्वा तु गच्छेदन्यत्र चैव हि ॥ १७ ॥
गृहीत्वा मृत्तिकां कूलाच्छ्वेतां ब्राह्मणसत्तम' !।
रक्तां पीतां तथा कृष्णां गृह्णीयुश्चान्यवर्णकाः ॥ १८ ॥

अथवायात्रदेशे सैवग्राह्याद्विजोत्तमैः । अन्तर्जलाद्देवगृहाद्वल्मीकान्मूषकोत्करात्
कृतशौचावशिष्टाश्चन ग्राह्याःसप्तमृत्तिकाः । मूत्रात्तुद्विगुणंशौचेमैथुने त्रिगुणंस्मृतम्

एका लिङ्गे करे तिस्र उभयोर्मृद्द्वयं स्मृतम् ।
मूत्रशौचं समाख्यातं शौचेतद् द्विगुणं स्मृतम् ॥ २१ ॥

विट्शौचे लिङ्गदेशे तु प्रदद्यान्मृत्तिकाद्वयम् ।
पश्चाऽपाने दशैकस्मिन्नुभयोः सप्तमृत्तिकाः ॥ २२ ॥

वामपादम्पुरस्कृत्य पश्चाद्दक्षिणमेव च । प्रत्येकञ्च चतुर्वारं मृत्तिकां लेपयेत्सुधीः ॥ एवं शौच गृहस्थस्यद्विगुणंब्रह्मचारिणः । त्रिगुणं वानप्रस्थस्ययतानाञ्चचतुर्गुणम् आर्द्रामलकमानातु मृत्तिका शौचकर्मणि । प्रत्येकं तु सदा ग्राह्यानातोन्यूनाकञ्चन एतद्दिवास्याद्विट्शौचंतदर्धंनिशिकीर्तितम् । आतुरस्यतदर्धं तुमार्गस्थस्यतदर्धकम्

स्त्रीशूद्राणामशक्तानां बालानां शौचकर्मणि ।
यथा गन्धक्षयः स्यात्तु तथा कुर्यादसङ्ख्यकम् ॥ २७ ॥

गन्धलेपक्षयो यावत्तावच्छौचं विधीयते । सर्वेषामेव वर्णानामित्याह भगवान्मनुः

वामहस्तेन शौचन्तु कुर्याद्वै दक्षिणेन न ।
नाभेरधो वामहस्तो नाभेरूर्ध्वं तु दक्षिणः ॥ २१ ॥

शौचकर्मणि विज्ञेयोनाऽन्यथाद्विजपुङ्गवैः । जलपात्रंन गृह्णीयाद्विण्मूत्रोत्सर्जनेबुधः गृह्णीयाद्यदिमोहेनप्रायश्चित्तंहरेत्ततः ।मोहाद्वाऽप्यथवाऽऽलस्यान्नकुर्याच्छौचमात्मनः जलाहारस्त्रिरात्रःस्यात्ततोजाप्याच्च शुध्यति । देशकालद्रव्यशक्तिस्वोपपत्तीश्चसर्वशः ज्ञात्वाशौचं प्रकर्तव्यमालस्यं नाऽत्रधारयेत् । पुरीषोत्सर्जनेकुर्याद्गण्डूषान्द्वादशैव तु चतुरो मूत्रविक्षेपे नाऽतोन्यूनान्कदाचन । अधोमुखं नरः कृत्वा त्यजेत्तं वामतः शनैः आचम्य च ततः कुर्याद्दन्तधावनमादरात् । कण्टकिक्षीरवृक्षोत्थं द्वादशाङ्गुलमव्रणम् कनिष्ठिकाग्रवत्स्थूलं पूर्वार्धेकृतकूर्चकम् । करञ्जोदुम्बरौ चूतः कदम्बोलोध्रचम्पकौ

बदरीति द्रुमाश्चेति प्रोक्ता दन्तप्रधावने ॥ ३६ ॥

अन्नाद्यायव्यूहध्वंसे सोमो राजायमागमत् । समे मुखं प्रक्षालयते यशसाच भगेन च आयुर्बलं यशोवर्चः प्रजाः पशुवसूनि च । ब्रह्मप्रज्ञाञ्च मेधाञ्च त्वन्नो देहि वनस्पते !॥ अभावे दन्तकाष्ठस्य प्रतिषिद्धदिनेषु च । अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम् ॥ सविताभक्षितस्तेन स्वकुलं तेन घातितम् । प्रतिपद्दर्शषष्ठीषु नवम्येकादशीरवौ ॥

दन्तानां काष्ठसंयोगाद्दहत्यासप्तमं कुलम् ॥ ४१ ॥

कृत्वाऽलं पादशौचं ह्यमलमथ जलं त्रिः पिबेद् द्विविमृज्य
तर्जन्याङ्गुष्ठवत्या सजलमभिमृशेन्नासिकारन्ध्रयुग्मम् ।
अङ्गुष्ठाऽनामिकाभ्यां नयनयुगयुतं कर्णयुग्मं कनिष्ठाऽ-
ङ्गुष्ठाभ्यां नाभिदेशे हृदयमथतले नाऽङ्गुलीभिः शिरांसि ॥ ४२ ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामेकादशस्कन्धे शौचविधिवर्णनंनाम द्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः

### रुद्राक्षमाहात्म्यवर्णनम्

श्रीनारायण उवाच

"शुद्धंस्मार्तंचाचमनंपौराणंवैदिकंतथा।तान्त्रिकंश्रौतमित्याहुःषड्विधंश्रुतिचोदितम्

विण्मूत्रादिकशौचञ्च शुद्धञ्च परिकीर्तितम् ।
स्मार्तपौराणिकं कर्म आचान्ते विधिपूर्वकम् ॥
वैदिकं श्रौतमित्यादि ब्रह्मयज्ञादिपूर्वकम् ।
अस्त्रविद्यादिकं कर्म तान्त्रिको विधिरुच्यते ॥"
स्मृत्वा चोङ्कारगायत्रीं निबध्नीयाच्छिखां तथा ।
पुनराचम्य हृदयं बाहू स्कन्धौ च संस्पृशेत् ॥ १ ॥

क्षुतेनिष्ठीवनेचैव दन्तोच्छिष्टेतथाऽनृते । पतितानाञ्च सम्भाषेदक्षिणं श्रवणंस्पृशेत्
अग्निरापश्चवेदाश्चसोमः सूर्योऽनिलस्तथा । सर्वेनारद! विप्रस्यसर्वे तिष्ठन्ति दक्षिणे
ततस्तु गत्वा नद्यादौ प्रातः स्नानंविशोधनम् । समाचरेन्मुनिश्रेष्ठ! देहसंशुद्धिहेतवे॥
अत्यन्तमलिनो देहो नवद्वारैर्मलं वहन् । सदाऽऽस्तेतच्छोधनायप्रातःस्नानंविधीयते
अगम्यागमनात्पापं यच्च पापं प्रतिग्रहात् । रहस्याचरितं पापं मुच्यते स्नानकर्मणा ॥

अस्नातस्य क्रियाःसर्वाभवन्तिविफलायतः । तस्मात्प्रातश्चरेत्स्नानंनित्यमेवदिनेदिने
दर्भयुक्तश्चरेत्स्नानंतथासन्ध्याभिवन्दनम् । सप्ताहंप्रातरस्नायी सन्ध्याहीनस्त्रिभिर्दिनैः

द्वादशाहमनग्निः सन्द्विजः शूद्रत्वमाप्नुयात् ।

अल्पत्वाद्धोमकालस्य बहुत्वात्स्नानकर्मणः ॥ ६ ॥

प्रातर्नतु तथा स्नायाद्धोमकालेविगर्हितः । गायत्र्यास्तु परंनास्ति इह लोके परत्र च
गायन्तं त्रायते यस्माद्गायत्रीत्यभिधीयते । प्रणवेन तु संयुक्तां व्याहृतित्रयसंयुताम्
वायुं वायौ जयेद्विप्रः प्राणसंयमनत्रयात् । ब्राह्मणः श्रुतिसम्पन्नःस्वधर्मनिरतःसदा

स वैदिकं जपेन्मन्त्रं लौकिकं न कदाचन ।

गोशृङ्गे सर्षपोयावत्तावद्येषां न संस्थिरः ॥ १३ ॥

न तारयन्त्युभौ पक्षौ पितृनेकोत्तरंशतम् । सगर्भोजपसंयुक्तस्त्वगर्भो ध्यानमात्रकः
स्नानाङ्गतर्पणं कृत्वा देवर्षिपितृतोषकम् । शुद्धेवस्त्रे परीधाय जलाद्बहिरुपागतः ॥
विभूतिधारणं कार्यं रुद्राक्षाणाञ्च धारणम् । क्रमयोगेन कर्तव्यं सर्वदा जपसाधकैः

रुद्राक्षान्कण्ठदेशे दशनपरिमितान्मस्तके विंशती द्वे

षट् षट् कर्णप्रदेशे करयुगलकृते द्वादश द्वादशैव ।

बाह्वोरिन्दोः कलाभिर्नयनयुगकृते त्वेकमेकं शिखायां

वक्षस्यष्टाधिकं यः कलयति शतकं स स्वयं नीलकण्ठः ॥ १७ ॥

बद्ध्वा स्वर्णेनरुद्राक्षं रजतेनाऽथवामुने ।। शिखायांधारयेन्नित्यंकर्णयोर्वासमाहितः
यज्ञोपवीते हस्तेवा कण्ठे तुन्देऽथवानरः । श्रीमत्पञ्चाक्षरेणैव प्रणवेन तथापि वा ॥
निर्व्याजभक्त्या मेधावीरुद्राक्षंधारयेन्मुदा । रुद्राक्षधारणंसाक्षाच्छिवज्ञानस्यसाधनम्

रुद्राक्षं यच्छिखायां तत्तारतत्त्वमिति स्मरेत् ।

कर्णयोरुभयोर्ब्रह्मन्देवं देवीञ्च भावयेत् ॥ २१ ॥

यज्ञोपवीतेवेदांश्चतथाहस्तेदिशःस्मरेत् । कण्ठे सरस्वतीं देवीं पावकञ्चापिभावयेत्

सर्वाश्रमाणां वर्णानां रुद्राक्षाणां च धारणम् ।

कर्तव्यं मन्त्रतः प्रोक्तं द्विजानां नाऽन्यवर्णिनाम् ॥ २३ ॥

रुद्राक्षधारणाद्रुद्रो भवत्येव न संशयः। पश्यन्नपि निषिद्धांश्चतथा शृण्वन्नपिस्मरन्
जिघ्रन्नपि तथा चाऽश्नन्प्रलपन्नपिसन्ततम्। कुर्वन्नपिसदागच्छन्विसृजन्नपिमानवः
रुद्राक्षधारणादेव सर्वपापैर्न लिप्यते। अनेन भुक्तं देवेन भुक्तं यत्तु तथा भवेत् ॥२६॥
पीतं रुद्रेण तत्पीतं घ्रातं घ्रातंशिवेन तत्। रुद्राक्षधारणे लज्जा येषामस्तिमहामुने!
तेषांनास्तिविनिर्मोक्षःसंसाराज्जन्मकोटिभिः। रुद्राक्षधारिणं दृष्ट्वापरिवादंकरोतियः
उत्पत्तौतस्यसाङ्कर्यमस्त्येवेतिविनिश्चयः। रुद्राक्षधारणादेव रुद्रो रुद्रत्वमाप्नुयात्
मुनयः सत्यसङ्कल्पा ब्रह्मा ब्रह्मत्वमागतः। रुद्राक्षधारणाच्छ्रेष्ठं न किञ्चिदपि विद्यते
रुद्राक्षधारिणे भक्त्या वस्त्रं धान्यंददातियः। सर्वपापविनिर्मुक्तःशिवलोकंसगच्छति
रुद्राक्षधारिणं श्राद्धे भोजयेतविमोदतः। पितृलोकमवाप्नोति नाऽत्रकार्याविचारणा
रुद्राक्षधारिणःपादौप्रक्षाल्याऽद्भिः पिबेन्नरः। सर्वपापविनिर्मुक्तः शिवलोके महीयते
हारम्वा कटकम्वापिसुवर्णम्वाद्विजोत्तमः। रुद्राक्षसहितंभक्त्या धारयन्रुद्रतामियात्
रुद्राक्षं केवलं वापि यत्र कुत्र महामते!। समन्त्रकं वा मन्त्रेण रहितम्भाववर्जितम्

यो वा को वा नरो भक्त्या धारयेल्लज्जयाऽपि वा।
सर्वपापविनिर्मुक्तः सम्यग्ज्ञानमवाप्नुयात् ॥ ३६ ॥

अहो रुद्राक्षमाहात्म्यं मया वक्तुं न शक्यते। तस्मात्सर्वप्रयत्नेनकुर्याद्रुद्राक्षधारणम्

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामेकादशस्कन्धे सदाचारवर्णने रुद्राक्षमहत्त्वविधानकथनंनाम तृतीयोऽध्यायः ॥ ३ ॥

# चतुर्थोऽध्यायः

## रुद्राक्षमाहात्म्यवर्णनम्

**नारद उवाच**

एवं भूतानुभावोऽयं रुद्राक्षो भवताऽनघ!। वर्णितो महतां पूज्यः कारणंतत्र किं वद

**नारायण उवाच**

एवमेव पुरा पृष्टो भगवान्गिरिशः प्रभुः। षण्मुखेन च रुद्रस्तं यदुवाच शृणुष्व तत्

**ईश्वर उवाच**

शृणु षण्मुख! तत्त्वेन कथयामिसमासतः। त्रिपुरोनामदैत्यस्तु पुराऽसीत्सर्वदुर्जयः
हतास्तेन सुराः सर्वेब्रह्मविष्ण्वादिदेवताः। सर्वैस्तुकथितेतस्मिंस्तदाऽहंत्रिपुरंप्रति
अचिन्तयं महाशस्त्रमघोराख्यं मनोहरम्। सर्वदेवमयं दिव्यं ज्वलन्तं घोररूपि यत्॥
त्रिपुरस्य वधार्थाय देवानां तारणाय च। सर्वविघ्नोपशमनमघोरास्त्रमचिन्तयम्
दिव्यवर्षसहस्रंतुचक्षुरुन्मीलितंमया। पश्चान्ममाऽऽकुलाक्षिभ्यः पतिता जलबिन्दवः
तत्राऽश्रुबिन्दुतो जाता महारुद्राक्षवृक्षकाः। ममाऽऽज्ञयामहासेन सर्वेषांहितकाम्यया
बभूवुस्ते च रुद्राक्षा अष्टत्रिंशत्प्रभेदतः। सूर्यनेत्रसमुद्भूताः कपिला द्वादश स्मृताः

सोमनेत्रोत्थिताः श्वेतास्ते षोडशविधाः क्रमात्।
वह्निनेत्रोद्भवाः कृष्णा दश भेदा भवन्ति हि॥ १०॥

श्वेतवर्णश्च रुद्राक्षोजातितोब्राह्मउच्यते। क्षात्रोरक्तस्तथामिश्रोवैश्यःकृष्णस्तुशूद्रकः

एकवक्त्रः शिवः साक्षाद् ब्रह्महत्यां व्यपोहति।
द्विवक्त्रो देवदेव्यौस्याद्द्विविधं नाशयेदघम्॥ १२॥
त्रिवक्त्रस्त्वनलः साक्षात्स्त्रीहत्यां दहति क्षणात्।
चतुर्वक्त्रः स्वयं ब्रह्मा नरहत्यां व्यपोहति॥ १३॥

पञ्चवक्त्रः स्वयं रुद्रः कालाग्निर्नाम नामतः। अभक्ष्यभक्षणोद्भूतैरगम्यागमनोद्भवैः

मुच्यतेसर्वपापैस्तुपञ्चवक्त्रस्यधारणात्। षड्वक्त्रःकार्त्तिकेयस्तुसधार्योदक्षिणेकरे
ब्रह्महत्यादिभिः पापैर्मुच्यतेनाऽत्र संशयः । सप्तवक्त्रो महाभागोह्यनङ्गो नाम नामतः
तद्धारणान्मुच्यतेहिस्वर्णस्तेयादिपातकैः । अष्टवक्त्रो महासेनःसाक्षाद्देवोविनायकः
अन्नकूटं तूलकूटं स्वर्णकूटं तथैव च । दुष्टान्वयस्त्रियं वाऽथ संस्पृशंश्च गुरुस्त्रियम्

एवमादीनि पापानि हन्ति सर्वाणि धारणात् ।
विघ्नास्तस्य प्रणश्यन्ति याति चाऽन्ते परं पदम् ॥ १६ ॥

भवन्त्येते गुणा सर्वे ह्यष्टवक्त्रस्य धारणात् । नववक्त्रो भैरवस्तु धारयेद्वामबाहुके
भुक्तिमुक्तिप्रदः प्रोक्तो मम तुल्यबलो भवेत् । भ्रूणहत्यासहस्राणिब्रह्महत्याशतानिच
सद्यः प्रलयमायान्ति नववक्त्रस्य धारणात् । दशवक्त्रस्तुदेवेशः साक्षाद्देवोजनार्दनः
ग्रहाश्चैव पिशाचाश्च वेतालाब्रह्मराक्षसाः । पन्नगाश्चोपशाम्यन्तिदशवक्त्रस्यधारणात्
वक्त्रैकादशरुद्राक्षो रुद्रैकादशकं स्मृतम् । शिखायांधारयेद्यो वै तस्यपुण्यफलं शृणु
अश्वमेधसहस्रस्य वाजपेयशतस्य च । गवां शतसहस्रस्यसम्यग्दत्तस्य यत्फलम् ॥
तत्फलंलभतेशीघ्रंवक्त्रैकादशधारणात् । द्वादशाऽऽस्यस्यरुद्राक्षस्यैवकर्णेतुधारणात्

आदित्यास्तोषिता नित्यं द्वादशास्ये व्यवस्थिताः ।
गोमेधे चाऽश्वमेधे च यत्फलं तदवाप्नुयात् ॥ २७ ॥

शृङ्गिणां शस्त्रिणांचैवव्याघ्रादीनांभयंनहि । नचव्याधिभयंतस्यनैवचाधिःप्रकीर्तितः
न च किञ्चिद्भयंतस्यन च व्याधिः प्रवर्तते । न कुतश्चिद्भयंतस्यसुखीचैवेश्वरोभवेत्
हस्त्यश्वमृगमार्जारसर्पमूषकदर्दुरान् । खरांश्च श्वशृगालांश्च हत्वा बहुविधानपि ॥
मुच्यते नाऽत्रसन्देहो वक्त्रद्वादशधारणात् । वक्त्रत्रयोदशोवत्सरुद्राक्षोयदिलभ्यते
कार्त्तिकेयसमो ज्ञेयः सर्वकामार्थसिद्धिदः । रसो रसायनं चैवतस्यसर्वंप्रसिद्ध्यति
तस्यैव सर्वभोग्यानि नाऽत्र कार्या विचारणा । मातरं पितरंचैवभ्रातरंवानिहन्तियः
मुच्यते सर्वपापेभ्यो धारणात्तस्य षण्मुख !। चतुर्दशास्योरुद्राक्षोयदि लभ्येतपुत्रक
धारयेत्सततं मूर्ध्नि तस्य पिण्डः शिवस्य तु । किं मुने बहुनोक्तेनवर्णनेन पुनः पुनः
पूज्यते सततं देवैः प्राप्यते च परा गतिः । रुद्राक्षएकःशिरसाधार्योभक्त्याद्विजोत्तमैः

षड्विंशद्भिः शिरोमाला पञ्चाशद्धृदयेन तु । कलाक्षैर्बाहुवलयैअर्काक्षैर्मणिबन्धनम्
अष्टोत्तरशतेनाऽपिपञ्चाशद्भिः षडानन !। अथवासप्तविंशान्याकृत्वारुद्राक्षमालिकाम्
धारणाद्वा जपाद्वापि ह्यनन्तं फलमश्नुते । अष्टोत्तरशतंर्मालारुद्राक्षैर्धार्यते यदि ॥
क्षणेक्षणेऽश्वमेधस्य फलं प्राप्नोति षण्मुख !। त्रिःसप्तकुलमुद्धृत्यशिवलोकेमहीयते

इति श्रीदेवीभागवते महापुराणेऽष्टादश साहस्र्यां संहितायामेकादशस्कन्धे
रुद्राक्षमाहात्म्यवर्णनंनाम चतुर्थोऽध्यायः ॥ ४ ॥

---

# पञ्चमोऽध्यायः

## जपमालाविधानवर्णनम्

### ईश्वर उवाच

लक्षणं जपमालायाः शृणु वक्ष्यामि षण्मुख !। रुद्राक्षस्य मुखंब्रह्माबिन्दूरुद्रइतीरितः
विष्णुः पुच्छंभवेच्चैवभोगमोक्षफलप्रदम् । पञ्चविंशतिभिश्चाक्षैःपञ्चवक्त्रैःसकण्टकैः
रक्तवर्णैः सितैर्मिश्रैः कृतरन्ध्रविदर्भितैः । अक्षसूत्रं प्रकर्तव्यं गोपुच्छवलयाकृति ॥३
वक्त्रं वक्त्रेण संयोज्य पुच्छंपुच्छेनयोजयेत् । मेरुमूर्ध्वमुखंकुर्यात्तदूर्ध्वंनागपाशकम्
एवं सङ्ग्रथितां मालांमन्त्रसिद्धिप्रदायिनीम् । प्रक्षाल्यगन्धतोयेनपञ्चगव्येनचोपरि

ततः शिवाम्भसाऽऽक्षाल्य ततो मन्त्रगणान्न्यसेत् ।
स्पृष्ट्वा शिवास्त्रमन्त्रेण कवचेनाऽवगुण्ठयेत् ॥ ६ ॥

मूलमन्त्रं न्यसेत्पश्चात्पूर्ववत्कारयेत्तथा । सद्योजातादिभिः प्रोक्ष्य यावदष्टोत्तरंशतम्
मूलमन्त्रं समुच्चार्य शुद्धभूमौ निधाय च । तस्योपरि न्यसेत्साम्बंशिवंपरमकारणम्
प्रतिष्ठिता भवेन्माला सर्वकामफलप्रदा । यस्य देवस्य योमन्त्रस्तांतेनैवाभिपूजयेत्
मूर्ध्नि कण्ठेऽथवा कर्णे न्यसेद्वाजपमालिकाम् । रुद्राक्षमालयाचैवंजप्तव्यंनियतात्मना
कण्ठे मूर्ध्नि हृदि प्रान्ते कर्णे बाहुयुगेऽथवा । रुद्राक्षधारणं नित्यं भक्त्यापरमयायुतः

किमत्र बहुनोक्तेन वर्णनेन पुनः पुनः। रुद्राक्षधारणं नित्यं तस्माद्देतत्प्रशस्यते ॥ १२
स्नाने दाने जपे होमे वैश्वदेवे सुरार्चने। प्रायश्चित्ते तथा श्राद्धे दीक्षाकाले विशेषतः
अरुद्राक्षधरो भूत्वा यत्किञ्चित्कर्म वैदिकम्। कुर्वन्विप्रस्तु मोहेन नरके पतति ध्रुवम्
रुद्राक्षं धारयेन्मूर्ध्नि कण्ठे सूत्रे करेऽथवा। सुवर्णमणिसम्भिन्नं शुद्धं नान्यैर्धृतं शिवम्
नाऽशुचिर्धारयेदक्षं सदा भक्त्यैव धारयेत्। रुद्राक्षतरुसम्भूतवातोद्भूततृणान्यपि ॥
पुण्यलोकं गमिष्यन्ति पुनरावृत्तिदुर्लभम्। रुद्राक्षं धारयन्पापं कुर्वन्नपि च मानवः॥
सर्वं तरति पाप्मानं जाबालश्रुतिराह हि। पशवो हि च रुद्राक्षधारणाद्यान्तिरुद्रताम्
किमु ये धारयन्तिस्म नरा रुद्राक्षमालिकाम्। रुद्राक्षःशिरसाह्येकोधार्योरुद्रपरैःसदा
ध्वंसनं सर्वदुःखानां सर्वपापविमोचनम्। व्याहरन्ति च नामानियेशम्भोःपरमात्मनः
रुद्राक्षालङ्कृता ये च ते वै भागवतोत्तमाः। रुद्राक्षधारणंकार्यंसर्वश्रेयोऽर्थिभिर्नृभिः
कर्णपाशेशिखायाञ्च कण्ठे हस्ते तथोदरे। महादेवश्च विष्णुश्च ब्रह्मा तेषां विभूतयः
देवाश्चान्येतथाभक्त्याखलुरुद्राक्षधारिणः। गोत्रर्षयश्च सर्वेषां कूटस्था मूलरूपिणः
तेषां वंशप्रसूताश्च मुनयः सकला अपि। श्रौतधर्मपराः शुद्धाः खलु रुद्राक्षधारिणः॥
श्रद्धा न जायते साक्षाद्वेदसिद्धे विमुक्तिदे। बहूनां जन्मनामन्ते महादेवप्रसादतः॥
रुद्राक्षधारणे वाञ्छा स्वभावादेव जायते। रुद्राक्षस्य तु माहात्म्यं जाबालैरादरेणतु
पठ्यते मुनिभिः सर्वैर्मया पुत्र! तथैव च। रुद्राक्षस्यफलं चैव त्रिषु लोकेषु विश्रुतम्
फलस्य दर्शने पुण्यं स्पर्शात्कोटिगुणं भवेत्। शतकोटिगुणंपुण्यंधारणाल्लभतेनरः
लक्षकोटिसहस्राणि लक्षकोटिशतानि च। जपाच्च लभते नित्यंनात्रकार्याविचारणा
हस्ते चोरसिकण्ठे च कर्णयोर्मस्तकेतथा। रुद्राक्षंधारयेद्यस्तु स रुद्रोनाऽत्रसंशयः
अवध्यः सर्वभूतानां रुद्रवद्धि चरेद्भुवि। सुराणामसुराणां च वन्दनीयो यथा शिवः
रुद्राक्षधारी सततंवन्दनीयस्तथा नरैः। उच्छिष्टो वाविकर्मस्थोयुक्तोवासर्वपातकैः
मुच्यते सर्वपापेभ्यो रुद्राक्षस्य तु धारणात्। कण्ठेरुद्राक्षमाबध्यश्वापिवाम्रियतेयदि
सोऽपिमुक्तिमवाप्नोतिकिंपुनर्मानुषोऽपिसः जपध्यानविहीनोऽपिरुद्राक्षंयदिधारयेत्
सर्वपापविनिर्मुक्तः स यातिपरमां गतिम्। एकंवाऽपिहिरुद्राक्षंकृत्वायत्नेनधारयेत्

एकविंशतिमुद्धृत्य रुद्रलोके महीयते । अतः परं प्रवक्ष्यामि रुद्राक्षस्यपुनर्विधिम् ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामेकादशस्कन्धे रुद्राक्षजपमालाविधानवर्णनंनाम पञ्चमोऽध्यायः ॥ ५ ॥

---

# षष्ठोऽध्यायः

## रुद्राक्षमाहात्म्यवर्णनम्

### ईश्वर उवाच

महासेन! कुशग्रन्थिपुत्रा जीवादयः परे । रुद्राक्षस्यतु नैकोऽपिकलामर्हतिषोडशीम्

पुरुषाणां यथाविष्णुर्ग्रहाणां च यथा रविः ।
नदीनां तु यथा गङ्गा मुनीनां कश्यपो यथा ॥ २ ॥

उच्चैःश्रवा यथाऽश्वानांदेवानामीश्वरोयथा । देवीनातु यथागौरीतद्वच्छ्रेष्ठमिदंभवेत्
नाऽतः परतरं स्तोत्रं नाऽतः परतरंव्रतम् । अक्षय्येषु च दानेषुरुद्राक्षस्तु विशिष्यते
शिवभक्ताय शान्तायदद्याद्रुद्राक्षमुत्तमम् । तस्यपुण्यफलस्याऽन्तं नचाऽहं वक्तुमुत्सहे
धृतरुद्राक्षकण्ठाय यस्त्वन्नं सम्प्रयच्छति । त्रिःसप्तकुलमुद्धृत्य रुद्रलोकं सगच्छति॥
यस्यभाले विभूतिर्न नाङ्गे रुद्राक्षधारणम् । नशम्भोर्भवने पूजा सविप्र श्वपचाधमः
खादन्मांसंपिबन्मद्यंसङ्गच्छन्नन्त्यजानपि । पातकेभ्योविमुच्येतरुद्राक्षेशिरसिस्थिते
सर्वयज्ञतपोदानवेदाभ्यासैश्च यत्फलम् । यत्फलं लभते सद्यो रुद्राक्षस्यतु धारणात्
वेदैश्चतुर्भिर्यत्पुण्यं पुराणपठनेन च । यत्तीर्थसेवनेनैव सर्वविद्यादिभिस्तथा ॥ १०
तत्पुण्यं लभते सद्यो रुद्राक्षस्यतु धारणात । प्रयाणकालेरुद्राक्षंबन्धयित्वाम्रियेद्यदि
स रुद्रत्वमवाप्नोति पुनर्जन्म न विद्यते । रुद्राक्षं धारयेत्कण्ठे बाह्वोर्वा म्रियते यदि
कुलैकविंशमुत्तार्य रुद्रलोके वसेन्नरः । ब्राह्मणोवापिचाण्डालो निर्गुणःसगुणोऽपिवा

भस्मरुद्राक्षधारी यः स देवत्वं शिवं व्रजेत् ।

शुचिर्वाऽप्यशुचिर्वाऽपि तथाऽभक्ष्यस्य भक्षकः ॥ १४ ॥
म्लेच्छो वाऽप्यथचाण्डालोयुतोवासर्वपातकैः । रुद्राक्षधारणादेवसरुद्रोनाऽत्रसंशयः
शिरसा धार्यते कोटिः कर्णयोर्दशकोटयः । शतकोटिर्गलेबद्धोमूर्ध्निकोटिसहस्रकम्
अयुतश्चोपवीते तु लक्षकोटिर्भुजे स्थिते । मणिबन्धे तु रुद्राक्षो मोक्षसाधनकःपरः
रुद्राक्षधारको भूत्वा यत्किञ्चित्कर्म वैदिकम् ।
कुर्वन्विप्रः सदा भक्त्या महदाप्नोति तत्फलम् ॥ १८ ॥
रुद्राक्षमालिकां कण्ठे धारयेद्भक्तिवर्जितः । पापकर्मातुयो नित्यंसमुक्तः सर्वबन्धनात्
रुद्राक्षार्पितचेतायोरुद्राक्षन्तुनवै धृतः । असौ माहेश्वरो लोके नमस्यः सतुलिङ्गवत्
अविद्यो वा सविद्यो वा रुद्राक्षस्यतु धारणात् । शिवलोकंप्रपद्येतकीकटेगर्दभोयथा

स्कन्द उवाच

रुद्राक्षान्सन्दधे देव! गर्दभः केन हेतुना । कीकटे केन वा दत्तस्तद्ब्रूहि परमेश्वर !॥

श्रीभगवानुवाच

शृणु पुत्र! पुरावृत्तं गर्दभो विन्ध्यपर्वते । धत्ते रुद्राक्षभारं तु वाहितः पथिकेन तु ॥
श्रान्तोऽसमर्थस्तद्भारं वोढुंपतितवान्भुवि । प्राणैस्त्यक्तस्त्रिनेत्रस्तुशूलपाणिर्महेश्वरः
मत्प्रसादान्महासेन!मदन्तिकमुपागतः । यावद्वक्त्रस्यसङ्ख्यानंरुद्राक्षाणांसुदुर्लभम्
तावद्युगसहस्राणिशिवलोकेमहीयते । स्वशिष्येभ्यस्तुवक्तव्यंनाऽशिष्येभ्यःकदाचन
अभक्तेभ्योऽपि मूर्खेभ्यः कदाचिन्न प्रकाशयेत् ।
अभक्तो वाऽस्तु भक्तोवा नीचो नीचतरोऽपि वा ॥ २७ ॥
रुद्राक्षान्धारयेद्यस्तु मुच्यते सर्वपातकैः । रुद्राक्षधारणं पुण्यं केन वा सदृशं भवेत् ॥
महाव्रतमिदं प्राहुर्मुनयस्तत्त्वदर्शिनः । सहस्रं धारयेद्यस्तु रुद्राक्षाणां धृतव्रतः ॥ २६॥
तं नमन्ति सुराः सर्वे यथा रुद्रस्तथैव सः । अभावे तु सहस्रस्य बाह्वोःषोडशषोडश
एकं शिखायां करयोर्द्वादश द्वादशैव तु । द्वात्रिंशत्कण्ठदेशेतु चत्वारिंशच्च मस्तके
एकैकं कर्णयोः षट्षट् वक्षस्यष्टोत्तरं शतम् ।
यो धारयति रुद्राक्षान्रुद्रवत् स तु पूज्यते ॥ ३२ ॥

मुक्ताप्रवालस्फटिकैरौप्यवैडूर्यकाञ्चनैः । समेतान्धारयेद्यस्तु रुद्राक्षान्सशिवोभवेत्

केवलानपि रुद्राक्षान्यद्यालस्यादुबिभर्ति यः ।

तं न स्पृशन्ति पापानि तमांसीव विभावसुम् ॥ ३४ ॥

रुद्राक्षमालयामन्त्रोजप्तोऽनन्तफलप्रदः । यस्याऽङ्गेनास्तिरुद्राक्षएकोऽपि बहुपुण्यदः

तस्यजन्म निरर्थं स्यात्त्रिपुण्ड्ररहितं यथा । रुद्राक्षंमस्तकेधृत्वाशिरःस्नानंकरोतियः

गङ्गास्नानफलं तस्य जायते नाऽत्र संशयः । एकवक्त्रः पञ्चवक्त्रएकादशमुखाः परे

चतुर्दशमुखाःकेचिद्रुद्राक्षालोकपूजिताः । भक्त्यासम्पूज्यते नित्यंरुद्राक्षःशङ्करात्मकः

दरिद्रं वापि पुरुषं राजानं कुरुते भुवि । अत्र ते कथयिष्यामि पुराणं मतमुत्तमम्

कोशलेषु द्विजः कश्चिद्गिरिनाथ इतिश्रुतः । महाधनी च धर्मात्मा वेदवेदाङ्गपारगः

यज्ञकृद्दीक्षितस्तस्य तनयःसुन्दराकृतिः । नाम्नागुणनिधिःख्यातस्तरुणःकामसुन्दरः

गुरोः सुधिषणस्याऽथ पत्नींमुक्तावलीमथ । मोहयामास रूपेण यौवनेन मदेन च

सङ्गतस्तु तया सार्धं कश्चित्कालं ततो भिया ।

विषं ददौ च गुरवे येभे पश्चात्तु निर्भयः ॥ ४३ ॥

यदा माता पिता कर्मकिञ्चिज्जानातियत्क्षणे । मातरंपितरंचापिमारयामासतद्विषात्

नानाविलासभोगैश्च जाते द्रव्यव्यये ततः । ब्राह्मणानां गृहेचौर्यं चकार स तदाखलः

सुरापानमदोन्मत्तस्तदाज्ञातिबहिष्कृतः । ग्रामान्निष्कासितःसर्वैस्तदासोऽभूद्वनेचरः

मुक्तावल्या तया सार्धं जगाम गहनं वनम् ।

मार्गे स्थितो द्रव्यलोभाज्जघान ब्राह्मणान्बहून् ॥ ४७ ॥

एवं बहुगते काले ममार स तदाऽधमः । नेतुं तं यमदूताश्च समाजग्मुः सहस्रशः ॥

शिवलोकाच्छिवगणास्त ैव च समागताः । तयोःपरस्परं वादोबभूवगिरिजासुत!

यमदूतास्तदा प्रोचुः पुण्यमस्यकिमस्तिहि । ब्रुवन्तुसेवकाः शम्भोर्यद्येनंनेतुमिच्छथ

शिवदूतास्तदा प्रोचुरयंयस्मिन्स्थलेमृतः । दशहस्तादधोभूमेरुद्राक्षस्तत्रचाऽस्तिहि

तत्प्रभावेण हे दूता! नेष्यामःशिवसन्निधिम् । ततो विमानमारुह्यदिव्यरूपधरोद्विजः

गतोगुणनिधिर्दूतैः सहितः शङ्करालयम् । इति रुद्राक्षमाहात्म्यं कथितं तव सुव्रत!

एवं रुद्राक्षमहिमा समासात्कथितो मया । सर्वपापक्षयकरो महापुण्यफलप्रदः ॥ ४४ ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामेकादशस्कन्धे रुद्राक्षमाहात्म्येगुणनिष्क्रिमोक्षणवर्णनंनाम षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः

### रुद्राक्षमाहात्म्यवर्णनम्

श्रीनारायण उवाच

एवंनारद! षड्वक्त्रोगिरिशेनचिबोधितः । रुद्राक्षमहिमानञ्ज्ञात्वाऽसीत्सकृतार्थकः
इत्थं भूतानुभावोऽयं रुद्राक्षो वर्णितो मया । सदाचारप्रसङ्गेन शृणुचान्यत्समाहितः
यथा रुद्राक्षमहिमा वर्णिताऽनन्तपुण्यदः । लक्षणं मन्त्रविन्यासंतथाऽहंवर्णयामिते
लक्षंतु दर्शनात्पुण्यंकोटिस्तत्स्पर्शनाद्भवेत् । तस्य कोटिगुणं पुण्यंलभतेधारणान्नरः
लक्षकोटिसहस्राणि लक्षकोटिशतानि च । तज्जपाल्लभते पुण्यं नरोरुद्राक्षधारणात्
रुद्राक्षाणांतु भद्राक्षधारणात्स्यान्महाफलम् । धात्रीफलप्रमाणंयच्छ्रेष्ठमेतदुदाहृतम्
बदरीफलमात्रंतु प्रोच्यते मध्यमंबुधैः । अधमं चणमात्रं स्यात्प्रतिज्ञैषा मयोदिता ॥

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चेति शिवाज्ञया ।
वृक्षा जाताः पृथिव्यां तु तज्जातीयाः शुभाक्षकाः ॥ ८ ॥
श्वेतास्तु ब्राह्मणा ज्ञेयाः क्षत्रिया रक्तवर्णकाः ।
पीता वैश्यास्तु विज्ञेयाः कृष्णाः शूद्राः प्रकीर्तिताः ॥ ९ ॥
ब्राह्मणो बिभृयाच्छ्वेतान्रक्तान्राजा तु धारयेत् ।
पीतान्वैश्यस्तु बिभृयात्कृष्णाञ्छूद्रस्तु धारयेत् ॥ १० ॥
समाः स्निग्धा दृढास्तद्वत्कण्टकैः संयुताः शुभाः ।
कृमिदष्टाञ्छिन्नभिन्नान्कण्टकै रहितांस्तथा ॥ ११ ॥

व्रणयुक्तानाऽऽवृतांश्च षड्रुद्राक्षांस्तु वर्जयेत् । स्वयमेव कृतद्वारो रुद्राक्षः स्यादिहोत्तमः
यत्तु पौरुषयत्नेन कृतं तन्मध्यमं भवेत् । समान्स्निग्धान्दृढान्वृत्तान्क्षौमसूत्रेण धारयेत्
सर्वगात्रेषु साम्येन समानाऽतिविलक्षणा । निघर्षे हेमलेखाभा यत्र लेखा प्रदृश्यते ॥
तदक्षमुत्तमं विद्यात्स धार्यः शिवपूजकैः । शिखायामेकरुद्राक्षं त्रिंशद्वै शिरसा वहेत्
षट्त्रिंशच्च गले धार्या बाह्वोः षोडश षोडश । मणिबन्धे द्वादशाक्षान्स्कन्धे पञ्चाशतं भवेत्
अष्टोत्तरशतैर्मालोपवीतञ्च प्रकल्पयेत् । द्विसरं त्रिसरं वापि बिभृयात्कण्ठदेशतः ॥
कुण्डले मुकुटे चैव कर्णिकाहारकेषु च । केयूरे कटके चैव कुक्षिबंधे तथैव च ॥ १८
सुप्ते पीते सर्वकालं रुद्राक्षं धारयेन्नरः । त्रिशतं त्वधमं पञ्चशतं मध्यममुच्यते ॥१६॥
सहस्रमुत्तमं प्रोक्तं एवं भेदेन धारयेत् । शिरसीशानमन्त्रेण कर्णे तत्पुरुषेण च ॥ २०
अघोरेण ललाटे तु तेनैव हृदयेऽपि च । अघोरबीजमन्त्रेण करे यो धारयेत्पुनः ॥२१
पञ्चाशदक्षग्रथितां वामदेवेन चोदरे । पञ्चब्रह्मभिरङ्गैश्चाप्येवं रुद्राक्षधारणम् ॥ २२ ॥
ग्रथितान्मूलमन्त्रेण सर्वानक्षांस्तु धारयेत् । एकवक्त्रस्तु रुद्राक्षः परतत्त्वप्रकाशकः
परतत्त्वधारणाच्च जायते तत्प्रकाशनम् । द्विवक्त्रस्तु मुनिश्रेष्ठ! अर्धनारीश्वरो भवेत्

धारणादर्धनारीशः प्रीयते तस्य नित्यशः ।
त्रिवक्त्रस्त्वनलः साक्षात्स्त्रीहत्यां दहति क्षणात् ॥ २५ ॥
त्रिमुखश्चैव रुद्राक्षोऽप्यग्नित्रयस्वरूपकः ।
तद्धारणाच्च हुतभुक् तस्य तुष्यति नित्यशः ॥ २६ ॥
चतुर्मुखस्तु रुद्राक्षः पितामहस्वरूपकः ।
तद्धारणान्महाश्रीमान्महदारोग्यमुत्तमम् ॥ २७ ॥

महती ज्ञानसम्पत्तिः शुद्धये धारयेन्नरः । पञ्चमुखस्तु रुद्राक्षः पञ्चब्रह्मस्वरूपकः ॥ २८
तस्य धारणमात्रेण सन्तुष्यति महेश्वरः । षड्वक्त्रश्चैव रुद्राक्षः कार्त्तिकेयाधिदैवतः
विनायकं चाऽपि देवं प्रवदन्ति मनीषिणः । सप्तवक्त्रस्तु रुद्राक्षः सप्तमात्राधिदैवतः
सप्ताश्वदैवतश्चैव मुनिसप्तकदैवतः । तद्धारणान्महाश्रीः स्यान्महदारोग्यमुत्तमम् ॥
महती ज्ञानसम्पत्तिः शुचिर्वै धारयेन्नरः । अष्टवक्त्रस्तु रुद्राक्षोऽप्यष्टमात्राधिदैवतः

वस्वष्टकप्रीतिकरो गङ्गाप्रीतिकरः शुभः। तद्धारणादिमे प्रीता भवेयुः सत्यवादिनः
नववक्त्रस्तु रुद्राक्षो यमदेव उदाहृतः। तद्धारणाद्यमभयं न भवत्येव सर्वथा॥
दशवक्त्रस्तु रुद्राक्षो दशाशादैवतः स्मृतः। दशाशाप्रीतिजनको धारणेनात्रसंशयः
एकादशमुखस्त्वक्षो रुद्रैकादशदैवतः। तमिन्द्रदैवतश्चाहुः सदा सौख्यविवर्धनम्॥
रुद्राक्षो द्वादशमुखो महाविष्णुस्वरूपकः। द्वादशादित्यदेवश्च बिभर्त्येव हि तत्परः
त्रयोदशमुखश्चाक्षः कामदःसिद्धिदः शुभः। तस्य धारणमात्रेण कामदेवः प्रसीदति

चतुर्दशमुखश्चाऽक्षो रुद्रनेत्रसमुद्भवः।
सर्वव्याधिहरश्चैव सर्वारोग्यप्रदायकः॥ ३६॥

मद्यं मांसश्च लशुनं पलाण्डुं शिग्रुमेव च। श्लेष्मातकं विड्वराहं भक्षणे वर्जयेत्ततः
ग्रहणे विषुवे चैव सङ्क्रमे अयने तथा। दर्शेच पौर्णमासेच पुण्येषु दिवसेष्वपि॥

रुद्राक्षधारणात्सद्यः सर्वपापैः प्रमुच्यते।

इति श्रीदेवीभागवते महापुराणेऽष्टादश साहस्र्या संहितायामेकादशस्कन्धे नारायणनारदसम्वादे रुद्राक्षमाहात्म्यवर्णनंनाम सप्तमोऽध्यायः॥ ७॥

---

# अष्टमोऽध्यायः

## भूतशुद्धिप्रकरणवर्णनम्

### श्रीनारायण उवाच

भूतशुद्धिप्रकारञ्च कथयामि महामुने!। मूलाधारात्समुत्थाय कुण्डलीं परदेवताम्॥
सुषुम्नामार्गमाश्रित्यब्रह्मरन्ध्रगतांस्मरेत्। जीवं ब्रह्मणि संयोज्य हंसमन्त्रेणसाधकः

पादादिजानुपर्यन्तं चतुष्कोणं सवज्रकम्।
लम्बीजाऽढ्यं स्वर्णवर्णंस्मरेदेवनिमण्डलम्॥ ३॥

आन्वाद्यानाभि चन्द्रार्धनिभं पद्मद्वयाङ्कितम् ।
वम्बीजयुक्तं श्वेताभमम्भसो मण्डलं स्मरेत् ॥ ४ ॥
नाभेर्हृदयपर्यन्तंत्रिकोणंस्वस्तिकान्वितम् । रम्बीजेनयुतंरक्तंस्मरेत्पावकमण्डलम्
हृदो भ्रूमध्यपर्यन्तं वृत्तं षड्बिन्दुलाञ्छितम् ।
यं बीजयुक्तं धूम्राभं नभस्वन्मण्डले स्मरेत् ॥ ६ ॥
आब्रह्मरन्ध्रं भ्रूमध्याद्वृत्तंस्वच्छंमनोहरम् । हंबीजयुक्तमाकाशमण्डलंचविचिन्तयेत्
एवंभूतानि सञ्चिन्त्य प्रत्येकंसम्विलापयेत् । भुव जले जलं ब्रह्मवह्निं वायौनभस्यमुम्
विलाप्य खमहङ्कारे महत्तत्त्वेऽप्यहङ्कृतिम् ।
महान्तं प्रकृतौ मायामात्मनि प्रविलापयेत् ॥ १ ॥
शुद्धसम्विन्मयो भूत्वाचिन्तयेत्पापपूरुषम् । वामकुक्षिस्थितंकृष्णमङ्गुष्ठपरिमाणकम्
ब्रह्महत्याशिरोयुक्तं कनकस्तेयबाहुकम् । मदिरापानहृदयंगुरुतल्पकटीयुतम् ॥ ११॥
तत्संसर्गिपदद्वन्द्वमुपपातकमस्तकम् । खड्गचर्मधरं कृष्णमधोवक्त्र सुदुःसहम् ॥१२
वायुबीजं स्मरन्वायुं सम्पूर्यैनं विशोषयेत् । स्वशरीरयुतं मन्त्री वह्निबीजेन निर्दहेत्
कुम्भके परिजप्तेन ततः पापनरोद्भवम् । बहिर्भस्म समुत्सार्य वायुबीजेन रेचयेत् ॥
सुधाबीजेन देहोत्थं भस्म सम्प्लावयेत्सुधीः ।
भूबीजेन घनीकृत्य भस्मतत्कनकाण्डवत् ॥ १५ ॥
विशुद्धमुकुराकारं जपबीजं विहाय सः । मूर्धादिपादपर्यन्तान्यङ्गानि रचयेत्सुधीः ॥
आकाशादीनि भूतानि पुनरुत्पादयेच्चितः । सोऽहं मन्त्रेणचात्मानमानयेद्धृदयाम्बुजे
कुण्डलीजीवमादायपरसङ्गात्सुधामयम् । संस्थाप्यहृदयाम्भोजेमूलाधारगतांस्मरेत्
रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः ।
शूलं कोदण्डमिक्षूद्भवमगुणमप्यङ्कुशं पञ्चबाणान् ॥
बिभ्राणाऽसृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या ।
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ॥ १९ ॥
एवंध्यात्वाप्राणशक्तिंपरमात्मस्वरूपिणीम् । विभूतिधारणंकार्यंसर्वाधिकृतिसिद्धये

विभूतेर्विस्तरं वक्ष्ये धारणे चमहाफलम् । श्रुतिस्मृतिप्रमाणोक्तंभस्मधारणमुत्तमम्
इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यांसंहितायामेकादशस्कन्धे
नारायणनारदसम्वादेभूतशुद्धिप्रकरणवर्णनंनामाऽष्टमोऽध्यायः ॥ ८ ॥

---

## नवमोऽध्यायः

### शिरोव्रतविधानवर्णनम्

**श्रीनारायण उवाच**

इदं शिरोव्रतं चीर्णं विधिवद्यैर्द्विजातिभिः । तेषामेव परां विद्यां वदेद्ब्रह्मानवाधिकाम्
विधिवच्छ्रद्धयासार्धं न चीर्णंयैःशिरोव्रतम् । श्रौतस्मार्तसमाचारस्तेषामनुपकारकः
शिरोव्रतसमाचारा देवब्रह्मादिदेवताः । देवता अभवन्विद्वन्! खलु नाऽन्येन हेतुना ॥
शिरोव्रतस्य माहात्म्यं पूर्वैः पूर्वतरं कृतम् । ब्रह्मा विष्णुश्च रुद्रश्चदेवताःसकलाअपि
सर्वपातकयुक्तोऽपि मुच्यते सर्वपातकैः । शिरोव्रतमिदं येन चरितं विधिवद् बुधः
शिरोव्रतमिदं नाम शिरस्याथर्वणश्रुतेः । यदुक्तं तद्धिनैवान्यत्तत्तु पुण्येन लभ्यते ॥६
शाखाभेदेषुनामानिव्रतस्याऽन्यचिभेदतः । पठ्यन्तेमुनिशार्दूलशाखास्वेकव्रतंहितत्
सर्वशाखासु वस्त्वेकं शिवाख्यंसत्यचिद्घनम् । तथातद्विषयंज्ञानंतथैवचशिरोव्रतम्
शिरोव्रतविहीनस्तु सर्वधर्मविवर्जितः । अपि सर्वासु विद्यासुसोऽधिकारीनसंशयः
शिरोव्रतमिदं कार्यं पापकान्तारदाहकम् । साधनं सर्वविद्यानां यतस्तत्सम्यगाचरेत्

श्रुतिराथर्वणी सूक्ष्मा सूक्ष्मार्थस्य प्रकाशिनी ।
यदुवाच व्रतं प्रीत्या तन्नित्यं सम्यगाचरेत् ॥ ११ ॥
अग्निरित्यादिभिर्मन्त्रैः षड्भिः शुद्धेन भस्मना ।
सर्वाङ्गोद्धूलनं कुर्याच्छिरोव्रतसमाह्वयम् ॥ १२ ॥

एतच्छिरोव्रतंकुर्यात्सन्ध्याकालेषुमादरम् । यावद्विद्योदयस्तावत्तस्यविद्याखलूत्तमा

द्वादशाब्दमथाब्दं वा तदर्धं च तदर्धकम् । प्रकुर्याद् द्वादशाहं वा सङ्कल्पेनशिरोव्रतम्
शिरोव्रतेन यः स्नातस्तं तुनोपदिशेत्तुयः । तस्यविद्याविनष्टास्याद्गुरुर्निर्घृणःसगुरुःखलु
ब्रह्मविद्यागुरुः साक्षान्मुनिःकारुणिकःखलु । यथासर्वेश्वरःश्रीमान्मृदुःकारुणिकःखलु
जन्मान्तरसहस्रेषु नरा ये धर्मचारिणः । तेषामेव खलु श्रद्धा जायते न कदाचन ॥१७
प्रत्युताऽज्ञानबाहुल्याद् द्वेष एव विजायते । अतः प्रद्वेषयुक्तस्य न भवेदात्मवेदनम्
ब्रह्मविद्योपदेशस्य साक्षादेवाधिकारिणः । स एव नेतरेविद्वन्ये तु स्नाताःशिरोव्रतैः
व्रतं पाशुपतं चीर्णं यर्द्विजरादरेण तु । तेषामेवोपदेष्टव्यमिति वेदानुशासनम् ॥ २०॥
यः पशुस्तत्पशुत्वं च व्रतेनानेनसन्त्यजेत् । तान्हत्वानसपापीयान्भवेद्वेदान्तनिश्चयः
त्रिपुण्ड्रधारणं प्रोक्तं जाबालैरादरेण तु । त्रियम्बकेन मन्त्रेण सतारेण शिवेन च ॥
त्रिपुण्ड्रन्धारयेन्नित्यं गृहस्थाश्रममाश्रितः । ओङ्कारेण त्रिरुक्तेन सहंसेनत्रिपुण्ड्रकम्
धारयेद्भिक्षुको नित्यमिति जाबालिकीश्रुतिः । त्रियम्बकेन मन्त्रेणप्रणवेनशिवेनच
गृहस्थश्च वानप्रस्थो धारयेच्चत्रिपुण्ड्रकम् । मेधावात्यादिनावाऽपिब्रह्मचारीदिनेदिने
भस्मनासजलेनाऽपिधारयेच्च त्रिपुण्ड्रकम् । ब्राह्मणोविधिनोत्पन्नस्त्रिपुण्ड्रभस्मनैवतु

ललाटे धारयेन्नित्यं तिर्यग्भस्मावगुण्ठनम् ।
"महादेवस्य सम्बन्धात्तद्धर्मेऽप्यस्ति सङ्गतिः" ॥
सम्यक् त्रिपुण्ड्रधर्मं च ब्राह्मणो नित्यमाचरेत् ॥ २७ ॥

आदिब्राह्मणभूतेन त्रिपुण्ड्रं भस्मना धृतम् । यतोऽत एवविप्रस्तुत्रिपुण्ड्रंधारयेत्सदा
भस्मना वेदसिद्धेनत्रिपुण्ड्रंदेहगुण्ठनम् । रुद्रलिङ्गार्चनंवाऽपि मोहतोऽपिचन त्यजेत्
त्रियम्बकेन मन्त्रेण सतारेण तथैव च । पञ्चाक्षरेण मन्त्रेण प्रणवेन तथैव च ॥ ३०
ललाटे हृदये चैव दोर्द्वन्द्वे च महामुने !। त्रिपुण्ड्रं धारयेन्नित्यं संन्यासाश्रममाश्रितः
त्रियायुषेण मन्त्रेण मेधावीत्यादिनाऽथवा । गौणेनभस्मनाधार्यंत्रिपुण्ड्रंब्रह्मचारिणा
नमोऽन्तेन शिवेनैव शूद्रःशुश्रूषणे रतः । उद्धूलनं त्रिपुण्ड्रं चनित्यंभस्मयासमाचरेत्
अन्येषामपि सर्वेषां विनामन्त्रेण सुव्रत !। उद्धूलनंत्रिपुण्ड्रञ्च कर्तव्यं भक्तितोमुने

भूत्यैवोद्धूलनं तिर्यक् त्रिपुण्ड्रस्य च धारणम् ।

वरेण्यं सर्वधर्मेभ्यस्तस्मान्नित्यं समाचरेत ॥ ३९ ॥

भस्माऽग्निहोत्रजं वाऽथ विरजाग्निसमुद्भवम् । आदरेण समादाय शुद्धे पात्रे निधाय तत्

प्रक्षाल्य पादौ हस्तौ च द्विराचम्य समाहितः । गृहीत्वा भस्म तत्पञ्च ब्रह्ममन्त्रैः शनैः शनैः

प्राणायामत्रयं कृत्वा अग्निरित्यादिमन्त्रितम् । तैरेव सप्तभिर्मन्त्रैस्त्रिवारमभिमन्त्रयेत

ओमापोज्योतिरित्युक्त्वा ध्यात्वा मन्त्रानुदीरयेत् ।

सितेन भस्मना पूर्वं समुद्धूल्य शरीरकम् ॥ ३६ ॥

विपापो विरजो मर्त्यो जायते नाऽत्र संशयः । ततो ध्यात्वा महाविष्णुं जगन्नाथं जलाधिपम्

संयोज्य भस्मना तोयमग्निरित्यादिभिः पुनः ।

विमृज्य साम्बं ध्यात्वा च समुद्धूल्योर्ध्वमस्तकम् ॥ ४१ ॥

ते च भावनया ब्रह्मभूतेन सितभस्मना । ललाटवक्षःस्कन्धेषु स्वाश्रमोचितमन्त्रतः

मध्यमानामिकाङ्गुष्ठैरनुलोमविलोमतः । त्रिपुण्ड्रं धारयेन्नित्यं त्रिकालेष्वपि भक्तितः

इती श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामेकादशस्कन्धे

सशिरोव्रतं त्रिपुण्ड्रधारणवर्णनं नाम नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः

### गौणभस्मविवरणम्

श्रीनारायण उवाच

आग्नेयं गौणमज्ञानध्वंसकं ज्ञानसाधकम् । गौणं नानाविधं विद्धि ब्रह्मन्ब्रह्मविदाम्वर

अग्निहोत्राग्निजं तद्वद्विरजानलजं मुने ॥ औपासनसमुत्पन्नं समिदग्निसमुद्भवम् ॥२ ॥

पचनाग्निसमुत्पन्नं दावानलसमुद्भवम् । त्रैवर्णिकानां सर्वेषामग्निहोत्रसमुद्भवम् ॥ ३ ॥

विरजानलजञ्चैव धार्यं भस्म महामुने । औपासनसमुत्पन्नं गृहस्थानां विशेषतः ॥

समिदग्निसमुत्पन्नं धार्यम्वं ब्रह्मचारिणा । शूद्राणां श्रोत्रियागारपचनाग्निसमुद्भवम् ॥
अन्येषामपिसर्वेषां धार्यंदावानलोद्भवम् । कालश्चित्रापौर्णमासी देशःस्वीयःपरिग्रहः
क्षेत्रारामाद्यरण्यं वा प्रशस्तःशुभलक्षणः । तत्र पूर्वत्रयोदश्यां सुस्नातः सुकृताह्निकः
अनुज्ञाप्यस्वमाचार्यंसम्पूज्यप्रणिपत्य च । पूजांवैशेषिकीकृत्वा शुक्लाम्बरधरःस्वयम्
शुद्धयज्ञोपवीतीच शुक्लमाल्यानुलेपनः । दर्भासने समासीनो दर्भमुष्टिं प्रगृह्य च ॥९॥

प्राणायामत्रयं कृत्वा प्राङ्मुखो वाऽप्युदङ्मुखः ।
ध्यात्वा देवञ्च देवीं च तद्विज्ञापनवर्त्मना ॥ १० ॥

व्रतमेतत्करोमीति भवेत्सङ्कल्पदीक्षितः । यावच्छरीरपातम्वा द्वादवाब्दमथाऽपिवा
तदर्धम्वा तदर्धम्वा मासद्वादशकं तु वा । तदर्धम्वा तदर्धम्वा मासमेकमथापि वा ॥
दिनद्वादशकं वाऽपि दिनषट्कमथापिवा । तदर्धं दिनमेकं वा व्रतसङ्कल्पनावधि ॥

अग्निमाधाय विधिवद्विरजाहोमकारणात् ।
हुत्वाऽऽज्येन समिद्भिश्च चरुणा च यथाविधि ॥ १४ ॥

पूनाहात्पुरतो भूयस्तत्त्वानां शुद्धिमुद्दिशन् । जुहुयान्मूलमन्त्रेण तैरेव समिदादिभिः

तत्त्वान्येतानि मे देहे शुध्यन्तामित्यनुस्मरन् ।
पश्चाद् भूतादितन्मात्राः पञ्चकर्मेन्द्रियाणि च ॥ १६ ॥

ज्ञानकर्मविभेदेन पञ्चपञ्च विभागशः । त्वगादिधातवः सप्त पञ्च प्राणादिवायवः ॥
मनोबुद्धिरहङ्कारो गुणाः प्रकृतिपूरुषौ । रागो विद्या कला चैव नियतिःकाल एवच
मायाचशुद्धविद्याचमहेश्वरसदाशिवौ । शक्तिश्च शिवतत्त्वश्च तत्त्वानिक्रमशोविदुः

मन्त्रैस्तु विरजैर्हुत्वा होताऽसौ विरजो भवेत् ।
अथ गोमयमादाय पिण्डीकृत्याऽभिमन्त्र्य च ॥ २० ॥
न्यस्याऽग्नौ तं च संरक्ष्य दिने तस्मिन्हविष्यभुक् ।
प्रभाते च चतुर्दश्यां कृत्वा सर्वम्पुरोदितम् ॥ २१ ॥

तस्मिन्दिने निराहारःकालशेषंसमापयेत् । प्रातःपर्वणिचाप्येवं कृत्वा होमावसानतः
उपसंहृत्य रुद्राग्निं गृहीत्वा भस्म यत्नतः । ततश्च जटिलोमुण्डः शिखैकजटएव च

भूत्वा स्नात्वापुनर्धौतलज्जश्चेत्स्याद्दिगम्बरः। अन्यःकाषायवसनश्चर्मचीराम्बरोऽथवा

एकाम्बरो वल्कलवान्भवेद्दण्डी च मेखली।
प्रक्षाल्य चरणौ पश्चाद् द्विराचम्याऽऽत्मनस्तनुम् ॥ २५ ॥
सङ्कुलीकृत्य तद्भस्म विरजानलसम्भवम्।
अग्निरित्यादिभिर्मन्त्रैः षड्भिराथर्वणैः क्रमात् ॥ २६ ॥

विमृज्याऽङ्गानिमूर्धादिचरणान्तंचतैःस्पृशेत्। ततस्तेनक्रमेणैवसमुद्धूल्यचभस्मना सर्वाङ्गोद्धूलनं कुर्यात्प्रणवेन शिवेन वा। ततश्च पुण्ड्रं रचयेत्त्रियायुषसमाह्वयम् शिवभावं समागम्य शिवभावमथाचरेत्। कुर्यात्त्रिसन्ध्यमप्येवमेतत्पाशुपतं व्रतम् भुक्तिमुक्तिप्रदञ्चैव पशुत्वं विनिवर्तयेत्। तत्पशुत्वं परित्यज्य कृत्वा पाशुपतं व्रतम् पूजनीयो महादेवो लिङ्गमूर्तिः सदाशिवः। भस्मस्नानं महापुण्यंसर्वसौख्यकरंपरम् आयुष्यं बलमारोग्यं श्रीपुष्टिवर्धनं यतः। रक्षार्थं मङ्गलार्थञ्च सर्वसम्पत्समृद्धये ॥ भस्मस्निग्धमनुष्याणांमहामारीभयंनच। शान्तिकंपौष्टिकंभस्मकामदञ्चत्रिधाभवेत्

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामेकादशस्कन्धे भस्ममहत्त्वेपाशुपतव्रतवर्णनंनाम दशमोऽध्यायः ॥ १०॥

---

# एकादशोऽध्यायः

## त्रिविधभस्ममाहात्म्यवर्णनम्

नारद उवाच

त्रिविधत्वं कथञ्चाऽस्य भस्मनः परिकीर्तितम्। एतत्कथय मे देवमहत्कौतूहलंमम

नारायण उवाच

त्रिविधत्वं प्रवक्ष्यामि देवर्षे! भस्मनः शृणु। महापापक्षयकरं महाकीर्तिकरं परम् ॥

गोमयं योनिसम्बद्धं त्वदृष्टेनैव गृह्यते । ब्राह्मैर्मन्त्रैस्तु सन्दग्धं तच्छान्तिकमिहोच्यते
सावधानस्तु गृह्णीयान्नरो वै गोमयन्तु यत् । अन्तरिक्षे गृहीत्वा तत्षडङ्गेन दहेदतः
पौष्टिकं तत्समाख्यातं कामदञ्च ततः शृणु । प्रसादेनदहेदेतत्कामदं भस्म कीर्तितम्
प्रातरुत्थाय देवर्षे भस्मव्रतपरः शुचिः । गवां गोष्ठेषु गत्वा तु नमस्कृत्वातुगोकुलम्
गवांवर्णानुरूपाणांगृह्णीयाद्गोमयंशुभम् । ब्राह्मणस्यचगौःश्वेतारक्तागौःक्षत्रियस्यच

पीतवर्णा तु वैश्यस्य कृष्णा शूद्रस्य कथ्यते ।

पौर्णमास्याममावास्यामष्टम्यां वा विशुद्धधीः ॥ ८ ॥

प्रासादेन तु मन्त्रेणगृहीत्वागोमयंशुभम् । हृदयेन तु मन्त्रेण पिण्डीकृत्यतुगोमयम्
रविरश्मिसुसन्तप्तं शुचौदेशे मनोहरे । तुषेणवा तुसैर्वापि प्रासादेन तु निक्षिपेत् ॥
अरण्युद्भवमग्निं वा श्रोत्रियागारजं तु वा । तदग्नौ विन्यसेत्तञ्च शिवबीजेन मन्त्रतः
गृह्णीयादथ तत्राऽग्निकुण्डाद्भस्मविचक्षणः । नवपात्रेसमादाय प्रासादेन तु निक्षिपेत्
केतकी पाटली तद्वदुशीरं चन्दनं तथा । नानासुगन्धिद्रव्याणि काश्मीरप्रभृतीनिच
निक्षिपेत्तत्र पात्रे तु सद्यो मन्त्रेणशुद्धधीः । जलस्नानम्पुराकृत्वा भस्मस्नानमतःपरम्
जलस्नाने त्वशक्तश्चभस्मस्नानंसमाचरेत् । प्रक्षाल्यपादौहस्तौ च शिरश्चेशानमन्त्रतः
समुद्धूल्य ततः पश्चादाननं तत्पुरुषेण तु । अघोरेण तु हृदयं नाभिं वामेन तत्परम्

सद्योमन्त्रेण सर्वाङ्गं समुद्धूल्य विचक्षणः ।

पूर्ववस्त्रंपरित्यज्य शुद्धवस्त्र परिग्रहेत ॥ १७ ॥

प्रक्षाल्यपादौहस्तौचपश्चादाचमनंचरेत् । भस्मनोद्धूलनाभावे त्रिपुण्ड्रं तुविधीयते
मध्याह्नात्प्राग्जलैर्युक्तंपरतोजलवर्जितम् । तर्जन्यनामिकामध्यैस्त्रिपुण्ड्रञ्चसमाचरेत्
मूर्ध्नि चैव ललाटेचकर्णे कण्ठे तथैव च । हृदये चैव बाह्वोश्च न्यासस्थानंहिचोच्यते

पञ्चाङ्गुलैर्न्यसेन्मूर्ध्नि प्रासादेन तु मन्त्रतः ।

त्र्यङ्गुलैर्विन्यसेद्भाले शिरोमन्त्रेण देशिकः ॥ २१ ॥

सद्येन दक्षिणे कर्णे वामदेवेन वामतः । अघोरेणतु कण्ठेच मध्याङ्गुल्या स्पृशेद्बुधः
हृदयं हृदयेनैव त्रिभिरङ्गुलिभिः स्पृशेत् । विन्यसेद्दक्षिणेबाहौशिखामन्त्रेणदेशिकः

वामबाहौ न्यसेद्धीमान्कवचेनत्रियङ्गुलैः । मध्येन संस्पृशेन्नाभ्यामीशान इति मन्त्रतः

ब्रह्मविष्णुमहेशानास्तिस्रोरेखाइतिस्मृताः ।

आद्योब्रह्माततोविष्णुस्तदूर्ध्वन्तु महेश्वरः ॥ २७ ॥

एकाङ्गुलेन न्यस्तं यदीश्वरस्तत्रदेवता । शिरो मध्ये त्वयं ब्रह्मा ईश्वरस्तु ललाटके॥

कर्णयोरश्विनौ देवौ गणेशस्तुगले तथा । क्षत्रियश्चतथा वैश्यःशूद्रश्चोद्धूलनंत्यजेत्

सर्वेषामन्त्यजातीनां मन्त्रेण रहितम्भवेत् ।

"अदीक्षितं मनुष्याणामपि मन्त्रं विना भवेत् " ॥ २८ ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामेकादशस्कन्धे त्रिविधभस्ममाहात्म्यवर्णनंनामैकादशोऽध्यायः ॥ ११ ॥

---

## द्वादशोऽध्यायः

### भस्ममाहात्म्यवर्णनम्

श्रीनारायण उवाच

देवर्षे शृणु तत्सर्वं भस्मोद्धूलनजं फलम् । सरहस्यविधानञ्च सर्वकामफलप्रदम् ॥

कपिलायाः शकृत्स्वच्छंगृहीत्वागगनेऽपतत् । नक्लिन्नंनापिकठिनंनदुर्गन्धंनचोषितम्

उपर्यधः परित्यज्य गृह्णीयात्पतितं यदि ।

पिण्डीकृत्य शिवाग्न्यादौ तत्क्षिपेन्मूलमन्त्रितम् ।

आदाय वाससाऽऽच्छाद्य भस्माऽऽधाने विनिक्षिपेत् ।

सुकृते सुदृढे शुद्धे क्षालिते प्रोक्षिते शुभे ॥ ४ ॥

विन्यस्य मन्त्री मन्त्रेण पात्रे भस्म विनिक्षिपेत् ।

तैजसं दारवं चाऽथ मृण्मयं चैलमेव च ॥ ५ ॥

अन्यद्वा शोभनंशुद्धंभस्माधारंप्रकल्पयेत् । क्षौमे चैवाऽतिशुद्धेवाधनवद्भस्मनिक्षिपेत्
ग्रन्थितोभस्मगृह्णीयात्स्वयंवानुचरोऽपिवा । नचायुक्तकरेदद्यान्नचाशुचितलेक्षिपेत्
न संस्पृशेत्तुनीचाङ्गैर्नक्षिपेन्नच लङ्घयेत् । तस्माद्धसितमादाय विनियुञ्जीतमन्त्रितम्
विभूतिधारणविधिः स्मृतिप्रोक्तोमयेरितः । यदीयाचरणेनैव शिवतुल्यो न संशयः
शैवैःसम्पादितंभस्मवैदिकैःशिवसन्निधौ । भक्त्यापरमयाग्राह्यंप्रार्थयित्वातु पूजयेत्
तन्त्रोक्तवर्त्मना सिद्धं भस्मतान्त्रिकपूर्वकैः । यत्रकुत्रापिदत्तं चेत्तद्ग्राह्यंनैव वैदिकैः
शूद्रैःकापालिकैर्वाऽथपाखण्डैरपरैस्तु तत् । त्रिपुण्ड्रं धारयेद्भक्त्यामनसाऽपिनलङ्घयेत्

श्रुत्या विधीयते यस्मात्तत्त्यागी पतितो भवेत् ।
त्रिपुण्ड्रधारणम्भक्त्या तथा देहावगुण्ठनम् ॥ १३ ॥

द्विजःकुर्याद्धिमन्त्रेणतत्त्यागीपतितोभवेत् । उद्धूलनंत्रिपुण्ड्रञ्चभक्त्यानैवाचरन्तिये
तेषांनास्तिविनिर्मोक्षः संसाराज्जन्मकोटिभिः । येनभस्मोक्तमार्गेणधृतंन मुनिपुङ्गव!
तस्यविद्धि मुनेजन्मनिष्फलं नौकरंयथा । येषाम्वपुर्मनुष्याणांत्रिपुण्ड्रेणविनास्थितम्
श्मशानसदृशं तत्स्यान्नप्रेक्ष्यं पुण्यकृज्जनैः । धिग्भस्मरहितंभालंधिग्ग्राममशिवालयम्

धिगनीशार्चनं जन्म धिग्विद्यामशिवाश्रयम् ।
त्रिपुण्ड्रंयेविनिन्दन्ति निन्दन्ति शिवमेव ते ॥ १४ ॥

धारयन्ति च ये भक्त्या धारयन्तितमेव ते । यथाकृशानुरहितो भूधरो न विराजते
अशेषसाधनेऽप्येव भस्महीनं शिवार्चनम् । उद्धूलनं त्रिपुण्ड्रञ्च श्रद्धया नाचरन्तिये
तैः पुराचरितं सर्वं विपरीतम्भवेदपि । भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्यच धारणम्
विना वेदोचिताचारंस्मार्तस्याऽनर्थकारणम् । कृतंस्यादकृतंतेन श्रुतमप्यश्रुतम्भवेत्
अधीतमप्यधीतञ्च त्रिपुण्ड्रं योनधारयेत् । वृथा वेदा वृथा यज्ञा वृथा दानं वृथा तपः
वृथाव्रतोपवासेनत्रिपुण्ड्रं योनधारयेत् । भस्मधारणकंत्यक्त्वामुक्तिमिच्छतियः पुमान्
विषपानेननित्यत्वंकुरुतेह्यात्मतनोहिसः । स्रष्टासृष्टिच्छलेनाहत्रिपुण्ड्रस्यचधारणम्
ससर्जसललाटंहितिर्यगूर्ध्वं न वर्तुलम् । तिर्यग्रेखाः प्रदृश्यन्ते ललाटे सर्वदेहिनाम्
तथापिमानवामूर्खा न कुर्वन्तित्रिपुण्ड्रकम् । न तद्ध्यातंन तन्मोक्षंतज्ज्ञानंन तत्तपः

विनातिर्यक्त्रिपुण्ड्रञ्चविप्रेणयदनुष्ठितम् । वेदस्याऽध्ययनेशूद्रोनाधिकारीयथाभवेत्

त्रिपुण्ड्रेण विना विप्रो नाधिकारी शिवार्चने ।

प्राङ्मुखश्चरणौ हस्तौ प्रक्षाल्याऽऽचम्य पूर्ववत् ॥ २६ ॥

प्राणानायम्य सङ्कल्प्यभस्मस्नानं समाचरेत् । आदायभसितं शुद्धमग्निहोत्रसमुद्भवम्

ईशानेन तु मन्त्रेण स्वमूर्धनि विनिक्षिपेत् । तत आदाय तद्भस्म मुखे च पुरुषेण तु

अघोराख्येण हृदये गुह्ये वामाह्वये न च । सद्योजाताभिधानेन भस्मपादद्वये क्षिपेत्

सर्वाङ्गं प्रणवेनैव मन्त्रेणोद्धूलनं ततः । एतदाग्नेयकं स्नानमुदितं परमर्षिभिः ॥३२॥

सर्वकर्मसमृद्ध्यर्थं कुर्यादादाविदं बुधः । ततः प्रक्षाल्यहस्तादीनुपस्पृश्ययथाविधि

तिर्यक् त्रिपुण्ड्रं विधिनाललाटे हृदयेगले । पञ्चभिर्ब्रह्मभिर्वाऽपि कृतेनभसितेन च

धृतमेतत्त्रिपुण्ड्रं स्यात्सर्वकर्मसु पावनम् ।

शूद्रस्त्वन्त्यजहस्तस्थं न धार्यं भस्म च कचित् ॥ ३६ ॥

भस्मना साऽग्निहोत्रेण लिप्तः कर्म समाचरेत् ।

अन्यथा सर्वकर्माणि न फलन्ति कदाचन ॥ ३७ ॥

सत्यं शौचं जपोहोमस्तीर्थदेवादिपूजनम् । तस्यव्यर्थमिदं सर्वं यस्त्रिपुण्ड्रं नधारयेत

त्रिपुण्ड्रधृग्विप्रवरोयोरुद्राक्षधरःशुचिः । स हन्ति रोगदुरितव्याधिदुर्भिक्षतस्करान

समाप्नोतिपरम्ब्रह्म यतोनावर्तते पुनः । स पङ्क्तिपावनः श्राद्धे पूज्यो विप्रैःसुरैरपि

श्राद्धे यज्ञे जपे होमे वैश्वदेवे सुरार्चने । धृतत्रिपुण्ड्रः पूतात्मा मृत्युञ्जयति मानवः ॥

भस्मधारणमाहात्म्यं भूयोऽपि कथयामि ते ॥ ४२ ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामेकादशस्कन्धे

भस्मधारणमाहात्म्यवर्णनंनाम द्वादशोऽध्यायः ॥ १२ ॥

— — —

# त्रयोदशोऽध्यायः

## त्रिपुण्ड्रभस्मधारणमाहात्म्यवर्णनम्

### श्रीनारायण उवाच

महापातकसङ्घाश्च पातकान्यपराण्यपि । नश्यन्ति मुनिशार्दूलसत्यं सत्यंनचान्यथा
एकं भस्म धृतं येन तस्य पुण्यफलंशृणु । यतीनांज्ञानदं प्रोक्तं वनस्थानां विरक्तिदम्
गृहस्थाना मुने तद्धर्मवृद्धिकरं तथा । ब्रह्मचर्याश्रमस्थानां स्वाध्यायप्रदमेव च ॥
शूद्राणांपुण्यदंनित्यमन्येषापापनाशनम् । भस्मनोद्धूलनश्चैवतथातिर्यक्त्रिपुण्ड्रकम्
रक्षार्थं सर्वभूतानांविधत्तेवैदिकीश्रुतिः । भस्मनोद्धूलनं चैवतथातिर्यक्त्रिपुण्ड्रकम्
यज्ञत्वेनैव सर्वेषांविधत्ते वैदिकीश्रुतिः । भस्मनोद्धूलनंचैवतथातिर्यक्त्रिपुण्ड्रकम
सर्वधर्मतयातेषांविधत्तेवैदिकीश्रुतिः । भस्मनोद्धूलनंचैव तथा तिर्यक्त्रिपुण्ड्रकम्

माहेश्वराणां लिङ्गार्थं विधत्ते वैदिकी श्रुतिः ।
भस्मनोद्धूलनञ्चैव तथा तिर्यक्त्रिपुण्ड्रकम् ॥ ८ ॥

विज्ञानार्थञ्च सर्वेषा विधत्ते वैदिकी श्रुतिः । शिवेनविष्णुनाचैवब्रह्मणावज्रिणातथा
हिरण्यगर्भेण तदवतारैर्वरुणादिभिः । देवताभिर्धृतं भस्म त्रिपुण्ड्रोद्धूलनात्मकम्

उमादेव्या च लक्ष्म्या च वाचा चाऽन्याभिरास्तिकैः ।
सर्वस्त्रीभिर्धृतं भस्म त्रिपुण्ड्रोद्धूलनात्मना ॥ ११ ॥

यक्षराक्षसगन्धर्वसिद्धविद्याधरादिभिः । मुनिभिश्चधृतंभस्मत्रिपुण्ड्रोद्धूलनात्मना
ब्राह्मणैः क्षत्त्रियैर्वैश्यैः शूद्रैरपिच सङ्करैः । अपभ्रंशैर्धृतं भस्मत्रिपुण्ड्रोद्धूलनात्मना
उद्धूलनं त्रिपुण्ड्रञ्च यैः समाचरितं मुदा । त एव शिष्टा विद्वांसो नेतरेमुनिपुङ्गव!
शिवलिङ्गंमणिःसङ्ख्यंमन्त्रःपञ्चाक्षरस्तथा विभूतिरौषधंपुंसांमुक्तिस्त्रीवश्यकर्मणि

भुनक्ति यत्र भस्माङ्गो मूर्खो वा पण्डितोऽपि वा ।
तत्र भुङ्क्ते महादेवः सपत्नीको वृषध्वजः ॥ १६ ॥

भस्मसञ्छन्नसर्वाङ्गमनुगच्छति यः पुमान् ।
सर्वपातकयुक्तोऽपि पूजितो (पूज्यते) मानवोऽचिरात् ॥ १७ ॥
भस्मसञ्छन्न सर्वाङ्गं यः स्तौति श्रद्धया सह ।
सर्वपातक युक्तोऽपि पूज्यते मानवोऽचिरात् ॥ १८ ॥

त्रिपुण्ड्रधारिणे भिक्षाप्रदानेन हि केवलम् । तेनाऽधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् येन विप्रेण शिरसित्रिपुण्ड्रं भस्मना कृतम् । कीकटेष्वपिदेशेषु यत्रभूतिविभूषणः मानवस्तुवसेन्नित्यंकाशीक्षेत्रसमंहितत् । दुःशील शीलयुक्तोवायोगयुक्तोऽप्यलक्षणः भूतिशासनयुक्तो वा सपूज्यो मम पुत्रवत् । छद्मनापि नरंयो हिभुतिशासनमैश्वरम् सोऽपि या गतिमाप्नोति न तायज्ञशतैरपि । सम्पर्काल्लीलयावापिभयाद्वाधारयेत्तुयः

विधियुक्तो विभूर्ति तु स च पूज्यो यथा ह्यहम् ।
शिवस्य विष्णोर्देवानां ब्रह्मणस्तृप्तिकारणम् ॥ २४ ॥

पार्वत्याश्च महालक्ष्म्या भारत्यास्तृप्तिकारणम् । नदानेन नयज्ञेन नतपोभिः सुदुर्लभः नतीर्थयात्रया पुण्य त्रिपुण्ड्रेण च लभ्यते । दानं यज्ञाश्च धर्माश्चतीर्थयात्राश्च नारद! श्यानंतपस्त्रिपुण्ड्रस्यकलानार्हन्तिषोडशीम् । यथाराजास्वचिह्नाङ्कंस्वजनंमन्यतेसदा

तथा शिवस्त्रिपुण्ड्राङ्कं स्वकीयमिव मन्यते ।
द्विजातिर्वाऽन्यजातिर्वा शुद्धचित्तेन भस्मना ॥ २८ ॥

धारयेद्यस्त्रिपुण्ड्राङ्कं रुद्रस्तेन वशीकृतः । त्यक्तसर्वाश्रमाचारो लुप्तसर्वक्रियोऽपिसः सकृत्तिर्यक्त्रिपुण्ड्राङ्कं धारयेत्सोऽपिमुच्यते । नास्य ज्ञानं परीक्षेतन कुलंनव्रतंतथा त्रिपुण्ड्राङ्कितभालेनपूज्यएवहिनारद !। शिवमन्त्रात्परोमन्त्रोनास्तितुल्यंशिवात्परम् शिवार्चनात्परं पुण्यं नहि तीर्थञ्च भस्मना । रुद्राग्नेर्यत्परं वीर्यं तद्भस्म परिकीर्तितम्

ध्वंसनं सर्वदुःखानां सर्वपापविशोधनम् ।
अन्त्यजो वाऽधमो वापि मूर्खो वा पण्डितोऽपि वा ॥ ३३ ॥

यस्मिन्देशे वसेन्नित्यंभूतिशासनसंयुतः । तस्मिन्सदाशिवः सोमःसर्वभूतगणैर्वृ तः

सर्वतीर्थैश्चसंयुक्तः सान्निध्यं कुरुते सदा ॥ ३४ ॥

एतानि पञ्चशिवमन्त्रपवित्रितानि भस्मानिकामदहनाङ्गविभूषितानि ।
त्रैपुण्ड्रकाणि रचितानि ललाटपट्टे लुम्पन्ति दैवलिखितानि दुरक्षराणि

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामेकादशस्कन्धे नारायणनारदसम्वादे त्रिपुण्ड्रभस्मधारणमाहात्म्यवर्णनंनामत्रयोदशोऽध्यायः ॥ १३

---

# चतुर्दशोऽध्यायः

## विभूतिधारणमाहात्म्यवर्णनम्

नारायण उवाच

भस्मदिग्धशरीराय यो ददातिधनं मुदा । तस्य सर्वाणिपापानिविनश्यन्तिनसंशयः

श्रुतयः स्मृतयः सर्वाः पुराणान्यखिलान्यपि ।
वदन्ति भूतिमाहात्म्यं तत्तस्माद्धारयेद्द्विजः ॥ २ ॥

सितेन भस्मनाकुर्यात्त्रिसन्ध्यं यस्त्रिपुण्ड्रकम् । सर्वपापविनिर्मुक्तःशिवलोकेमहीयते

योगीसर्वाङ्गकं स्नानमापादतलमस्तकम् ।
त्रिसन्ध्यमाचरेन्नित्यमाशु योगमवाप्नुयात् ॥ ४ ॥

भस्मस्नानेन पुरुषः कुलस्योद्धारकोभवेत् । भस्मस्नानंजलस्नानादसंख्येयगुणान्वितम्
सर्वतीर्थेपुयत्पुण्यं सर्वतीर्थेषु यत्फलम् । तत्फलं लभते सर्वं भस्मस्नानान्न संशयः
महापातकयुक्तो वा युक्तो वाऽप्युपपातकैः । भस्मस्नानेनतत्सर्वं दहत्यग्निरिवेन्धनम्
भस्मस्नानात्परं स्नानंपवित्रंनैवविद्यते । एवमुक्तं शिवेनादौ तदा स्नातःस्वयंशिवः
तदा प्रभृति ब्रह्माद्यामुनयश्च शिवार्थिनः । सर्वकर्मसु यत्नेनभस्मस्नानं प्रचक्रिरे ॥
तस्मादेतच्छिरस्नानमाग्नेयं यः समाचरेत् । अनेनैव शरीरेणस रुद्रो न संशयः ॥
येभस्मधारिणं दृष्ट्वापरितृप्ता भवन्ति ते । देवासुरमुनीन्द्रैश्च पूज्या नित्यं न संशयः
भस्मसञ्छन्नसर्वाङ्गंदृष्ट्वोत्तिष्ठतियःपुमान् । तं दृष्ट्वादेवराजोऽपिदण्डवत्प्रणमिष्यति

अभक्ष्यभक्षणं येषां भस्मधारणपूर्वकम् । तेषां तद्भक्ष्यमेव स्यान्मुने!नाऽत्रविचारणा

यः स्नाति भस्मना नित्यं जले स्नात्वा ततः परम् ।

ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथवाऽऽदरात् ॥ १४ ॥

सर्वपापविनिर्मुक्तःसयातिपरमांगतिम् । आग्नेयं भस्मनास्नानं यतीनाञ्चविशिष्यते आर्द्रस्नानाद्वरंभस्मस्नानमार्द्रवधोभ्रुवः । आर्द्रंतु प्रकृतिविद्या प्रकृतिबन्धनं विदुः प्रकृतेस्तु प्रहाणाय भस्मनास्नानमिष्यते । भस्मना सदृशंब्रह्मन्नास्तिलोकत्रयेष्वपि रक्षार्थं मङ्गलार्थं च पवित्रार्थंपुरा सुरैः । भस्मदृष्ट्वा मुने पूर्वं दत्तं देव्यै प्रियेण तु ॥ तस्मादेनच्छिरःस्नानमाग्नेयं यः समाचरेत् । भवपाशविनिर्मुक्तः शिवलोकेमहीयते ज्वररक्षःपिशाचाश्च पूतनाकुष्ठगुल्मकाः । भगन्दराणिसर्वाणिचाशीतिर्वातरोगकाः चतुःषष्टिः पित्तरोगाःश्लेष्माःसतत्रिपञ्चकाः । व्याघ्रचौरभयंचैवाप्यन्येदुष्टग्रहाअपि भस्मस्नानेन नश्यन्ति सिंहेनेव यथा गजाः । शुद्धशीतजलेनैवभस्मनावत्रिपुण्ड्रकम् यो धारयेत्परंब्रह्मसप्राप्नोतिनसंशयः । "भस्मना च त्रिपुण्ड्रञ्चयःकोऽपिधारयेत्परम स ब्रह्मलोकमाप्नोतिमुक्तपापो न संशयः ।" यथाविधिललाटेवे वह्निर्वीर्यप्रधारणात्

नाशयेल्लिखितां यामीं ललाटस्थां लिपिं ध्रुवम् ।

कण्ठोपरिकृतं पापं नाशयेत्तत्प्रधारणात् ॥ २४ ॥

कण्ठे च धारणात्कण्ठभोगादिकृतपातकम् । बाह्वोर्बाहुकृतं पाप वक्षसा मनसाकृतम् नाभ्यां शिश्नकृतं पापं गुदेगुदकृतंहरेत् । पार्श्वयोर्धारणाद्ब्रह्मन्परस्त्र्यालिङ्गनादिकम् तद्भस्मधारणं शस्तं सर्वत्रैव त्रिलिङ्गकम् । ब्रह्मविष्णुमहेशानां त्र्यग्नीनाचधारणम् गुणलोकत्रयाणां च धारणंतेनवैकृतम् । भस्मच्छन्नोद्विजोविद्वान्महापातकसम्भवैः दोषैर्वियुज्यते सद्यो मुच्यते चनसंशयः । भस्मनिष्ठस्यदह्यन्तेदोषाभस्माग्निसङ्गमात्

भस्मस्नानविशुद्धात्मा आत्मनिष्ठ इति स्मृतः ।

भस्मना दिग्धसर्वाङ्गो भस्मदीप्तत्रिपुण्ड्रकः ॥ ३० ॥

भस्मशायी च पुरुषो भस्मनिष्ठ इतिस्मृतः । भूतप्रेतपिशाचाद्यारोगाश्चातीवदुःसहाः भस्मनिष्ठस्यसान्निध्याद्विद्रवन्तिनसंशयः । भासनाद्भसितंप्रोक्तंभस्मकल्मषभक्षणात्

भूतिर्भूतिकरी पुंसा रक्षा रक्षाकरी पुरा। त्रिपुण्ड्रधारणं दृष्ट्वा भूतप्रेतपुरःसराः॥
भीताः प्रकम्पिताः शीघ्रं नश्यन्त्येव न संशयः। स्मरणादेवरुद्रस्ययथापापंप्रणश्यति

अप्यकार्यसहस्राणि कृत्वा यः स्नाति भस्मना।
तत्सर्वं दहते भस्म यथाऽग्निस्तेजसा वनम्॥ ३५॥
कृत्वाऽपि चाऽतुलं पापं मृत्युकालेऽपि यो द्विजः।
भस्मस्नायी भवेत्कश्चित्क्षिप्रं पापैः प्रमुच्यते॥ ३६॥

भस्मस्नानाद्विशुद्धात्माजितक्रोधोजितेन्द्रियः मत्समीपंसमागम्यनसभूयोऽभिवर्तते
वनस्पतिगते सोमे भस्मोद्धूलितविग्रहः। अर्चितं शङ्करं दृष्ट्वा सर्वपापैःप्रमुच्यते॥

आयुष्कामोऽथवा विद्वान्भूतिकामोऽथवा नरः।
नित्यं वै धारयेद् भस्म मोक्षकामी च वै द्विजः॥ ३६॥

त्रिपुण्ड्रं परमं पुण्यं ब्रह्मविष्णुशिवात्मकम्। येघोराराक्षसाःप्रेतायेचान्येक्षुद्रजन्तवः
त्रिपुण्ड्रधारणं दृष्ट्वा पलायन्ते न संशयः। कृत्वा शौचादिकं कर्मस्नात्वातुविमलेजले
भस्मनोद्धूलनं कार्यमापादलमस्तकम्। केवलं वारुणं स्नानं देहे बाह्यमलापहम्॥
विभूतिस्नानमनघंबाह्यान्तरमलापहम्। त्यक्त्वाऽपिवारुणंस्नानंतत्परःस्यान्नसंशयः
कृतमप्यकृतं सत्यं भस्मस्नानंविना मुने!। भस्मस्नानंश्रुतिप्रोक्तमाग्नेयंस्नानमुच्यते
अन्तर्बहिश्च संशुद्धं शिवपूजाफलं लभेत्। यद्बाह्यमलमात्रस्य नाशकंस्नानमस्तितत्

तन्नाशयति तीव्रेण प्राणिबाह्यान्तरं मलम्।
कृत्वाऽपि कोटिशो नित्यं वारुणं स्नानमादरात्॥ ४६॥

न भवत्येव पूतात्मा भस्मस्नानंविनामुने!। यद्भस्मस्नानमाहात्म्यंतद्वेदोवेदतत्त्वतः
यद्वा वेद महादेवः सर्वदेवशिखामणिः। भस्मस्नानमकृत्वैव यः कुर्यात्कर्म वैदिकम्
सतत्कर्मकलार्धार्धमपिनाप्नोतिवस्तुतः। यःकरिष्यतियत्नेनभस्मस्नानंयथविधि
स एवैकः सर्वकर्मस्वधिकारी श्रुतिश्रुतः। पावनं पावनानां चभस्मस्नानंश्रुतिश्रुतम्
न करिष्यतियोमोहात्समहापातकीभवेत्। अनन्तैर्वारुणैःस्नानैर्यत्पुण्यंप्राप्यतेद्विजः
ततोऽनन्तगुणं पुण्यं भस्मस्नानादवाप्यते। कालत्रयेऽपि कर्तव्यंभस्मस्नानंप्रयत्नतः

भस्मस्नानंस्मृतंश्रौतंतत्त्यागीपतितोभवेत् । मूत्राद्युत्सर्जनान्तेतुभस्मस्नानंप्रयत्नतः

कर्तव्यमन्यथा पूता न भविष्यन्ति मानवाः ।

विधिवत्कृतशौचोऽपि भस्मस्नानं विना द्विजः ॥ ५४ ॥

न भविष्यति पूतात्मानाधिकार्येऽपि कर्मणि । अपानवायुनिर्यातेजृम्भणेस्कन्दनेक्षुते

श्लेष्मोद्गारेऽपि कर्तव्यं भस्मस्नानं प्रयत्नतः ।

श्रीभस्मस्नानमाहात्म्यस्यैकदेशोऽत्र वर्णितः ॥ ५६ ॥

पुनश्च सम्प्रवक्ष्यामि भस्मस्नानोत्थितंफलम् । सावधानेनमनसाश्रोतव्यंमुनिपुङ्गव!

इतिश्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामेकादशस्कन्धे

विभूतिधारणमाहात्म्यवर्णनंनाम चतुर्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः

### त्रिपुण्ड्रोर्ध्वपुण्ड्रधारणविधिवर्णनम्

श्रीनारायण उवाच

अग्निरित्यादिभिर्मन्त्रैर्भस्मसंशोध्यसादरम् । धारणीयंललाटादौत्रिपुण्ड्रंकेवलंद्विजैः

ब्रह्मक्षत्रियवैश्याश्चएतेसर्वेद्विजाःस्मृताः । तस्माद्द्विजैःप्रयत्नेनत्रिपुण्ड्रंधार्यमन्वहम्

यस्योपनयनं ब्रह्मन् सएवद्विजउच्यते । तस्माच्छ्रौतद्विजैःकार्यंत्रिपुण्ड्रस्यचधारणम्

विभूतिधारणं त्यक्त्वा यः सत्कर्मसमाचरेत् । तत्कृतं चाऽकृतप्रायं भवत्येवनसंशयः

न गायत्र्युपदेशोऽपि भस्मनो धारणं विना । ततो धृत्वैवभस्माङ्गेगायत्रीजपमाचरेत

गायत्रीं मूलमेवाहुर्ब्राह्मण्ये मुनिपुङ्गवः । सा भस्मधारणाभावे न केनाप्युपदिश्यते ॥

न तावदधिकारोऽस्ति गायत्रीग्रहणेमुने ! । यावन्न भस्मभालादौधृतमग्निसमुद्भवम्

भस्महीनललाटत्वं न ब्राह्मण्यानुमापकम् । एवमेव मया ब्रह्मन्हेतुरुक्तः सुपुण्यदः ॥८

मन्त्रपूतं सितं भस्म ललाटे परिवर्तते । स एव ब्राह्मणो विद्वान्सत्यंसत्यंमयोच्यते

यस्यास्तिसहजाप्रीतिर्मणिवद्भस्मसङ्ग्रहे । सएवब्राह्मणोब्रह्मन्सत्यंसत्यंमयोच्यते
नयस्यसहजा प्रीतिर्मणिवद्भस्मसङ्ग्रहे । स चाण्डालइतिज्ञेयोजन्मजन्मान्तरेध्रुवम्

न यस्य सहजा प्रीतिस्त्रिपुण्ड्रोद्धूलनादिषु ।
स चाण्डाल इति ज्ञेयः सत्यं सत्यं मयोच्यते ॥ १२ ॥

ये भस्मधारणं त्यक्त्वा भुञ्जन्ते च फलादिकम् । ते सर्वेनरकंघोरंप्राप्नुवन्तिनसंशयः
"विभूतिधारणं त्यक्त्वा यः शिवं पूजयिष्यति । स दुर्भगः शिवद्वेष्टासद्वेषोनरकंप्रदः
सर्वकर्मबहिर्भूतोभस्मधारणवर्जितः ।" विभूतिधारणांत्यक्त्वायःकुर्वन्हेमतुलामपि

न तत्फलमवाप्नोति पतितो हि भवेद्धि सः ॥ १४ ॥

यथोपवीतरहितैःसन्ध्या न क्रियते द्विजैः । तथा सन्ध्यानकर्तव्याविभूतिरहितैरपि

गतोपवीतैः सन्ध्यायां कार्यः प्रतिनिधिः क्वचित् ।
जपादिकं तु सावित्र्यास्तथैवोपोषणादिकम् ॥ १६ ॥
विभूतिधारणे त्वन्यो नाऽस्ति प्रतिनिधिः क्वचित् ।
विभूतिधारणं त्यक्त्वा यदि सन्ध्यां करोति यः ॥ १७ ॥

प्रत्यवैत्यैवयेनासौनाऽधिकारीतदाद्विजः । यथाश्रुत्वान्त्यजोवेदान्प्रत्यवैतितथाद्विजः
प्रत्यवैति न सन्देहःसन्ध्याकृद्भस्मवर्जितः । सम्पादनीयंयत्नेनश्रौतंभस्मसदाद्विजैः
स्मार्तं वा तदभावेतुलौकिकंवासमाहितैः । यादृशंतादृशंवाऽस्तुपवित्रंभस्मसन्ततम्
धारणीयं प्रयत्नेन द्विजैःसन्ध्यादिकर्मसु । न सम्विशन्तिपापानिभस्मनिष्ठेततःसदा
कर्तव्यमपि यत्नेन ब्राह्मणैर्भस्मधारणम् । मध्याङ्गुलित्रयेणैव स्वदक्षिणकरस्य तु ॥
षडङ्गुलायतं मानमपि चाधिकमानकम् । नेत्रयुग्मप्रमाणेन भाले दीप्तं त्रिपुण्ड्रकम् ॥
कदाचिद्भस्मनाकुर्यात्सरुद्रोनात्रसंशयः । अकारोऽनामिकाप्रोक्त उकारोमध्यमाङ्गुलिः

मकारस्तर्जनी तस्मात्त्रिपुण्ड्रं त्रिगुणात्मकम् ।
त्रिपुण्ड्रमध्यमातर्जन्यनामाभिरनुलोमतः ॥ २५ ॥

अत्र ते कथयाम्येनमितिहासं पुरातनम् । कदाचिदथदुर्वासाः पितृलोकंगताऽभवत्
भस्मसन्दिग्धसर्वाङ्गो रुद्राक्षाभरणान्वितः । शिवशङ्करसर्वात्मञ्श्रीमातर्जगदम्बिके

नामानीति गृणन्नुच्चैस्तापसानां शिखामणिः ।
कव्यवाडादयस्ते तु प्रत्युत्थानाऽभिवादनैः ॥ २८ ॥

आसनाद्युपचारैश्च सम्मानं बहु चक्रिरे । नानाकथाभिरन्योन्यसम्भाषां चक्रिरे तदा

तस्मिंस्तु समये कुम्भीपाकस्थानां तु पापिनाम् ।
घोरः समभवच्छब्दो हा हताः स्मेति वादिनाम् ॥ ३० ॥
मृताः स्मेति वदन्त्येके दग्धाः स्मेति परे जगुः ।
छिन्नाः स्मेति विभिन्नाः स्मेत्येवं रोदनकारिणः ॥ ३१ ॥
श्रुत्वा तु करुणं शब्दं दुःखितो मुनिराड् हृदि ।
पप्रच्छ पितृनाथांस्तान्केषां शब्दोऽयमित्यपि ॥ ३२ ॥

तेसमूचुर्मुनेऽत्रैव पुरी संयमनी परा । वर्तते यमराडत्र पापिनां भोगदायकः ॥३३॥ नानादूतैः कालरूपैःकृष्णवर्णैर्भयङ्करैः । सहितोऽत्रैव तत्पुर्या नायको विद्यतेऽनघ ! तत्र कुडान्यनेकानि पापिनां भोगदानिच । षडशीतिर्घोररूपैर्दूतैः परिवृतानि च ॥ तत्र मुख्यतमं कुण्डं कुम्भीपाकाभिधंमहत् । वर्तते तद्गतानाञ्च यातनानां तु वर्णनम् कर्तुं न शक्यते केश्चिदपिवर्षशतैरपि । ये शिवद्रोहिणःसन्ति तथादेवीविनिन्दकाः ये विष्णुद्रोहिणः सन्तिपतन्त्यत्रैवतेमुने !। येवेदनिन्दकाःसन्तिसूर्यस्यचगणेशितुः ब्राह्मणानां द्रोहिणो ये पतन्त्यत्रैवतेमुने !। कामाचाराश्चये सन्ति तप्तमुद्राङ्किताश्चये त्रिशूलधारिणो ये च पतन्त्यत्रैव ते मुने !। मातृपितृगुरुज्येष्ठपुराणस्मृतिनिन्दकाः ये धर्मदूषकाः सन्ति पतन्त्यत्रैव ते मुने !। तेषामयं महाघोरः शब्दः श्रवणदारुणः ॥ श्रूयतेऽस्माभिरनिशं वैराग्यंयच्छ्रुतेर्भवेत् । इतितेषांवचःश्रुत्वामुनिराट् तद्दिदृक्षया उत्थायचलितस्तूर्णंययौकुण्डसमीपतः । अवाङ्मुखोददर्शाऽधस्तस्मिन्नेवक्षणेमुने

तत्रत्यानां पापिनां तु स्वर्गाधिकमभूत्सुखम् ।
हसन्ति केचिद्गायन्ति नृत्यन्ति च तथा परे ॥ ४४ ॥

परस्परं रमन्ते तेऽप्युन्मत्ताः सुखवर्धनात् । मृदङ्गमुरजावीणाढक्कादुन्दुभिनिस्वनाः समुद्भूतास्तु मधुराः पञ्चमस्वरभूषिताः । वसन्तवल्लीपुष्पाणां सुगन्धमरुतो ववुः

मुनिस्तु चकितो दृष्ट्वा यमदूताश्च विस्मिताः । शीघ्रं ते कथयामासुर्धर्मराजाय वेदिने
महाराजमहाश्चर्यमधुनैवाभवद्विभो ॥ स्वर्गादप्यधिकंसौख्यंकुम्भीपाकस्थपापिनाम्
निमित्तं नैवजानीमःकस्मादिदमभूद्विभो ॥ चकिताःस्मवयंसर्वेप्राप्तादेवत्वदन्तिकम्
निशम्य दूतवाणींतां धर्मराट् शीघ्रमुत्थितः । महामाहिषमारूढो ययौते यत्रपापिनः
तां वार्तां प्रेषयामास दूतद्वाराऽमरावतीम् । श्रुत्वातांदेवराजोऽपिप्राप्तोदेवगणैः सह

ब्रह्मलोकात्पद्मजोऽपि वैकुण्ठाद्विष्टरश्रवाः ।
तत्तल्लोकाच्च दिक्पालाः समाजग्मुर्गणैः सह ॥ ५२ ॥
परिवार्य स्थिता सर्वे कुम्भीपाकमितस्ततः ।
अपश्यंस्तद्गताञ्जीवान्स्वर्गाधिकसुखान्वितान् ॥ ५३ ॥

चकिताएव ते सर्वेनविदुस्तस्यकारणम् । अहो पापस्यभोगार्थंकुण्डमेतद्विनिर्मितम्
तत्रसौख्यं यदा जातंतदा पापात्तुकिंभयम् । उच्छिन्ना वेदमर्यादापरमेशकृताकथम्
भगवान्स्वस्य सङ्कल्पं वितथं कृतवान्कथम् । आश्चर्यमेतदाश्चर्यमेतदित्येवभाषिणः

तटस्था अभवन्सर्वे न विदुस्तत्र कारणम् ।
एतस्मिन्नन्तरे शौरिः सम्मन्त्र्य विबुधादिभिः ॥ ५७ ॥

ययौ कैश्चित्सुरगणैः सहितःशङ्करालयम् । पार्वत्यासहितं देवं कोटिकन्दर्पसुन्दरम्
रमणीयतमाङ्गं तं लावण्यखनिमद्भुतम् । सदा षोडशवर्षीयं नानाऽलङ्कारभूषितम्
नानागणैः परिवृतं लालयन्तं परां शिवाम् । ददर्श चन्द्रमौलिं स चतुर्वेदं ननाम ह
वृत्तान्तं कथयामास चमत्कृतमतिस्फुटम् । एतस्य कारणंदेव न जानीमः कश्चन
वद तत्कारणं देव सर्वज्ञोऽसि यतःप्रभो । विष्णुवाक्यंतदा श्रुत्वा प्रसन्नमुखपङ्कजः
उवाच मधुरं वाक्यं मेघगम्भीरया गिरा । शृणु विष्णोतन्निमित्तं नाश्चर्यं त्वत्रविद्यते
भस्मनो महिमैवायंभस्मनाकिंभवेन्नहि । कुम्भीपाकं गतोद्रष्टुं दुर्वासाः शैवसंमतः
अवाङ्मुखो ददर्शाऽधस्तदावायुवशाद्धरे ॥ भालभस्मकणास्तत्रपतिता दैवयोगतः
तेन जातमिदंसर्वंभस्मनोमहिमात्वयम् । इतः परं तु तत्तीर्थं पितृलोकनिवासिनाम्

भविष्यति न सन्देहो यत्र स्नात्वा सुखी भवेत् ।

पितृतार्थन्तु तन्नाम्नाऽप्यत ऊर्ध्वम्भविष्यति ॥ ६७ ॥

मल्लिङ्गस्थापनं तत्र कार्यं देव्याश्चसत्तम । पूजयिष्यन्तिते तत्र पितृलोकनिवासिनः

त्रैलोक्ये यानि तीर्थानि तत्र श्रेष्ठमिदम्भवेत् ।

पित्रीश्वरीपूजया तु त्रैलोक्यं पूजितं भवेत् ॥ ६९ ॥

नारायण उवाच

इति देव वचः श्रुत्वा देवं मूर्ध्नाप्रणम्य च । तदनुज्ञांसमादाय ययौ देवान्तिकंहरिः

तत्सर्वं कथयामासकारणंशङ्करोदितम् । साधु साध्वितितेप्रोचुरमरा मौलिचालनैः

प्रशंसुर्भस्ममाहात्म्यं हरिब्रह्मादयः सुराः । पितरश्चैव सन्तुष्टास्तीर्थलाभात्परन्तप

तत्तीर्थतीरेलिङ्गं च देव्यामूर्तिं यथाविधि । स्थापयामासुरमराः पूजयामासुरन्वहम्

तत्रयेप्राणिनोऽभूवन्पापभोगार्थमास्थिताः । तेविमानंसमारुह्य गताःकैलासमण्डलम्

नाम्ना भद्रगणास्तेतु वसन्त्यद्यापितत्रहि । पुनश्च दूरदेशे तु कुम्भीपाको विनिर्मितः

निरुद्धं शैवगमनंदेवैस्तत्र तु तद्दिनात् । इति ते सर्वमाख्यातं भस्ममाहात्म्यमुत्तमम्

नाऽतः परतरं किञ्चिदधिकं विद्यते मुने !।

ऊर्ध्वपुण्ड्रविधिं चैवाऽप्यधिकारीविभेदतः ॥ ७७ ॥

प्रवक्ष्ये मुनिशार्दूलवैष्णवागमलोकनात् । ऊर्ध्वपुण्ड्रप्रमाणानिदिव्यान्यङ्गुलिभेदतः

वर्णाभिमन्त्रदेवांश्च प्रवक्ष्यामि फलानिच । पर्वताग्रे नदीतीरे शिवक्षेत्रे विशेषतः

सिन्धुतीरे च वल्मीकेतुलसीमूलमाश्रिते । मृदएतास्तुसंग्राह्या वर्जयेदन्यमृत्तिकाः

श्यामं शान्तिकरं प्रोक्तं रक्तंवश्यकरम्भवेत् । श्रीकरं पीतमित्याहुर्धर्मदं श्वेतमुच्यते

अङ्गुष्ठः पुष्टिदःप्रोक्तोमध्यमायुष्करीभवेत् । अनामिकाऽन्नदानित्यमुक्तिदाचप्रदेशिनी

एतैरङ्गुलिभेदैस्तु कारयेन्न नखैः स्पृशेत् । वर्तिदीपाकृतिं वेणुपत्राकृतिं तथा ॥

पद्मस्य मुकुलाकारं तथा कुर्यात्प्रयत्नतः । मत्स्यकूर्माकृतिंवाऽपिशङ्खाकारंततःपरम्

दशाङ्गुलिप्रमाणं तु उत्तमोत्तममुच्यते । नवाङ्गुलं मध्यमं स्यादष्टाङ्गुलमतः परम्

सप्तषट्पञ्चभिः पुण्ड्रं मध्यमं त्रिविधं स्मृतम् ।

चतुस्त्रिद्व्यङ्गुलैः पुण्ड्रं कनिष्ठं त्रिविधं भवेत् ॥ ८६ ॥

ललाटे केशवं विद्यान्नारायणमथोदरे । माधवं हृदि विन्यस्य गोविन्दं कण्ठकूपके
उदरे दक्षिणे पार्श्वे विष्णुरित्यभिधीयते । तत्पार्श्वबाहुमध्ये मधुसूदनमेव च ॥
त्रिविक्रमंकर्णदेशे वामकुक्षौतु तु वामनम् । श्रीधरं बाहुके वामे हृषीकेशं तुकर्णके
पृष्ठे च पद्मनाभं तु ककुद्दामोदरं स्मरेत् । द्वादशैतानि नामानि वासुदेवेति मूर्धनि
पूजाकालेचहोमेचसायं प्रातःसमाहितः । नामान्युच्चार्य विधिना धारयेदूर्ध्वपुण्ड्रकम्
अशुचिर्वाऽप्यनाचारोमनसा पापमाचरेत् । शुचिरेवभवेन्नित्यंमूर्ध्निपुण्ड्राङ्कितोनरः
ऊर्ध्वपुण्ड्रधरो मर्त्योम्रियतेयत्रकुत्रचित् । श्वपाकोऽपिविमानस्थोममलोकेमहीयते

एकान्तिनो महाभागा मत्स्वरूपविदोऽमलाः ।
सान्तरालान्प्रकुर्वन्ति पुण्ड्रान्विष्णुपदाकृतीन् ॥ ६४ ॥

परमैकान्तिनोऽप्येवंमत्पादैकपरायणाः । हरिद्राचूर्णसंयुक्ताञ्छूलाकारांस्तुवाऽमलान्
अन्ये तु वैष्णवाः पुण्ड्रानच्छिद्रानपि भक्तितः । प्रकुर्वीरन्दीपपद्मवेणुपत्रोपमाकृतीन्
अच्छिद्रानपि सच्छिद्रान्कुर्युःकेवलवैष्णवाः । अच्छिद्रकरणेतेषांप्रत्यवायोनविद्यते
एकान्तिनां प्रपन्नानां परमैकान्तिनामपि । अच्छिद्रपुण्ड्राकरणे प्रत्यवायोमहान्भवेत्

ऊर्ध्वपुण्ड्रं तु यःकुर्याद्दण्डाकारं तु शोभनम् ।
मध्ये च्छिद्रं वैष्णवाश्च नमोऽन्तैः केशवादिभिः ॥ ६६ ॥

विमलान्यूर्ध्वपुण्ड्राणि सान्तरालानियोनरः । करोतिविपुलंतत्रमन्दिरंमेकरोतिसः
ऊर्ध्वपुण्ड्रस्य मध्ये तुविशालेसुमनोहरे । लक्ष्म्यासाकंसहासीनोरमतेविष्णुरव्ययः
निरन्तरालंयः कुर्यादूर्ध्वपुण्ड्रं द्विजाधमः । सहि तत्रस्थितंविष्णुं श्रियञ्चैवव्यपोहति
अच्छिद्रमूर्ध्वपुण्ड्रं तु यः करोति विमूढधीः । सपर्यायेणतानेतिनरकानेकविंशतिम्

ऋजूनि स्फुटपार्श्वानि सान्तरालानि विन्यसेत् ।
ऊर्ध्वपुण्ड्राणि दण्डाब्जदीपमत्स्यनिभानि च ॥ १०४ ॥

शिखोपवीतवद्धार्यमूर्ध्वपुण्ड्रंद्विजेन च । विनाकृताश्चेद्विफलाः क्रियाः सर्वा महामुने
तस्मात्सर्वेषु कार्येषु कार्यं विप्रस्य धीमतः । ऊर्ध्वपुण्ड्रंत्रिशूलञ्च वर्तुलञ्चतुरस्रकम्
अर्धचन्द्रादिकं लिङ्गं वेदनिष्ठो न धारयेत् । जन्मनालब्धजातिस्तुवेदपन्थानमाश्रितः

पुण्ड्रान्तरं भ्रमाद्वाऽपि ललाटे नैव धारयेत् ।
ख्यातिकान्त्यादिसिद्ध्यर्थं चाऽपि विष्णवागमादिषु ॥ १०८ ॥
स्थितंपुण्ड्रान्तरंनैवधारयेद्वैदिकोजनः । तिर्यक्त्रिपुण्ड्रंसन्त्यज्यश्रौतंकथमपिभ्रमात्
ललाटेभस्मनातिर्यक्त्रिपुण्ड्रस्यचधारणम् । विनापुण्ड्रान्तरंमोहाद्धारयन्नारकीभवेत्
वेदमार्गैकनिष्ठस्तु मोहेनाप्यङ्कितो यदि । पतत्येव न सन्देहस्तथा पुण्ड्रान्तरादपि
नाङ्कनं विग्रहे कुर्याद्वेदमार्गं समाश्रितः । श्रौतधर्मैकनिष्ठानां लिङ्गं तु श्रौतमेव हि ॥
अश्रौतधर्मनिष्ठानामश्रौतंलिङ्गमीरितम् । देवतावेदसिद्धायास्तासांलिङ्गन्तुवैदिकम्
अश्रौततन्त्रनिष्ठायास्तासामश्रौतमेव हि । वेदसिद्धोमहादेवः साक्षात्संसारमोचकः
भक्तानामुपकाराय श्रौतंलिङ्गं दधाति च । वेदसिद्धस्य विष्णोश्चश्रौतंलिङ्गंनचेतरत्
प्रादुर्भावविशेषाणामपि तस्य तदेव हि । श्रौतंलिङ्गंतुविज्ञेयंत्रिपुण्ड्रोद्धूलनादिकम्
अश्रौतमूर्ध्वपुण्ड्रादिनैव तिर्यक्त्रिपुण्ड्रकम् । वेदमार्गैकनिष्ठानांवेदोक्तेनैव वर्त्मना
ललाटे भस्मना तिर्यक्त्रिपुण्ड्रंधार्यमेव हि । यस्तु नारायणं देवं प्रपन्नः परमं पदम्
धारयेत्सर्वदा शूलं ललाटे गन्धवारिणा ॥ ११६ ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामेकादशस्कन्धे नारायणनारदसम्वादे त्रिपुण्ड्रोर्ध्वपुण्ड्रधारणविधिवर्णनंनामपञ्चदशोऽध्यायः ॥ १५

---

## षोडशोऽध्यायः

### सन्ध्योपासननिरूपणम्

**नारायण उवाच**

अथाऽतः श्रूयताम्पुण्यं सन्ध्योपासनमुत्तमम् ।
भस्मधारणमाहात्म्यं कथितञ्चैव विस्तरात् ॥ १ ॥
प्रातः सन्ध्याविधानञ्च कथयिष्यामि तेऽनघ !।

प्रातः सन्ध्यां सनक्षत्रां मध्याह्ने मध्यभास्कराम् ॥२॥

ससूर्यां पश्चिमांसन्ध्यानिस्त्रःसन्ध्याउपासते । तद्भेदानपिवक्ष्यामिशृणुदेवर्षिसत्तम!
उत्तमा तारकोपेता मध्यमा लुप्ततारका । अधमा सूर्यसहिता प्रातःसन्ध्यात्रिधामता
उत्तमा सूर्यसहिता मध्यमाऽस्तमिते रवौ । अधमातारकोपेतासायंसन्ध्यात्रिधामता

विप्रोवृक्षो मूलकान्यत्र सन्ध्या वेदः शाखा धर्मकर्माणि पत्रम् ।

तस्मान्मूलं यत्नतो रक्षणीयं छिन्ने मूले नैव वृक्षो न शाखा ॥ ६ ॥

सन्ध्या येन नविज्ञातासन्ध्यायेनानुपासिता । जीवमानोभवेच्छूद्रोमृतःश्वाचैवजायते
तस्मान्नित्यं प्रकर्तव्यं सन्ध्योपासनमुत्तमम् । तदभावेऽन्यकर्मादावधिकारीभवेन्नहि
उदयास्तमयादूर्ध्वंयावत्स्याद्घटिकात्रयम् ।तावत्सन्ध्यामुपासीतप्रायश्चित्तंततःपरम्
कालातिक्रमणेजातेचतुर्थार्घ्यंप्रदापयेत् । अथवाऽष्टशतंदेवींजप्त्वाऽऽदौतांसमाचरेत्

*यस्मिन्काले तु यत्कर्म तत्कालाधीश्वरीश्च ताम् ।*

सन्ध्यामुपास्य पश्चात्तु तत्कालीनं समाचरेत् ॥ ११ ॥

गृहे साधरणा प्रोक्ता गोष्ठे वै मध्यमा भवेत् । नदीतीरे चोत्तमास्याद्देवीगेहेतदुत्तमा
यतो देव्याउपासेयततोदेव्यास्तुसन्निधौ । सन्ध्यात्रयं प्रकर्तव्यंतदानन्त्यायकल्पते
एतस्या अपरं दैवं ब्राह्मणानां नविद्यते । न विष्णुपासना नित्यानशिवोपासनातथा
यथा भवेन्महादेव्या गायत्र्याःश्रुतिचोदिता । सर्ववेदसारभूतागायत्र्यास्तुसमर्चना

ब्रह्मादयोऽपि सन्ध्यायां ता ध्यायन्ति जपन्ति च ।

वेदा जपन्ति तां नित्यं वेदोपास्या ततः स्मृता ॥ १६ ॥

तस्मात्सर्वे द्विजाःशाक्तानशैवानचवैष्णवाः । आदिशक्तिमुपासन्तेगायत्रीवेदमातरम्
आचान्तः प्राणमायम्य केशवादिकनामभिः । केशवश्च तथा नारायणो माधव एव च
गोविन्दो विष्णुरेवाऽथ मधुसूदनएव च । त्रिविक्रमो वामनश्चश्रीधरोऽपि ततःपरम्
हृषीकेशः पद्मनाभो दामोदर अतः परम् । सङ्कर्षणो वासुदेवः प्रद्युम्नोऽप्यनिरुद्धकः

पुरुषोत्तमाधोक्षजौ च नारसिंहोऽच्युतस्तथा ।

जनार्दन उपेन्द्रश्च हरिः कृष्णोऽन्तिमस्तथा ॥ २१ ॥

ॐकारपूर्वकं नाम चतुर्विंशतिसङ्ख्यया ।

स्वाहाऽन्तैः प्राशयेद्वारि नमोऽन्तैः स्पर्शयेत्तथा ॥ २२ ॥

केशवादित्रिभिः पीत्वा द्वाभ्यां प्रक्षालयेत्करौ ।

मुखं प्रक्षालयेद् द्वाभ्यां द्वाभ्यामुन्मार्जनं तथा ॥ २३ ॥

एकेनपाणिसम्प्रोक्ष्यपादावपिशिरोऽपिच । सङ्कर्षणादिदेवानांद्वादशाङ्गानिसंस्पृशेत्
दक्षिणेनोदकं पीत्वा वामेन संस्पृशेद्बुधः । तावन्न शुध्यतेतोयंयावद्वामेननस्पृशेत्
गोकर्णाकृतिहस्तेन माषमात्रं जलंपिबेत् । ततोन्यूनाधिकंपीत्वासुरापार्यीभवेद्द्विजः
संहताङ्गुलिना तोयं पाणिना दक्षिणेनतु । मुक्ताङ्गुष्ठकनिष्ठाभ्यांशेषेणाऽऽचमनंविदुः
प्राणायामं ततः कृत्वा प्रणवस्मृतिपूर्वकम् । गायत्रींशिरसा सार्धंतुरीयपदसंयुताम्
दक्षिणे रेचयेद्वायुं वामेन पूरितोदरम् । कुम्भेनधारयेन्नित्यं प्राणायामं विदुर्बुधाः
पीडयेद्दक्षिणानाडीमङ्गुष्ठेनतथोत्तराम् । कनिष्ठानामिकाभ्यां तु मध्यमांतर्जनींत्यजेत्
रेचकः पूरकश्चैव प्राणायामोऽथ कुम्भकः । प्रोच्यते सर्वशास्त्रेषु योगिभिर्यतमानसैः
रेचकः सृजते वायुं पूरकः पूरयेत्तुतम् । साम्येनसंस्थितिर्यत्तत्कुम्भकःपरिकीर्तितः
नीलोत्पलदलश्यामं नाभिमध्ये प्रतिष्ठितम् । चतुर्भुजंमहात्मानं पूरके चिन्तयेद्धरिम्
कुम्भके तु हृदि स्थानेध्यायेत्तुकमलासनम । प्रजापतिं जगन्नाथं चतुर्वक्त्रंपितामहम्
रेचके शङ्करं ध्यायेल्ललाटस्थं महेश्वरम् । शुद्धस्फटिकसङ्काशं निर्मलं पापनाशनम
पूरके विष्णुसायुज्यं कुम्भकेब्रह्मणोगतिम् । रेचकेन तृतीयं तु प्राप्नुयादीश्वरं परम्
पौराणाचमनाद्यश्च प्रोक्तं देवर्षिसत्तम !। श्रौतमाचमनाद्यश्च शृणु पापापहं मुने !॥३७
प्रणवं पूर्वमुच्चार्य गायत्रीं तु तदित्यृचम् । पादादौव्याहृतीस्तिस्रःश्रौताचमनमुच्यते
गायत्रीं शिरसा सार्धं जपेद्व्याहृतिपूर्विकाम् । प्रतिप्रणवसंयुक्तांत्रिरयं प्राणसंयमः
"सलक्षणं तु प्राणानामायामं कीर्त्यतेऽधुना । नानापापैकशमनं महापुण्यफलप्रदम्"
पञ्चाङ्गुलीभिर्नासाग्रंपीडयेत्प्रणवेन तु । सर्वपापहरा मुद्रा वानप्रस्थगृहस्थयोः ॥४०॥

कनिष्ठाऽनामिकाऽङ्गुष्ठैर्यतेश्च ब्रह्मचारिणः ।

आपोहिष्ठेति तिसृभिः प्रोक्षणं स्यात्कुशोदकैः ॥ ४१ ॥

ऋगन्ते मार्जनं कुर्यात्पादान्ते वा समाहितः । नवप्रणवयुक्तेन आपोहिष्ठेत्यनेन तु ॥
नश्येदघं मार्जने न सम्वत्सरसमुद्भवम् । तत आचमनं कृत्वा सूर्यश्चेतिपिबेदपः ॥४३
अन्तःकरणसम्भिन्नं पापं तस्य विनश्यति । प्रणवेनव्याहृतिभिर्गायत्र्याप्रणवाद्यया
आपोहिष्ठेति सूक्तेन मार्जनं चैव कारयेत् । उद्धृत्य दक्षिणेहस्तेजलंगोकर्णवत्कृते
नीत्वा तं नासिकाग्रं तु वामकुक्षौ स्मरेदघम् । पुरुषं कृष्णवर्णञ्च ऋतञ्चेतिपठेत्ततः
द्रुपदाम्वा ऋचं पश्चाद्दक्षनासापुटेन च । श्वासमार्गेण त पापमानयेत्करवारिणि ॥४७
नाऽवलोक्यैवतद्वारि वामभागेऽश्मनिक्षिपेत् । निष्पापंतुशरीरंमेसञ्जातमितिभावयेत्
उत्थायतु ततः पादौद्वौमासौसन्नियोजयेत् । जलाञ्जलिंगृहीत्वातुतर्जन्यङ्गुष्ठवर्जितम्

वीक्ष्य भानुं क्षिपेद्वारि गायत्र्या चाऽभिमन्त्रितम् ।

त्रिवारं मुनिशार्दूल विधिरेषोऽर्घ्यमोचने ॥ ५० ॥

ततःप्रदक्षिणांकुर्यादसावादित्यमन्त्रतः । मध्याह्नेसकृदेवस्यात्सन्ध्ययोस्तुत्रिवारतः
ईषन्नम्र प्रभाते तु मध्याह्ने दण्डवत्स्थितः । आसे चोपविष्टस्तु द्विजः सायंक्षिपेदपः
उदकं प्रक्षिपेद्यस्मात्तत्कारणमतः शृणु । त्रिंशत्कोट्योमहावीरा मन्देहानामराक्षसाः
कृतघ्ना दारुणा घोराः सूर्यमिच्छन्तिखादितुम् । ततोदेवगणाःसर्वेऋषयश्चतपोधनाः
उपासते महासन्ध्यां प्रक्षिपन्त्युदकाञ्जलीन् । दह्यन्ते तेनदैत्यास्तेवज्रीभूतेनवारिणा

एतस्मात्कारणाद्विप्राः सन्ध्यां नित्यमुपासते ।

महापुण्यस्य जननं सन्ध्योपासनमीरितम् ॥ ५६ ॥

अर्घ्याङ्गभूतमन्त्रोऽयं प्रोच्यते शृणुनारद ! । यदुच्चारणमात्रेण साङ्गंसन्ध्याफलंभवेत्

सोहमर्कोऽस्म्यहं ज्योतिरात्मा ज्योतिरहं शिवः ।

आत्मज्योतिरहं शुक्रः सर्वज्योती रसोऽस्म्यहम् ॥ ५८ ॥

आगच्छ वरदे! देवि! गायत्रि! ब्रह्मरूपिणि ! । जपानुष्ठानसिद्ध्यर्थप्रविश्यहृदयं मम

उत्तिष्ठ देवि गन्तव्यं पुनरागमनाय च ॥ ६० ॥

अर्घ्येषु देवि! गन्तव्यं प्रविश्य हृदयं मम । ततःशुद्धः स्थलेनैजमासनं स्थापयेद्बुधः

तत्राऽऽरुह्य जपेत्पश्चाद्गायत्रीं वेदमातरम् ॥ ६१ ॥

अत्रैव खेचरीमुद्रा प्राणायामोत्तरंमुने !। प्रातः सन्ध्याविधाने च कीर्तिता मुनिपुङ्गव!
तन्नामार्थं प्रवक्ष्यामि सादरं शृणु नारद !। चित्तं चरतिखेयस्माज्जिह्वाचरतिखे गता
भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी। न चाऽऽसनंसिद्धसमं नकुम्भसदृशोऽनिलः
न खेचरीसमा मुद्रा सत्यं सत्यं च नारद !। घण्टावत्प्रणवोच्चाद्वायुं निर्जित्ययत्नतः॥
स्थिरासने स्थिरो भूत्वा निरहङ्कारनिर्ममः। लक्षणं नारद मुने! शृणुसिद्धासनस्यच

योनिस्थानकमङ्घ्रिमूलघटितं कृत्वा दृढं विन्यसे-
न्मेढ्रे पादमथैकमेव हृदयं कृत्वा समं विग्रहम।
स्थाणुः संयमितेन्द्रियोऽचलदृशा पश्यन्भ्रुवोरन्तरं
तिष्ठत्येतदतीव योगिसुखदं सिद्धासनं प्रोच्यते॥ ६७॥

आयातु वरदादेवी अक्षरं ब्रह्मसम्मितम्। गायत्रीं छन्दसा मातरिदं ब्रह्म जुषस्व मे
*यदह्नात्कुरुते पापं तदह्नात्प्रतिमुच्यते। यद्रात्र्यात्कुरुते पापं तद्रात्र्यात्प्रतिमुच्यते॥*
सर्ववर्णे! महादेवि! सन्ध्याविद्येसरस्वति !। अजरे!अमरे!देवि! सर्वदेवि!नमोऽस्तुते
तेजोसीत्यादिमन्त्रेण देवीमावाहयेत्ततः। यत्कृतं त्वदनुष्ठानं तत्सर्वं पूर्णमस्तु मे॥

ततः शापविमोक्षाय विधानं सम्यगाचरेत्।
ब्रह्मशापस्ततो विश्वामित्रस्य च तथैव च॥ ७२॥

वशिष्ठशाप इत्येतत्त्रिविधं शापलक्षणम्। ब्रह्मणः स्मरणेनैव ब्रह्मशापो निवर्त्यते
विश्वामित्रस्मरणतोविश्वामित्रस्यशापतः। वसिष्ठस्मरणादेव तस्यशापोविनश्यति

हृत्पद्ममध्ये पुरुषं प्रमाणं सत्यात्मकं सर्वजगत्स्वरूपम्।
ध्यायामि नित्यं परमात्मसञ्ज्ञं चिद्रूपमेकं वचसामगम्यम॥ ७५॥
अथ न्यासविधिं वक्ष्ये सन्ध्याया अङ्गसम्भवम्।
ॐकारं पूर्ववद्योज्यं ततो मन्त्रानुदीरयेत्॥ ७६॥
भूरित्युक्त्वा च पादाभ्यां नम इत्येव चोच्चरेत्।
भुवः पूर्वन्तु जानुभ्या स्वःकटिभ्यां नमो वदेत्॥ ७७॥

महर्नाभ्यं जनश्चैव हृदयाय ततस्तपः। कण्ठाय च ततः सत्यं ललाटे परिकीर्तयेत्

अङ्गुष्ठाभ्यां तत्सवितुस्तर्जनीभ्यांवरेण्यकम् ।
भर्गो देवस्य मध्याभ्यां धीमहीत्येव कीर्तयेत् ॥ ७९ ॥
अनामाभ्यां कनिष्ठाभ्यां धियो यो नः पदम्वदेत् ।
प्रचोदयात्करपृष्ठतलयोर्विन्यसेत्सुधीः ॥ ८० ॥

ब्रह्मात्मनेतत्सवितुर्हृदयाय नमस्तथा । विष्ण्वात्मने वरेण्यञ्च शिरसे नम इत्यपि भर्गोदेवस्य रुद्रात्मने शिखायैप्रकीर्तितम् । शक्त्यात्मने धीमहीतिकवचायततःपरम् कालात्मने धियोयोनोनेत्रत्रय उदीरितम् । प्रचोदयाच्च सर्वात्मनेऽस्त्रायपरिकीर्तितम् अक्षरन्यासमेवाऽग्रे कथयामि महामुने ॥ गायत्रीवर्णसम्भूतन्यासः पापहरः परः ॥ प्रणवं पूर्वमुच्चार्य वर्णन्यासः प्रकीर्तितः । तत्कारमादावुच्चार्य पादाङ्गुष्ठद्वये न्यसेत् ॥

सकारं गुल्फयोस्तद्वद्विकारं जङ्घयोर्न्यसेत् ।
जान्वोस्तुकारं विन्यस्य ऊर्वोश्चैव वकारकम् ॥ ८६ ॥

रेकारञ्च गुदे न्यस्यणिकारं लिङ्गएव च । कट्यां यकारमेवात्र भकारं नाभिमण्डले गोकारं हृदये न्यस्य देकारंस्तनयोर्द्वयोः । वकारंहृदि विन्यस्य स्यकारंकण्ठकूपके धीकारं मुखदेशे तु मकारं तालुदेशके । हिकारं नासिकाग्रे तु धिकारं नेत्रमण्डले भ्रूमध्ये चैव योकारं योकारञ्च ललाटके । नकारं वै पूर्वमुखे प्रकारं दक्षिणे मुखे ॥ चोकारं पश्चिममुखेदकारंचोत्तरेमुखे । याकारं मूर्ध्नि विन्यस्यतकारंव्यापकंन्यसेत्

एतन्न्यासविधिं केचिन्नेच्छन्ति जपतत्पराः ।
ततो ध्यायेन्महादेवीं जगन्मातरमम्बिकाम् ॥ ९२ ॥

भास्वज्जपाप्रसूनाभां कुमारीं परमेश्वरीम् । रक्ताम्बुजासनारूढां रक्तगन्धानुलेपनाम्

रक्तमाल्याम्बरधरां चतुरास्यां चतुर्भुजाम् ।
द्विनेत्रां स्रुक्स्रुवौ मालां कुण्डिकाञ्चैव बिभ्रतीम् ॥ ९४ ॥

सर्वाभरणसन्दीप्तामृग्वेदाध्यायिनीं पराम् । हंसपत्रामाहवनीयमध्यस्थांब्रह्मदेवताम् चतुष्पदामष्टकुक्षिसप्तशीर्षांमहेश्वरीम् । अग्निवक्त्रांरुद्रशिखांविष्णुचित्तांतुभावयेत्

ब्रह्मा तु कवचं यस्या गोत्रं साङ्ख्यायनं स्मृतम् ।

आदित्यमण्डलान्तःस्थां ध्यायेद्देवीं महेश्वरीम ॥ ६७ ॥
एवं ध्यात्वाविधानेन गायत्रींवेदमातरम्। ततोमुद्राःप्रकुर्वीतदेव्याःप्रीतिकराःशुभाः सम्मुखं सम्पुटञ्चैव विततं विस्तृतं तथा। द्विमुखं त्रिमुखञ्चैव चतुष्कं पञ्चकन्तथा षण्मुखाधोमुखञ्चैव व्यापकाञ्जलिकं तथा। शकटंयमपाशञ्चग्रथितंसम्मुखोन्मुखम् विलम्बं मुष्टिकञ्चैव मत्स्यं कूर्मंवराहकम्। सिंहाक्रान्तं महाक्रान्तं मुद्गरं पल्लवंतथा चतुर्विंशति मुद्राश्च गायत्र्याःसम्प्रदर्शयेत्। शताक्षरां च गायत्रींसकृदावर्तयेत्सुधीः चतुर्विंशन्त्यक्षराणि गायत्र्याः कीर्तितानि हि। जातवेदसनाम्नींश्चऋचमुच्चारयेदतः त्र्यम्बकस्यर्चमावृत्य गायत्री शतवर्णका। भवतीयं महापुण्यासकृज्जप्या बुधैरियम् ॐकारं पूर्वमुच्चार्य भूर्भुवः स्वस्तथैवच। चतुर्विंशत्यक्षराञ्च गायत्रीं प्रोच्चरेत्ततः एवं नित्यं जपं कुर्याद्ब्राह्मणो विप्रपुङ्गवः। स समग्रंफलम्प्राप्यसन्ध्यायासुखमेधते

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामेकादशस्कन्धे सन्ध्योपासननिरूपणंनाम षोडशोऽध्यायः ॥ १६ ॥

---

## सप्तदशोऽध्यायः

### सन्ध्यादिकृत्यप्रतिपादनम्

**नारायण उवाच**

भिन्नपादा तु गायत्री ब्रह्महत्याप्रणाशिनी। अभिन्नपादागायत्री ब्रह्महत्याम्प्रयच्छति अच्छिन्नपादागायत्रीजपंकुर्वन्तियेद्विजाः। अधोमुखाश्चतिष्ठन्तिकल्पकोटिशतानिच सम्पुटैकाषडोङ्कारा गायत्री विविधामता। धर्मशास्त्रपुराणेषु इतिहासेषु सुव्रत !॥ पञ्चप्रणवसंयुक्तांजपेदित्यनुशासनम्। जपसङ्ख्याऽष्टभागान्ते पादोजप्यस्तुरीयकः सद्विजःपरमोज्ञेयःपरंसायुज्यमाप्नुयात्। अन्यथाप्रजपेद्यस्तु स जपोविफलो भवेत्

सम्पुटैकाषडोङ्कारमवेत्साऊर्ध्वरेतसाम् । गृहस्थोब्रह्मचारीवा मोक्षार्थीतुरीयांजपेत्
तुरीयपादो गायत्र्याः परोरजसेसावदोम् । ध्यानमस्यप्रवक्ष्यामिजपसाङ्गफलप्रदम्

हृदि विकसितपद्मं सार्कसोमाग्निबिम्बं प्रणवमयमचिन्त्यं यस्यपीठं प्रकल्प्यम्
अचलपरमसूक्ष्मं ज्योतिराकाशसारं भवतु मम मुदेऽसौ सच्चिदानन्दरूपः ॥८॥

त्रिशूलयोनी सुरभिमक्षमालाञ्च लिङ्गकम् । अम्बुजञ्च महामुद्रामिति सप्त प्रदर्शयेत्

या सन्ध्या सैव गायत्री सच्चिदानन्दरूपिणी ।
भक्त्या तां ब्राह्मणो नित्य पूजयेच्च नमेत्ततः ॥ १० ॥

ध्यातस्य पूजां कुर्वीत पञ्चभिश्चोपचारकैः । लंपृथिव्यात्मने गन्धमर्पयामिनमोनमः
हमाकाशात्मने पुष्पंचार्पयामि नमो नमः । यञ्च वाय्वात्मने धूप चार्पयामि ततोवदेत
रञ्च वह्न्यात्मने दीपमर्पयामि ततो वदेत् । वममृतात्मने तस्मै नैवेद्यमपि चार्पयेत
यं रं लं वं हमितिच पुष्पाञ्जलिमथार्पयेत् । एवंपूजांविधायाथचान्ते मुद्रा प्रदर्शयेत
ध्यायेत्तु मनसादेवींमन्त्रमुच्चारयेच्छनैः । न कम्पयेच्छिरोग्रीवां दन्तान्नैवप्रकाशयेत
विधिनाऽष्टोत्तरशतमष्टाविंशतिरेव वा । दशवारमशक्तो वा नाऽतो न्यूनं कदाचन
तत उद्वासयेद्देवीमुत्तमेत्यनुवाकतः । न गायत्रीं जपेद्विद्वाञ्जलमध्ये कथञ्चन ॥ १७ ॥
यतः साऽग्निमुखी प्रोक्तेत्याहुःकेचिन्महर्षयः । सुरभिर्ज्ञानशूर्पञ्चकूर्मोयोनिश्च पङ्कजम्
लिङ्गं निर्वाणकञ्चैव जपान्तेऽष्टौ प्रदर्शयेत् । यदक्षरपदभ्रष्टं स्वरव्यञ्जनवर्जितम्
तत्सर्वं क्षम्यतां देवि कश्यपप्रियवादिनि ॥ गायत्रीतर्पणं चातः करणीयं महामुने!

गायत्रीछन्द आख्यातं विश्वामित्र ऋषिः स्मृतः ।
सविता देवता प्रोक्ता विनियोगश्च तर्पणे ॥ २१ ॥

भूरित्युक्त्वा च ऋग्वेदपुरुषं तर्पयामि च । भुव इत्येतदुक्त्वा च यजुर्वेदमथो वदेत् ॥
स्वर्व्याहृतिं समुक्त्वा च सामवेदं समुच्चरेत् । महइत्येतददुक्त्वाऽन्तेऽथर्ववेदंचतर्पयेत्
जनः पदान्त इतिहास पुराणमितीरयेत् । तपः सर्वागमं चैव पुरुषं तर्पयामि च ॥२४
सत्यं च सत्यलोकाख्यपुरुषं तर्पयामि च । ॐ भूर्भूर्लोकपुरुषं तर्पयामि ततो वदेत्
भुवश्चेति भुवर्लोकपुरुषं तर्पयामि च । स्वः स्वर्गलोकपुरुषं तर्पयामि ततः परम् ॥

ॐ भूरेकपदां नाम गायत्रींतर्पयामिच । भुवो द्विपदां गायत्रीं तर्पयामीति कीर्तयेत्

स्वश्च त्रिपदां गायत्रीं तर्पयामि ततो वदेत ।

ॐभूर्भुवःस्वश्चेति तथा गायत्रीं च चतुष्पदाम् ॥ २८ ॥

उषसीं चैवगायत्रींसावित्रींचसरस्वतीम् । वेदानांमातरंपृथ्वीमजां चैवतुकौशिकीम्

साङ्कृतिं वै सार्वजितिं गायत्रींतर्पणेवदेत् । तर्पणान्ते चशान्त्यर्थंजातवेदसमीरयेत्

मानस्तोकेति मन्त्रं च शान्त्यर्थं प्रजपेत्सुधीः ।

ततोऽपि त्र्यम्बको मन्त्रः शान्त्यर्थःपरिकीर्तितः ॥ ३१ ॥

तच्छंयोरिति मन्त्रं च जपेच्छान्त्यर्थमेवतु । अतोदेवाइतिद्वाभ्यांसर्वाङ्गस्पर्शनंचरेत्

स्योनापृथिविमन्त्रेणभूम्यैकुर्यात्प्रणामकम । यथाविधिंचगोत्रादीनुच्चरेद्द्विजसत्तम!

एवं विधानं सन्ध्यायाः प्रातः काले प्रकीर्तितम् ।

सन्ध्याकर्म समाप्यान्तेऽप्यग्निहोत्रं स्वयं हुनेत् ॥ ३४ ॥

पञ्चायतनपूजाञ्च ततः कुर्यात्समाहितः । शिवांशिवंगणपतिंसूर्यंविष्णुंतथाऽर्चयेत

पौरुषेण तु सूक्तेन व्याहृत्या वा समाहितः । मूलमन्त्रेणवाकुर्याद्ह्रीश्चतेइतिमन्त्रतः

भवानीं तु यजेन्मध्येतथेशान्यांतुमाधवम । आग्नेय्यांगिरिजानाथंगणेशंरक्षसांदिशि

वायव्यामर्चयेत्सूर्यमिति देवस्थितिक्रमः । षोडशानुपचारांश्च षोडशभिर्हरेन्नरः ॥

देवीमभ्यर्च्य पुरतो यजेदन्याननुक्रमात् । न देवीपूजनात्पुण्यमधिकं क्वचिदीक्ष्यते

अतएवतुसन्ध्यासुसन्ध्योपास्तिःश्रुतीरिता । नाक्षतैरर्चयेद्विष्णुंनतुलस्यागणेश्वरम्

दूर्वाभिर्नार्चयेद्दुर्गां केतकैर्न महेश्वरम् । मल्लिकाजातिकुसुमं कुटजं पनसं तथा ॥४१

किंशुकं बकुलं कुन्दं लोध्रंतुकरवीरकम । शिंशपाऽपराजितापुष्पबन्धुकागस्त्यपुष्पके

मदन्त सिन्दुवारं च पालाशकुसुमं तथा । दूर्वाङ्कुरं बिल्वदलं कुशमञ्जरिका तथा ॥

शल्लकी माधवीपुष्पमर्कमन्दारपुष्पकम् । केतकी कर्णिकारं च कदम्बकुसुमं तथा ॥

पुन्नागश्चम्पकस्तद्वद्यूथिकातगरौ तथा । एवमादीनि पुष्पाणि देवीप्रियकराणिच

गुग्गुलस्य भवेद्धूपो दीपः स्यात्तिलतैलतः । कृत्वेत्थं देवतापूजांततोमूलमनुंजपेत्

एवं पूजां समाप्यैव वेदाभ्यासं चरेद्बुधः । ततःस्वस्वत्रय्याकुर्वीतपोष्यवर्गार्थसाधनम्

तृतीयदिनभागे तु नियमेन विचक्षणः ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामेकादशस्कन्धे गायत्र्युपासनासहितंतदङ्गवर्णनंनाम सप्तदशोऽध्यायः ॥ १७ ॥

---

# अष्टादशोऽध्यायः

## श्रीमातुःपूजनक्रमवर्णनम्

नारद उवाच

पूजाविशेषं श्रीदेव्याःश्रोतुमिच्छामि मानद !। येनाश्रितेन मनुजःकृतकृत्यत्वमावहेत्

श्रीनारायण उवाच

देवर्षे! शृणुवक्ष्यामिश्रीमातुःपूजनक्रमम् । भुक्तिमुक्तिप्रदंसाक्षात्समस्तापन्निवारणम्

आचम्य मौनी सङ्कल्प्यभूतशुद्ध्यादिकंचरेत् । मातृकान्यासपूर्वंतुषडङ्गन्यासमाचरेत्

शङ्खस्य स्थापनं कृत्वा सामान्यार्घ्यं विधाय च ।
पूजाद्रव्याणि चाऽस्त्रेण प्रोक्षयेन्मतिमान्नरः ॥ ४ ॥

गुरोरनुज्ञामादाय ततः पूजां समारभेत् । पीठपूजा पुरा कृत्वा देवीं ध्यायेत्ततः परम्

आसनाद्युपचारैश्च भक्तिप्रेमयुतः सदा । स्नापयेत्परदेवीं तां पञ्चामृतरसादिभिः ॥ ६

पौण्ड्रेक्षुरसपूर्णैस्तु कलशैः शतसङ्ख्यकैः । स्नापयेद्योमहेशानींन सभूयोऽभिजायते

यश्च चूतरसैरेवं स्नापयेज्जगदम्बिकाम् । वेदपारायणं कृत्वा रसेनेक्षुद्रवेन वा ॥ ८ ॥

तद्गेहं न त्यजेन्नित्यं रमा चैव सरस्वती । यस्तु द्राक्षारसेनैव वेदपारायणं चरन्॥

अभिषिञ्चेन्महेशानीं सकुटुम्बो नरोत्तमः । त्रसरेणुप्रमाणं च देवीलोके महीयते ॥

कर्पूरागुरुकाश्मीरकस्तूरीपङ्कपङ्किलैः । सलिलैः स्नापयेद्देवीं वेदपारायणं चरन् ॥११

भस्मीभवन्ति पापानि शतजन्मार्जितानि च । यो दुग्धकलशैर्देवींस्नापयेद्वेदपाठतः

आकल्पं स वसेन्नित्यं तस्मिन्वै क्षीरसागरे ।
यस्तु दध्नाऽभिषिञ्चेत्तां दधिकुल्यापतिर्भवेत् ॥ १३ ॥
मधुना च घृतेनैव तथा शर्करयाऽपि च । स्नापयेन्मधुकुल्यादिनदीनां स पतिर्भवेत्
सहस्रकलशैर्देवीं स्नापयेद्भक्तितत्परः । इहलोके सुखीभूत्वाऽप्यन्यलोके सुखीभवेत्
क्षौमं वस्त्रद्वयं दत्त्वा वायुलोकं सगच्छति । रत्ननिर्मितभूषाणांदातानिधिपतिर्भवेत्
काश्मीरचन्दनं दत्त्वा कस्तूरीबिन्दुभूषितम् । तथासीमन्तसिन्दूरंचरणेऽलक्तपत्रकम्
इन्द्रासने समारूढो भवेद्देवपतिः परः । पुष्पाणि विविधान्याहुः पूजाकर्मणिमाधवः
तानि दत्त्वा यथालाभ कैलासंलभतेस्वयम् । बिल्वपत्राण्यमोघानियोदद्यात्परशक्तये
तस्य दुःखं कदाचिच्च क्वचिच्च न भविष्यति । बिल्वपत्रत्रये रक्तचन्दनेन तुसंलिखेत्
मायाबीजत्रयं यत्नात्सुस्फुटं चातिसुन्दरम् । मायाबीजादिकंनामचतुर्थ्यन्तंसमुच्चरेत्
नमोऽन्तं परया भक्त्या देवीचरणपङ्कजे । समर्पयेन्महादेव्यै कोमलं तच्च पत्रकम् ॥
य एवं कुरुते भक्त्या मनुत्वं लभते हि सः । यस्तु कोटिदलैरेव कोमलैरतिनिर्मलैः ॥
पूजयेद्भुवनेशानीं ब्रह्माण्डाधिपतिर्भवेत् । कुन्दपुष्पैर्नवीनैस्तु लुलितैरष्टगन्धतः ॥२४
कोटिसङ्ख्यैः पूजयेत्तुप्राजापत्यंलभेद्ध्रुवम् । मल्लिकामालतीपुष्पैरष्टगन्धेनलोलितैः
कोटिसङ्ख्यैः पूजया तु जायते स चतुर्मुखः । दशकोटिभिरप्येवं तैरेवकुसुमैर्मुने!
विष्णुत्वं लभते मर्त्यो यत्सुरेष्वपि दुर्लभम् ।
विष्णुनैतद् व्रतं पूर्वं कृतं स्वपदलब्धये ॥ २७ ॥
शतकोटिभिरप्येवं सूत्रात्मत्वं व्रजेद्ध्रुवम् । व्रतमेतत्पुरा सम्यक्कृतं भक्त्या प्रयत्नतः
तेन व्रतप्रभावेण हिरण्योदरतां व्रजेत् । जपाकुसुमपुष्पस्य बन्धूककुसुमस्य च ॥
दाडिमीकुसुमस्याऽपि विधिरेष उदीरितः ।
एवमन्यानि पुष्पाणि श्रीदेव्यै विधिनाऽर्पयेत् ॥ ३० ॥
तस्यपुण्यफलस्यान्तंन जानातीश्वरोऽपिसः । तत्तद्रुतूद्भवैःपुष्पैर्नामसाहस्रसङ्ख्यया
समर्पयेन्महादेव्यै प्रतिवर्षमतन्द्रितः । य एवं कुरुते भक्त्या महापातकसंयुतः ॥३२॥
उपपातकयुक्तोऽपि मुच्यते सर्वपातकैः । देहान्ते श्रीपदाम्भोजं दुर्लभं देवसत्तमैः ॥

प्राप्नोतिसाधकवरो मुने! नास्त्यत्रसंशयः। कृष्णागुरुं सकर्पूरं चन्दनेनसमन्वितम्
सिह्लकञ्चाऽऽज्यसंयुक्तंगुग्गुलेनसमन्वितम्। धूपं दद्यान्महादेव्यैयेनस्याद्धूपितंगृहम्
तेन प्रसन्ना देवेशी ददाति भुवनत्रयम। दीपं कर्पूरखण्डैश्च दद्याद्देव्यै निरन्तरम्॥

सूर्यलोकमवाप्नोति नाऽत्र कार्या विचारणा।
शतदीपांस्तथा दद्यात्सहस्रान्वासमाहितः॥ ३७॥

नैवेद्यं पुरतोदेव्याःस्थापयेत्पर्वताकृतिम्। लेह्यैश्चोष्यैस्तथापेयैः षड्रसैस्तुसमाहितैः

नानाफलानि दिव्यानि स्वादूनि रसवन्ति च।
स्वर्णपात्रस्थितान्नानि दद्याद्देव्यै निरन्तरम्॥ ३८॥

तृप्तायां श्रीमहादेव्यां भवेत्तृप्तं जगत्त्रयम्। यतस्तदात्मकंसर्वं रज्जौ सर्पो यथा तथा
ततः पानीयकं दद्याच्छुभंगङ्गाजलंमहत्। कर्पूरवालासंयुक्तं शीतलं कलशस्थितम्
ताम्बूलञ्च ततो देव्यै कर्पूरशकलान्वितम्। एलालवङ्गसंयुक्तं मुखसौगन्ध्यदायकम्
दद्याद्देव्यै महाभक्त्या येन देवी प्रसीदति। मृदङ्गवीणामुरजढक्कादुन्दुभिनिःस्वनैः॥
तोषयेज्जगतां धात्रीं गायनैरतिमोहनैः। वेदपारायणैः स्तोत्रैः पुराणादिभिरप्युत॥
छत्रञ्च चामरे द्वे च दद्याद्देव्यै समाहितः। राजोपचारान् श्रीदेव्यैनित्यमेव समर्पयेत्
प्रदक्षिणां नमस्कारं कुर्याद्देव्या अनेकधा। क्षमापयेज्जगद्धात्रीं जगदम्बां मुहुर्मुहुः
सकृत्स्मरणमात्रेण यत्र देवी प्रसीदति। एतादृशोपचारैश्च प्रसीदेदत्र कः स्मयः॥
स्वभावतोभवेन्मातापुत्रेऽतिकरुणावती। तेन भक्तौ कृतायान्तु वक्तव्यं किंततःपरम्
अत्र ते कथयिष्यामि पुरावृत्तं सनातनम्। बृहद्रथस्य राजर्षेः प्रियं भक्तिप्रदायकम्

चक्रवाकोऽभवत्पक्षी कस्मिंश्चिद्देशे हिमालये।
भ्रमन्नानाविधान्देशान्ययौ काशीपुरम्प्रति॥ ५०॥

अन्नपूर्णामहास्थाने प्रारब्धवशतो द्विजः। जगाममलीलयातत्र कणलोभादनाथवत्॥
कृत्वा प्रदक्षिणामेकां जगामच विहायसा। देशान्तरंविहायैवपुरीं मुक्तिप्रदायिनीम्
कालान्तरे ममाराऽसौ गतःस्वर्गपुरीं प्रति। बुभुजेविषयान्सर्वान्दिव्यरूपधरो युवा
कल्पद्वयं तथा भुक्त्वापुनःप्रापभुवम्प्रति। क्षत्रियाणांकुलेजन्म प्राप सर्वोत्तमोत्तमम्

बृहद्रथेतिनाम्नाऽभूत्प्रसिद्धः क्षितिमण्डले।

महायज्वा धार्मिकश्च सत्यवादी जितेन्द्रियः ॥ ५७ ॥

त्रिकालज्ञः सार्वभौमो यमीपरपुरञ्जयः। पूर्वजन्मस्मृतिस्तस्य वर्तते दुर्लभा भुवि

इति श्रुत्वा किम्वदन्तीं मुनयः समुपागताः। कृतातिथ्या नृपेन्द्रेण विप्ररेषुपुरेवते

पप्रच्छुर्मुनयः सर्वे संशयोऽस्ति महान्नृप !। केन पुण्यप्रभावेण पूर्वजन्मस्मृतिस्तव

त्रिकालज्ञानमेवाऽपि केन पुण्यप्रभावतः।

ज्ञानं तवेति तज्ज्ञातुमागताः स्म तवाऽन्तिकम् ॥ ५९ ॥

वद निर्व्याजया कृपया तदस्माकं यथातथम्।

श्रीनारायण उवाच

इति तेषां वचः श्रुत्वा राजा परमधार्मिकः ॥ ६० ॥

उवाच सकलं ब्रह्मंस्त्रिकालज्ञानकारणम्। श्रूयतां मुनयः सर्वे मम ज्ञानस्य कारणम्

चक्रवाकःस्थितःपूर्वंनीचयोनिगतोऽपिवा। अज्ञानतोऽपिकृतवानन्नपूर्णाप्रदक्षिणाम्

तेनपुण्यप्रभावेणस्वर्गेकल्पद्वयस्थितिः। त्रिकालज्ञानताऽप्यस्मिन्नभूज्जन्मनि सुव्रत!

को वेद जगदम्बायाः पदस्मृतिफलं कियत्।

स्मृत्वा तन्महिमानं तु पतन्त्यश्रूणि मेऽनिशम् ॥ ६४ ॥

धिगस्तुजन्मतेषाम्वैकृतघ्नानांतुपापिनाम्। येसर्वमातरं देवींस्वोपास्यांनभजन्तिहि

न शिवोपासना नित्या न विष्णूपासना तथा।

नित्योपास्तिः परा देव्या नित्या श्रुत्यैव चोदिता ॥ ६६ ॥

किं मया बहु वक्तव्यं स्थाने संशयवर्जिते। सेवनीयम्पदाम्भोजं भगवत्यानिरन्तरम्

नातः परतरं किञ्चिदधिकं जगतीतले। सेवनीया परा देवी निर्गुणा सगुणाऽथवा

नारायण उवाच

इति तस्य वचः श्रुत्वाराजर्षेर्धार्मिकस्यच। प्रसन्नहृदयाःसर्वे गताः स्वस्वनिकेतनम्

एवम्प्रभावा सा देवी तत्पूजायाः फलं कियत्।

अस्तीति केन प्रष्टव्यं वक्तव्यं वा न केनचित् ॥ ७० ॥

येषां तु जन्मसाफल्यं तेषां श्रद्धा तु जायते । येषांतुजन्मसाङ्कर्यंतेषांश्रद्धानजायते॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामेकादशस्कन्धे अष्टादशोऽध्यायः ॥ १८ ॥

---

# एकोनविंशोऽध्यायः

## मध्याह्नसन्ध्याविवरणकथनम्

नारायण उवाच

अथाऽतः श्रूयतां ब्रह्मन्सन्ध्यां माध्याह्निकीं शुभाम् ।
यदनुष्ठानतोऽपूर्वं जायतेऽत्युत्तमं फलम् ॥ १ ॥
सावित्रीं युवतीं श्वेतवर्णाञ्चैव त्रिलोचनाम् ।
वरदां चाऽक्षमालाढ्यां त्रिशूलाभयहस्तकाम् ॥ २ ॥
वृषारूढां यजुर्वेदसंहितां रुद्रदेवताम् । ततो गुणयुताञ्चैव भुवर्लोकव्यवस्थिताम् ॥
आदित्यमार्गसञ्चारकर्त्रीं मायां नमाम्यहम् ।
आदिदेवीमथ ध्यात्वाऽऽचमनादि च पूर्ववत् ॥ ४ ॥
अथ चाऽर्घ्यप्रकरणं पुष्पाणि चिनुयात्ततः । तदलाभे बिल्वपत्रं तोयेनामिश्रयेत्ततः
ऊर्ध्वं च सूर्याभिमुखं क्षिप्त्वाऽर्घ्यं प्रतिपादयेत् ।
प्रातःसन्ध्यादिवत्सर्वमुपसंहारपूर्वकम् ॥ ६ ॥
मध्याह्ने केचिदिच्छन्ति सावित्रीं तु तदित्यृचम् ।
असम्प्रदायं तत्कर्म कार्यहानिस्तु जायते ॥ ७ ॥
कारणंसन्ध्ययोश्चात्रमन्देहानामराक्षसाः । भक्षितुंसूर्यमिच्छन्तिकारणंश्रुतिचोदितम्
अतस्तु कारणाद्विप्रः सन्ध्यां कुर्यात्प्रयत्नतः । सन्ध्ययोरुभयोर्नित्यंगायत्र्याप्रणवेनच
अम्भस्तु प्रक्षिपेत्तेन नाऽन्यथा श्रुतिचातकः ।

आकृष्णेनेतिमन्त्रेण पुष्पैर्वाऽम्बुविमिश्रितम् ॥ १० ॥
अलाभे बिल्वदूर्वादिपत्रेणोक्तेनपूर्वकम् । अर्घ्यंदद्यात्प्रयत्नेन साङ्गं सन्ध्याफलंलभेत्
अथैवतर्पणंवक्ष्ये शृणु देवर्षिसत्तम ! । भुवः पुनः पूरुषं तु तर्पयामि नमोनमः ॥१२
यजुर्वेदं तर्पयामि मण्डलं तर्पयामि च । हिरण्यगर्भञ्च तथाऽन्तरात्मानं तथैवच ॥
सावित्रीञ्चततो देवमातरंसाङ्कृतिं तथा । सन्ध्यां तथैवयुवतींरुद्राणीर्नीमृजांतथा
सर्वार्थानां सिद्धिकरीं सर्वमन्त्रार्थसिद्धिदाम् ।
भूर्भुवः स्वः पुरुषं तु इति मध्याह्नतर्पणम् ॥ १५ ॥
उदुत्यमिति सूक्तेन सूर्योपस्थानमेव च । चित्रं देवानामितिच सूर्योपस्थानमाचरेत्
ततो जपं प्रकुर्वीत मन्त्रसाधनतत्परः । जपस्याऽपि प्रकारन्तु वक्ष्यामि शृणुनारद!
कृत्वोत्तानौ करौ प्रातः सायंचाऽधःकरौतथा । मध्याह्नेहृदयस्थौतुकृत्वाजपमुदीरयेत्
पर्वद्वयमनामिक्याः कनिष्ठादिक्रमेण तु । तर्जनीमूलपर्यन्तं करमाला प्रकीर्तिता ॥१८
गोघ्नः पितृघ्नो मातृघ्नो भ्रूणहा गुरुतल्पगः । ब्रह्मस्वक्षेत्रहारी च यश्चविप्रःसुरांपिबेत्
स गायत्र्याः सहस्रेण पूतो भवति मानवः । मानसं वाचिकंपापंविषयेन्द्रियसङ्गजम्
तत्किल्बिषं नाशयतित्रीणि जन्मानिमानवः । गायत्रींयोनजानातिवृथातस्यपरिश्रमः
पठेच्च चतुरो वेदान् गायत्रींचैकनो जपेत् । वेदानां चाऽऽवृत्तेस्तद्वद्गायत्रीजप उत्तमः
इति मध्याह्नसन्ध्यायाः प्रकारःकीर्तितो मया । अतःपरंप्रवक्ष्यामिब्रह्मयज्ञविधिक्रमम्
इति श्रीदेवीभागवतेमहापुराणेऽष्टादशसाहस्र्यां संहितायामेकादशस्कन्धे
मध्याह्नसन्ध्याप्रतिपादनंनामैकोनविंशोऽध्यायः ॥ १९ ॥

---

# विंशोऽध्यायः

## ब्रह्मयज्ञादिकीर्त्तनम्

श्रीनारायण उवाच

त्रिराचम्य द्विजः पूर्वं द्विर्मार्जनमथाचरेत्। उपस्पृशेत्सव्यपाणिं पादौचप्रोक्षयेत्ततः
शिरसि चक्षुषि तथा नासायां श्रोत्रदेशके। हृदये चतथामौलौप्रोक्षणं सम्यगाचरेत्
देशकालौ समुच्चार्य ब्रह्मयज्ञमथाचरेत्। द्वौ दर्भौ दक्षिणे हस्ते वामे त्रीनासनेसकृत्
उपवीते शिखायां च पादमूले सकृत्सकृत्। विमुक्तये सर्वपापक्षयार्थं चैव मेव हि॥
सूत्रोक्तदेवताप्रीत्यै ब्रह्मयज्ञंकरोम्यहम्। गायत्रीं त्रिर्जपेत्पूर्वं चाऽग्निमीले ततः परम्
यदङ्गेति ततः प्रोच्य अग्निर्वै इति कीर्तयेन। अथमहाव्रतं चैवपन्थाएतच्च कार्तयेत्
अथाऽतः संहितायाश्च विदा मघवदित्यपि। महाव्रतस्येति तथा इषेत्वोर्जेइतीचहि
अग्न आयाहि चेत्येवं शन्नो देवीरितीति च। अथतस्यसमाम्नायोवृद्धिरादैजितीचहि
अथ शिक्षांप्रवक्ष्यामिपञ्चसम्वत्सरेतिच। मयरसतजभेम्येत्यैवगौग्माइत्येचकीर्तयेत्
अथाऽतोधर्मजिज्ञासाअथाऽतोब्रह्म इत्यपि। तच्छंयोरिति च प्रोच्यब्रह्मणेनमइत्यपि
तर्पणं चैव देवानां ततः कुर्यात्प्रदक्षिणम्। प्रजापतिश्च ब्रह्मा च वेदा देवास्तथर्षयः

सर्वाणि चैव च्छन्दांसि तथोङ्कारस्तथैव च।
वषट्कारो व्याहृतयः सावित्री च ततः परम्॥ १२॥

गायत्रीचैवयज्ञाश्चद्यावापृथिवीइत्यपि। अन्तरिक्षंत्वहोरात्राणिचसाङ्ख्याअतःपरम्
सिद्धाः समुद्रा नद्यश्च गिरयश्चततःपरम्। क्षेत्रौषधिवनस्पत्योगन्धर्वाप्सरसस्तथा

नागा वयांसि गावश्च साध्याविप्रास्तथैव च।
यक्षा रक्षांसि भूतानीत्यमेवमन्तानि कीर्तयेत्॥ १५॥

अथो निवीती भूत्वा च ऋषीन्सन्तर्पयेदपि। शतर्चिनोमाध्यमाश्चगृत्समदस्तथैवच
विश्वामित्रो वामदेवोऽत्रिर्भरद्वाज एव च। वसिष्ठश्चप्रगाथश्चपावमान्यस्ततः परम्

धुवसूक्ता महासूक्ताः सनकश्च सनन्दनः । सनातनस्तथैवाऽत्र सनत्कुमार एव च ॥

कपिलासुरिनामानौ वोहलिः पञ्चशीर्षकः ।

प्राचीनावीतिना तच्च कर्तव्यमथ तर्पणम् ॥ १६ ॥

सुमन्तुर्जैमिनिर्वैशम्पायनः पैलसूत्रयुक् । भाष्यभारतपूर्वश्च महाभारत इत्यपि ॥
धर्माचार्याइमे सर्वे तृप्यन्त्विति चकीर्तयेत् । जानन्तिबाहविगार्ग्यगौतमाश्चैवशाकलः
बाभ्रव्यमाण्डव्ययुतो माण्डूकेयस्ततः परम् । गार्गीवाचक्नवीचैववडवाप्रातिथेयिका
सुलभायुक्तमैत्रेयी कहोलश्च ततः परम् । कौषीतकम्महाकौषीतकं वै तर्पयेत्ततः
भारद्वाजं च पैङ्ग्यश्च महापैङ्ग्यं सुयज्ञकम् । साङ्ख्यायनमैतरेयं महैतरेयमेव च ॥
बाष्कलं शाकलं चैव सुजातवक्त्रमेवच । औदवाहिचसौजामिशौनकंचाश्वलायनम्

ये चाऽन्ये सर्वआचार्यास्ते सर्वे तृप्तिमाप्नुयुः ।

ये के चाऽस्मत्कुलेजाता अपुत्रा गोत्रिणो मृताः ॥ २६ ॥

ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् । एवं ते ब्रह्मयज्ञस्य विधिरुक्तो महामुने!॥
यश्चाऽयं कुरुते ब्रह्मयज्ञस्य विधिमुत्तमम् । सर्ववेदाङ्गपाठस्य फलमाप्नोति साधकः
वैश्वदेवं ततः कुर्यान्नित्यश्राद्धं तथैव च । अतिथिभ्योऽन्नदानं च नित्यमेवसमाचरेत्
गोग्रासं च ततो दत्त्वा भुञ्जीत ब्राह्मणैः सह । अह्नस्तु पञ्चमे भागे प्रकुर्यादेतदुत्तमम्
इतिहासपुराणाद्यैः षष्ठसप्तमकौ नयेत् । अष्टमे लोकयात्रा तु बहिः सन्ध्यां ततःपुनः
अथ सायन्तनीं सन्ध्यां प्रवक्ष्यामि महामुने !। यदनुष्ठानमात्रेणमहामाया प्रसीदति

आचम्य प्राणानायम्य साधकः स्थिरमानसः ।

बद्धपद्मासनो योगी सायंकाले स्थिरो भवेत् ॥ ३३ ॥

श्रुतिस्मृत्यादिकर्मादौ सगर्भः प्राणसंयमः । अगर्भोध्यानमात्रंतुसचामन्त्रःप्रकीर्तितः
भूतशुद्ध्यादिकंकृत्वा नान्यथाकर्मकीर्तितम् । सलक्षोदेवतांध्यात्वापूरकुम्भकरेचकैः

ध्यानं प्रकुर्यात्सन्ध्यायां सायंकाले विचक्षणः ।

वृद्धां सरस्वतीं देवीं कृष्णाङ्गीं कृष्णवाससम् ॥ ३६ ॥

शङ्खचक्रगदापद्महस्तां गरुडवाहनाम् । नानारत्नलसद्भूषां क्वणन्मञ्जीरमेखलाम् ॥

अनर्घ्यरत्नमुकुटां तारहारावलीयुताम् । ताटङ्कबद्धमाणिक्यकान्तिशोभिकपोलकाम्
पीताम्बरधरां देवीं सच्चिदानन्दरूपिणीम् । सामवेदेन सहितां संयुतां सत्त्ववर्त्मना

व्यवस्थितां च स्वर्लोके आदित्यपथगामिनीम् ।
आवाहयाम्यहं देवीमायान्तीं सूर्यमण्डलात् ॥ ४० ॥
एवं ध्यात्वा च तां देवीं सन्ध्यासङ्कल्पमाचरेत् ।
आपोहिष्ठेति मन्त्रेण अग्निश्चेति तथैव च ॥ ४१ ॥

विदध्यादाचमनकं शेषं पूर्ववदीरितम् । गायत्रीमन्त्रमुच्चार्य श्रीनारायणप्रीतये ॥ ४२
अर्घ्यं दद्याच्चसूर्यायसाधकःशुद्धमानसः । उभौपादौसमौकृत्वाहस्तेकृत्वाजलाञ्जलिम्

देवं ध्यात्वा मण्डलस्थं क्षिपेदर्घ्यं ततः क्रमात् ।
अर्घ्यं दद्यात्तु यो नीरे मूढात्मा ज्ञानवर्जितः ॥ ४४ ॥
उल्लङ्घ्य स्मृतिमन्त्रांश्च प्रायश्चित्ती भवेद् द्विजः ।
ततः सूर्यमुपस्थायाऽप्यसावादित्यमन्त्रतः ॥ ४५ ॥

गायत्र्याश्च जपं कुर्यादुपविश्य ततोबृसीम् । सहस्रंवातदर्धम्वाश्रीदेवीध्यानपूर्वकम्
यथा प्रातः पुनस्तद्वदुपस्थानादिकं चरेत् । सायंसन्ध्यातर्पणे चक्रमेणपरिकीर्तयेत्
वसिष्ठ ऋषिरेवाऽत्र सरस्वत्याःप्रकीर्तितः । देवताविष्णुरूपासाछन्दश्चैवसरस्वती
सायङ्कालीनसन्ध्यायास्तर्पणे विनियोगकः । स्वरित्युक्त्वा च पुरुषं सामवेदंतथैवच

मण्डलञ्चेति सम्प्रोच्य हिरण्यगर्भकं तथा ।
तथैव परमात्मानं ततोऽपि च सरस्वतीम् ॥ ५० ॥

वेदमातरमेवाऽत्र सङ्कृतिं तद्वदेव च । सन्ध्यां वृद्धां तथाविष्णुरूपिणीमुषसीतथा

निर्मृजीं च तथा सर्वसिद्धीनां कारिणीं तथा ।
सर्वमन्त्राधिपतिकां भूर्भुवः स्वश्च पूरुषम् ॥ ५२ ॥
इत्येवं तर्पणं कार्यं सन्ध्यायाः श्रुतिसम्मतम् ।
सायं सन्ध्याविधानं च कथितं पापनाशनम् ॥ ५३ ॥

सर्वदुःखहरं व्याधिनाशकं मोक्षदं तथा । सदाचारेषु सन्ध्यायाः प्राधान्यंमुनिपुङ्गव!

सन्ध्याचरणतो देवी भक्ताभाष्टं प्रयच्छति ॥ ५५ ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामेकादशस्कन्धे ब्रह्मयज्ञादिकीर्तनंनाम विंशोऽध्यायः ॥ २० ॥

---

## एकविंशोऽध्यायः

### गायत्रीपुरश्चरणविधिकथनम्

श्रीनारायण उवाच

अथाऽतः श्रूयतां ब्रह्मन्! गायत्र्याः पापनाशनम् । पुरश्चरणकंपुण्यंयथेष्टफलदायकम्
पर्वताग्रे नदीतीरे बिल्वमूले जलाशये । गोष्ठे देवालयेऽश्वत्थे उद्याने तुलसीवने ॥

पुण्यक्षेत्रे गुरोः पार्श्वे चित्तैकाग्र्यस्थलेऽपि च ।

पुरश्चरणकृन्मन्त्री सिद्ध्यत्येव न संशयः ॥ ३ ॥

यस्यकस्यापिमन्त्रस्यपुरश्चरणमारभेत् । व्याहृतित्रयसंयुक्तांगायत्रींचाऽऽयुतंजपेत्
नृसिंहार्कवराहाणांतान्त्रिकंवैदिकंतथा । विनाजप्त्वातुगायत्रींतत्सर्वंनिष्फलम्भवेत
सर्वे शाक्ताद्विजाः प्रोक्तानशैवानचवैष्णवाः । आदिशक्तिमुपासन्तेगायत्रींवेदमातरम्
मन्त्रं संशोध्य यत्नेन पुरश्चरणतत्परः । मन्त्रशोधनपूर्वाङ्गमात्मशोधनमुत्तमम् ॥७॥
आत्मतत्त्वशोधनाय त्रिलक्षं प्रजपेद्बुधः । अथवा चैकलक्षं तु श्रुतिप्रोक्तेनवर्त्मना

आत्मशुद्धिं विना कर्तुर्जपहोमादिकाः क्रियाः ।

निष्फलास्तास्तु विज्ञेयाः कारणं श्रुतिचोदितम् ॥ ६ ॥

तपसा तापयेद्देहं पितृन्देवांश्च तर्पयेत् । तपसा स्वर्गमाप्नोति तपसा विन्दते महत्
क्षत्रियो बाहुवीर्येण तरेदापद आत्मनः । धनेन वैश्यः शूद्रस्तु जपहोमैर्द्विजोत्तमः ॥
अत एव तु विप्रेन्द्र! तपः कुर्यात्प्रयत्नतः । शरीरशोषणं प्राहुस्तापसास्तप उत्तमम्
शोधयेद्विधिमार्गेण कृच्छ्रचान्द्रायणादिभिः । अथात्मशुद्धिकरणंवक्ष्यामि शृणुनारद!

अयाचितोञ्छशुक्लाख्यभिक्षावृत्तिचतुष्टयम् ।
तान्त्रिकैर्वैदिकैश्चैवं प्रोक्ताऽन्नस्य विशुद्धता ॥ १४ ॥

भिक्षान्नं शुद्धमानीयकृत्वाभागचतुष्टयम् । एकंभागंद्विजेभ्यस्तु गोग्रासस्तुद्वितीयकः

अतिथिभ्यस्तृतीयस्तु तदूर्ध्वं तु स्वभार्ययोः ।
आश्रमस्य यथा यस्य कृत्वा ग्रासविधिं क्रमात् ॥ १६ ॥
आदौ क्षिप्त्वा तु गोमूत्रं यथाशक्ति यथाक्रमम् ।
तदूर्ध्वं ग्राससङ्ख्या स्याद्वानप्रस्थगृहस्थयोः ॥ १७ ॥

कुक्कुटाण्डप्रमाणं तु ग्रासमानंविधीयते । अष्टौग्रासागृहस्थस्यवनस्थस्यतदर्धकम्
ब्रह्मचारी यथेष्टश्च गोमूत्रविधिपूर्वकम् । प्रोक्षणं नववारश्च षड्वारश्च त्रिवारकम्
निश्छिद्रश्च करं कृत्वासावित्रीश्चतदित्यृचम् । मन्त्रमुच्चार्यमनसाप्रोक्षणेविधिरुच्यते
चौरोवा यदिचाण्डालोवैश्यःक्षत्रस्तथैवच । अन्नं दद्यात्तुयःकश्चिदधमोविधिरुच्यते
शूद्रान्नं शूद्रसम्पर्कं शूद्रेण च सहाशनम् । ते यान्ति नरकं घोरं यावच्चन्द्रदिवाकरौ

गायत्रीच्छन्दो मन्त्रस्य यथा सङ्ख्याक्षराणि च ।
तावल्लक्षाणि कर्तव्यं पुरश्चरणकं तथा ॥ २३ ॥

द्वात्रिंशल्लक्षमानन्तु विश्वामित्रमतं तथा । जीवहीनो यथा देहः सर्वकर्मसु न क्षमः ॥
पुरश्चरणहीनस्तु तथा मन्त्रः प्रकीर्तितः । ज्येष्ठाषाढौ भाद्रपदं पौषं तु मलमासकम्
अङ्गारं शनिवारश्च व्यतीपातश्चवैधृतिम् । अष्टमीं नवमीं षष्ठीं चतुर्थीञ्च त्रयोदशीम्
चतुर्दशीममावास्यां प्रदोषञ्च तथानिशाम् । यमाग्निरुद्रसर्पेन्द्रवसुश्रवणजन्मभम् ॥
मेषकर्कतुलाकुम्भान्मकरञ्चैव वर्जयेत् । सर्वाण्येतानि वर्ज्यानिपुरश्चरणकर्मणि ॥२८
चन्द्रतारानुकूले च शुक्लपक्षे विशेषतः । पुरश्चरणकं कुर्यान्मन्त्रसिद्धिः प्रजायते ॥

स्वस्तिवाचनकं कुर्यान्नान्दीश्राद्धं यथाविधि ।
विप्रान्सन्तर्प्य यत्नेन भोजनाच्छादनादिभिः ॥ ३० ॥

आरभेत्तु ततःपश्चादनुज्ञानपुरःसरम् । प्रत्यङ्मुखः शिवस्थाने द्विजश्चान्यतमे जपेत्
काशीपुरी च केदारो महाकालोऽथ नासिकम् । त्र्यम्बकञ्चमहाक्षेत्रंपञ्चदीपाइमे भुवि

सर्वत्रैवहि दीपस्तु कूर्मासनमितिस्मृतम् । प्रारम्भदिनमारभ्य समाप्तिदिवसावधि
न न्यूनं नातिरिक्तञ्च जपंकुर्याद्दिने दिने । नैरन्तर्येण कुर्वन्ति पुरश्चर्यां मुनीश्वराः॥
प्रातरारभ्य विधिवज्जपेन्मध्यदिनावधि । मनःसंहरणं शौचं ध्यानं मन्त्रार्थचिन्तनम्

गायत्रीच्छन्दो मन्त्रस्य यथा सङ्ख्याक्षराणि च ।

तावल्लक्षाणि कर्तव्यं पुरश्चरणकं तथा ॥ ३६ ॥

जुहुयात्तद्दशांशेन सघृतेन पयोऽन्धसा । तिलैः पत्रैः प्रसूनैश्च यवैश्च मधुरान्वितैः ॥
कुर्याद्दशांशतो होमं ततः सिद्धोभवेन्मनुः । गायत्रीचैव संसेव्या धर्मकामार्थमोक्षदा
नित्ये नैमित्तिकेकाम्येत्रितये तु परायणः । गायत्र्यास्तु परं नास्ति इहलोकेपरत्रच
मध्याह्नमितभुङ्मौनी त्रिस्नानार्चनतत्परः । जले लक्षत्रयं धीमाननन्यमानसक्रियः

कर्मणा यो जपेत्पश्चात्कर्मभिः स्वेच्छयाऽपि वा ।

यावत्कार्यं न सिद्ध्येत (त्तु) तावत्कुर्याज्जपादिकम् ॥ ४१ ॥

सामान्यकाम्यकर्मादौ यथावद्विधिरुच्यते ।

आदित्यस्योदये स्नात्वा सहस्रम्प्रत्यहं जपेत् ॥ ४२ ॥

आयुरारोग्यमैश्वर्यंधनञ्चलभते ध्रुवम् । षण्मासंवात्रिमासंवावर्षान्ते सिद्धिमाप्नुयात्
पद्मानां लक्षहोमेन घृताक्तानां हुताशने । प्राप्नोति निखिलं मोक्षं सिध्यत्येवनसंशयः

मन्त्रसिद्धिं विना कर्तुर्जपहोमादिकाः क्रियाः ।

काम्यम्वा यदि वा मोक्षः सर्वं तन्निष्फलम्भवेत् ॥ ४५ ॥

पञ्चविंशतिलक्षेण दध्ना क्षीरेण वा हुतात् । स्वदेहेसिध्यतेजन्तुर्महर्षीणांमतं तथा

अष्टाङ्गयोगसिद्ध्या च नरः प्राप्नोति यत्फलम् ।

तत्फलं सिद्धिमाप्नोति नाऽत्र कार्या विचारणा ॥ ४७ ॥

शक्तो वाऽपि त्वशक्तो वा आहारं नियतश्चरेत् ।

षण्मासात्तस्य सिद्धिः स्याद् गुरुभक्तिरतः सदा ॥ ४८ ॥

एकाहं पञ्चगव्याशी चैकाहं मारुताशनः । एकाहं ब्राह्मणान्नाशीगायत्रीजपकृद्भवेत्
स्नात्वा गङ्गादितीर्थेषु शतमन्तर्जलेजपेत् । शतेनाऽपस्ततःपीत्वासर्वपापैः प्रमुच्यते

चान्द्रायणादिकृच्छ्रस्य फलं प्राप्नोति निश्चितम् ।
राजा वा यदि वा विप्रस्तपः कुर्यात्स्वके गृहे ॥ ५१ ॥
गृहस्थो ब्रह्मचारी वा वानप्रस्थोऽथवाऽपि च । अधिकारपरत्वेनफलंयज्ञादिपूर्वकम्
श्रौतस्मार्तादिकं कर्म क्रियते मोक्षकाङ्क्षिभिः ।
साग्निकश्च सदाचारो विद्वद्भिश्चसुशिक्षितः ॥ ५३ ॥
ततःकुर्यात्प्रयत्नेनफलमूलोदकादिभिः । भिक्षान्नंशुद्धमश्नीयादष्टौग्रासान्स्वयंभुजेत
एवं पुरश्चरणकंकृत्वामन्त्रसिद्धिमवाप्नुयात् । दैवर्षयदनुष्ठानाद्दारिद्र्यं विलयम्व्रजेत्
यत्कृत्वाऽपि च पुण्यानां महतीं सिद्धिमाप्नुयात् ॥ ५६ ॥
इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामेकादशस्कन्धे
गायत्रीपुरश्चरणविधिकथनंनामैकविंशोऽध्यायः ॥ २१ ॥

---

## द्वाविंशोऽध्यायः

### वैश्वदेवादिविधिनिरूपणम्

नारायण उवाच

अथाऽतःश्रूयतां ब्रह्मन्वैश्वदेवाविधानकम् । पुरश्चर्याप्रसङ्गेन ममाऽपिस्मृतिमागतम्
देवयज्ञो ब्रह्मयज्ञो भूतयज्ञस्तथैव च । पितृयज्ञो मनुष्यस्य यज्ञश्चैव तु पञ्चमः ॥ २ ॥
पञ्चसूना गृहस्थस्यचुल्लीपेषण्युपस्करः । कण्डणी चोदकुम्भश्चतेषांपापस्यशान्तये
न चुल्ल्यां नायसे पात्रेनभूमौ नचखर्परे । वैश्वदेवंप्रकुर्वीतकुण्डेवाऽस्थण्डिलेऽपि वा
न पाणिना न शूर्पेण न च मेध्याजिनादिभिः । मुखेनोपधमेदग्निं मुखादेव व्यजायत
पटकेन भवेद्व्याधिः शूर्पेण धननाशनम् । पाणिना मृत्युमाप्नोति कर्मसिद्धिर्मुखेन तु
फलैर्दधिघृतैः कुर्यान्मूलशाकोदकादिभिः । अलाभे येन केनापि काष्ठमूलतृणादिभिः
जुहुयात्सर्पिषाभ्यक्तं तैलक्षारविवर्जितम् । दध्यक्तं वा पायसाक्तंतदभावेऽम्भसाऽपिवा

शुष्कैःपर्युषितैः कुष्ठी उच्छिष्टेनद्विषां वशी। रूक्षैर्दरिद्रतां यातिक्षारंहुत्वाव्रजत्यधः
अङ्गारान्भस्ममिश्रांस्तु निर्हृत्योत्तरतोऽनलात्।
जुहुयाद्वैश्वदेवं तु न क्षारादिविमिश्रितम्॥ १०॥
अकृत्वा वैश्वदेवं तु योभुङ्क्ते मूढधीर्द्विजः। समूढोनरकंयातिकालसूत्रमवाक्शिराः
शाकं वा यदि वा पत्रं मूलं वा यदिवा फलम्। सङ्कल्पयेद्यदाहारंतेनाग्नौजुहुयादपि
अकृते वैश्वदेवे तु भिक्षौभिक्षार्थमागते। उद्धृत्यवैश्वदेवार्थं भिक्षांदत्त्वाविसर्जयेत्
वैश्वदेवकृतं दोषं शक्तोभिक्षुर्व्यपोहितुम्। न तु भिक्षुकृतं दोषं वैश्वदेवो व्यपोहति
यतिश्च ब्रह्मचारीच पक्वान्नस्वामिनावुभौ। तयोरन्नमदत्त्वा तु भुक्त्वाचान्द्रायणंचरेत्
वैश्वदेवानन्तरञ्च गोग्रासं प्रतिपादयेत्। तद्विधानं प्रवक्ष्यामि शृणु देवर्षिपूजित !॥
सुरभिर्वैष्णवी माता नित्यं विष्णुपदेस्थिता। गोग्रासञ्चमयादत्तंसुरभेप्रतिगृह्यताम्
गोभ्यश्च नमइत्येव पूजां कृत्वागवेऽर्पयेत्। गोग्रासेन तुगोमातासुरभिःसम्प्रसीदति
ततो गोदोहनं कालं तिष्ठेच्चैव गृहाङ्गणे। अतिथिर्यत्र भग्नाशो गृहात्प्रतिनिवर्तते
स तस्मैदुष्कृतंदत्त्वापुण्यमादाय गच्छति। मातापितागुरुर्भ्राताप्रजादासःसमाश्रितः
अभ्यागतोऽतिथिश्चाग्निरेतेपोष्याउदाहृताः। एवंज्ञात्वातुयोमोहान्नकरोतिगृहाश्रमम्
तस्यनायं तु नपरोलोकोभवति धर्मतः। यत्फलं सोमयागेनप्राप्नोति धनवान्द्विजः॥
सम्यक्पञ्चमहायज्ञैर्दरिद्रस्तेनचाऽऽप्नुयात्। अथप्राणाग्निहोत्रंतुवक्ष्यामि मुनिपुङ्गव!
यज्ज्ञात्वा मुच्यतेजन्तुर्जन्ममृत्युजरादिभिः। परिज्ञानेन मुच्यन्तेनराःपातककिल्बिषैः
विधिना भुज्यते येन मुच्यते स ऋणत्रयात्।
कुलान्युद्धरते विप्रो नरकानेकविंशितम्॥ २५॥
सर्वयज्ञफलप्राप्तिः सर्वलोकेषु गच्छति। हृत्पुण्डरीकमरणिर्मनो मन्थानसञ्ज्ञकम्॥
वायुरज्ज्वा मथेदग्निंचक्षुरध्वर्युरेव च। तर्जनीमध्यमाङ्गुष्ठैःप्राणस्यैवाहुतिं क्षिपेत्॥
मध्यमानामिकाङ्गुष्ठैरपानस्याहुतिं क्षिपेत्। कनिष्ठानामिकाङ्गुष्ठैर्व्यानस्यतदन्तरम्
कनिष्ठातर्जन्यङ्गुष्ठैरुदानस्याहुतिंक्षिपेत्। सर्वाङ्गुलैर्गृहीत्वाऽन्नंसमानस्याहुतिंक्षिपेत्
स्वाहान्तान्प्रणवाद्यांश्चनाममन्त्रांश्च वै पठेत्। मुखे चाहवनीयस्तु हृदयेगार्हपत्यकः

नाभौचदक्षिणाग्निःस्य दधःसभ्य वसथ्यकौ । वाग्घोताप्राणउद्गाताचक्षुरध्वर्युरेवच
मनो ब्रह्मा भवेच्छ्रोत्रमाग्नीध्रस्थ नएव च । अहङ्कारः पशुश्चाऽत्र प्रणवः पयईरितम् ॥

बुद्धिश्च पत्नी सम्प्रोक्ता यदधीनो गृहाश्रमी ।

उरोवेदिस्तु रोमाणि दर्भाः स्युः स्रुक् स्रुवौ करौ ॥ ३३ ॥

प्राणमन्त्रस्य च ऋषीरुक्मवर्णःक्षुधाग्निकः । देवतादित्यएवात्रगायत्रीच्छन्दउच्यते
प्राणाय तथा स्वाहा मन्त्रान्ते कीर्त्तयेदपि । इदमादित्य देवाय नममेति वदेदपि ॥
अपानमन्त्रस्य च तथागोक्षीरधवलाकृतिः । श्रद्धाग्निऋषिरेवात्रसोमोवैदेवतास्मृता

उष्णिक्छन्दस्तथाऽपानाय स्वाहेत्यपि कीर्तयेत् ।

सोमायेदञ्च न ममेत्यत्रोहः परिकीर्तितः ॥ ३७ ॥

व्यानमन्त्रस्य चाख्यातोऽम्बुजवर्णहुताशनः । ऋषिरुक्तोदेवताग्निरनुष्टुपूछन्दईरितम्
व्यानाय च तथा स्वाहाऽग्नयेदंन ममेत्यपि । उदानमन्त्रस्य तथा शक्रगोपसवर्णकः
ऋषिरग्निः समाख्यातो वायुर्वैदेवता स्मृता । बृहतीछन्दआख्यातमुदानायचपूर्ववत्
वायवे चेदं न मम एव चैवोच्चरेद्द्विजः । समानवायुमन्त्रस्य विद्युद्वर्णो विरूपकः ॥
ऋषिरग्निः समाख्यातःपर्जन्योदेवतामता । पङ्क्तिश्छन्द.समाख्यातंसमानायचपूर्ववत्
पर्जन्यायेदमित्युक्त्वा पष्ठीञ्चवाहुतिंक्षिपेत् । वैश्वानरोमहानग्निर्ऋषिर्वै परिकीर्तितः

गायत्रीच्छन्द आख्यातं देवस्त्वात्मा भवेदपि ।

स्वाहान्तो मन्त्र आख्यातः परमात्मन उच्चरेत् ॥ ४४ ॥

इदं नममचेत्यैवं जातं प्राणाग्निहोत्रकम् । एतज्ज्ञात्वा विधिं कृत्वा ब्रह्मभूयायकल्पते

प्राणाग्निहोत्रविधेयं सङ्क्षेपात्कथिता हि ते ॥ ४६ ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामेकादशस्कन्धे
वैश्वदेवादिविधिनिरूपणं नामद्वाविंशोऽध्यायः ॥ २२ ॥

# त्रयोविंशोऽध्यायः

## तप्तकृच्छ्रादिलक्षणवर्णनम्

### नारायण उवाच

अमृतापिधानमित्येवमुच्चार्य साधकोत्तमः। उच्छिष्टभागभ्यः पात्रान्नं दद्यादन्ते विचक्षणः

ये के चाऽस्मत्कुले जाता दासदास्योऽन्नकाङ्क्षिणः।

ते सर्वे तृप्तिमायान्तु मया दत्तेन भूतले ॥ २ ॥

रौरवेऽपुण्यनिलये पद्मार्बुदनिवासिनाम्। अर्थिनामुदकं दत्तमक्षय्यमुपतिष्ठतु ॥

पवित्रग्रन्थिमुत्सृज्य मण्डले भुवि निक्षिपेत्। पात्रे तु निक्षिपेद्यस्तु स विप्रः पङ्क्तिदूषकः

उच्छिष्टस्तेन संस्पृष्टः शुना शूद्रेण च द्विजः। उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति

अनुच्छिष्टेन संस्पृष्टैः स्नानमेव विधीयते। एकाहुतिप्रदानेन कोटियज्ञफलं लभेत् ॥

पञ्चभिः पञ्चकोटीनां तदनन्तफलं स्मृतम्। प्राणाग्निहोत्रचेत्त्रे योह्यन्नदानं करोति च

दातुश्चैव तु यत्पुण्यं भोक्तुश्चैव तु यत्फलम्। प्राप्नुतस्तौ तदेव द्वावुभौ तौ स्वर्गगामिनौ

स पवित्रकरो भुङ्क्ते यस्तु विप्रो विधानतः। ग्रासे ग्रासे फलं तस्य पञ्चगव्यसमं भवेत्

पूजाकालत्रये नित्यं जपस्तर्पणमेव च। होमो ब्राह्मणभुक्तिश्च पुरश्चरणमुच्यते ॥

अधःशयानो धर्मात्मा जितक्रोधो जितेन्द्रियः। लघुमिष्टहिताशी च विनीतः शान्तचेतसा

नित्यं त्रिषवणस्नायी नित्यं स शुभभाषणः। स्त्रीशूद्रपतितव्रात्य नास्तिकोच्छिष्टभाषणम्

चाण्डालभाषणञ्चैव न कुर्यान्मुनिसत्तम ॥ नत्वा नैव च भाषेत जपहोमार्चनादिषु ॥

मैथुनस्य तथाऽऽलापं तद्गोष्ठीमपि वर्जयेत्। कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा

सर्वत्र मैथुनत्यागो ब्रह्मचर्यं प्रचक्षते। राज्ञश्चैव गृहस्थस्य ब्रह्मचर्यमुदाहृतम् ॥

ऋतुस्नातेषु दारेषु सङ्गतिर्वा विधानतः।

संस्कृतायां सवर्णायामृतुं दृष्ट्वा प्रयत्नतः ॥ १६ ॥

रात्रौ तु गमनं कार्यं ब्रह्मचर्यं हरेन्नतत। ऋणत्रयमसंशोध्य त्वनुत्पाद्य सुतानपि ॥

तथायज्ञानिष्टाश्चमोक्षमिच्छन्व्रजत्यधः । अजागलस्य यज्जन्मतज्जन्मश्रुतिचोदितम्
अतः कार्यंतु विप्रेन्द्र! ऋणत्रयविशोधनम् । तेदेवानामृषीणाञ्चपितृणामम्मृणिनस्तथा
ऋषिभ्यो ब्रह्मचर्येण पितृभ्यस्तुतिलोदकैः । मुच्येद्यज्ञेनदेवेभ्यःस्वाश्रमंधर्ममाचरेत्

क्षीराहारी फलाशी वा शाकाशी वा हविष्यभुक् ।

भिक्षाशी वा जपेद्विद्वान्कृच्छ्रचान्द्रायणादिकृत् ॥ २१ ॥

लवणं क्षारमम्लञ्च गृञ्जनं कांस्यभोजनम् । ताम्बूलञ्च द्विभुक्तञ्चदुष्टवासः प्रमत्तनम्
श्रुतिस्मृतिविरोधञ्च जपं रात्रौ विवर्जयेत् । वृथानकालं गमयेद्द्यूतस्त्रीस्वापवादतः
गमयेद्देवतापूजास्तोत्रागमविलोकनैः । भूशय्या ब्रह्मचारित्वं मौनचर्या तथैव च ॥
नित्यं त्रिषवणस्नानं शूद्रकर्मविवर्जनम् । नित्यपूजानित्यदानमानन्दस्तुतिकीर्तनम्
नैमित्तिकार्चनञ्चैव विश्वासो गुरुदेवयोः । जपनिष्ठस्य धर्मायै द्वादशैते सुसिद्धिदाः
नित्यंसूर्यमुपस्थायतस्यचाभिमुखोजपेत् । देवताप्रतिमादौवावह्नौवाऽभ्यर्च्यतन्मुखः
स्नानपूजाजपध्यानहोमतर्पणतत्परः । निष्कामोदेवतायाञ्च सर्वकर्मनिवेदकः ॥ २८ ॥
एवमादींश्च नियमान्पुरश्चरणकृच्चरेत् । तस्माद्द्विजः प्रसन्नात्मा जपहोमपरायणः ॥
तपस्यध्ययनेयुक्तो भवेद्भूतानुकम्पकः । तपसा स्वर्गमाप्नोति तपसा विन्दतेमहत्
तपोयुक्तस्य सिद्ध्यन्ति कर्माणि नियतात्मनः । विद्वेषणंसंहरणं मारणंरोगनाशनम्
येन येनाऽथ ऋषिणा यदर्थंदेवताः स्तुताः । ससकामःसमृद्धयै ततेषांतेषांतथातथा

तानि कर्माणि वक्ष्यामि विधानानि च कर्मणाम् ।

पुरश्चरणमादौ च कर्मणां सिद्धिकारकम् ॥ ३३ ॥

स्वध्यायाभ्यसनस्यादौप्राजापत्यंचरेद्द्विजः । केशश्मश्रुलोमनावापयित्वाततःशुचिः
तिष्ठेदहनि रात्रौतुशुचिरासीत वाग्यतः । सत्यवादीपवित्राणिजपेद्व्याहृतयस्तथा

ॐकाराद्यास्तु ता जप्त्वा सावित्रीञ्च तदित्यृचम् ।

आपोहिष्ठेति सूक्तञ्च पवित्रं पापनाशनम् ॥ ३६ ॥

पुनन्त्यः स्वस्तिमत्यश्चपावमान्यस्तथैवच । सर्वमेतत्प्रयोक्तव्यमादावन्तेचकर्मणाम्

आसहस्रादाशताद्वाप्यादशादथवा जपेत् ।

ओंकारं व्याहृतीस्तिस्रः सावित्रीमथवायुतम् ॥ ३८ ॥

तर्पयित्वाऽद्भिराचार्यानृषींश्छन्ददांसि देवताः। अनार्येणनभाषेतशूद्रेणाऽपिन गर्हितैः नाऽपि चोदक्यया वध्वापतितैर्नान्त्यजैर्नृभिः। नदेवब्राह्मणद्विष्टैर्नाचार्यगुरुनिन्दकः न मातृपितृविद्विष्टैर्नावमन्येत कश्चन। कृच्छ्राणामेव सर्वेषां विधिरुक्तोऽनुपूर्वशः

प्राजापत्यस्य कृच्छ्रस्य तथा सान्तपनस्य च।

पराकस्य च कृच्छ्रस्य विधिश्चान्द्रायणस्य च ॥ ४२ ॥

पञ्चभिः पातकैः सर्वैर्दुष्कृतैश्च प्रमुच्यते। तप्तकृच्छ्रेण सर्वाणिपापानिदहतिक्षणात् त्रिभिश्चान्द्रायणैः पूतोब्रह्मलोकंसमश्नुते। अष्टभिर्देवताः साक्षात्पश्येत वरदास्तदा

छन्दांसि दशभिर्ज्ञात्वा सर्वान्कामान्समश्नुते।

त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ॥ ४५ ॥

त्र्यहं परञ्च नाश्नीयात्प्राजापत्यंचरेद्द्विजः। गोमूत्रंगोमयंक्षीरंदधिःसर्पिकुशोदकम् एकरात्रोपवासश्चकृच्छ्रं सान्तपनं स्मृतम्। एकैकं ग्रासमश्नीयादहानित्रीणिपूर्ववत त्र्यहं चोपवसेदित्थमतिकृच्छ्रं चरेद्द्विजः। एवमेवत्रिभिर्युक्तंमहासान्तपनंस्मृतम् तप्तकृच्छ्रंचरन्विप्रो जलक्षीरघृतानिलान्। प्रतित्र्यहंपिबेदुष्णान्सकृत्स्नायीसमाहितः नियतस्तु पिबेदापः प्रजापत्यविधिःस्मृतः। यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम् पराकोनाम कृच्छ्रोऽयं सर्वपापप्रणोदनः। एकैकं तु ह्रसेत्पिण्डं कृष्णेशुक्ले च वर्धयेत्

अमावास्यां न भुञ्जीत एवं चान्द्रायणे विधिः।

उपस्पृश्य त्रिषवणमेतच्चान्द्रायण स्मृतम् ॥ ५२ ॥

चतुरः प्रातरश्नीयाद्विप्रः पिण्डान्कृताह्निकः।

चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं स्मृतम् ॥ ५३ ॥

अष्टावष्टौ समश्नीयात्पिण्डान्मध्यंदिने स्थिते।

नियतात्मा हविष्यस्य यतिचान्द्रायणं व्रतम् ॥ ५४ ॥

एतद्रुद्रास्तथादित्या वसवश्च चरन्ति हि। सर्वे कुशलिनो देवा मरुतश्च भृगा सह एकैकंसप्तरात्रेणपुनातिविधिवत्कृतम। त्वगसृक्पिशितास्थीनिमेदोमज्जावसास्तथा

एकैकं सप्तरात्रेण शुद्ध्यत्येव न संशयः । एभिर्व्रतैर्विपूतात्मा कर्म कुर्वीत नित्यशः
एवंशुद्धस्यकर्माणिसिद्ध्यन्त्येवनसंशयः । शुद्धात्माकर्मकुर्वीतसत्यवादीजितेन्द्रियः
इष्टान्कामांस्ततःसर्वान्सम्प्राप्नोति न संशयः । त्रिरात्रमेवोपवसेद्रहितः सर्वकर्मणा
त्रीणि नक्तानि वा कुर्यात्ततः कर्म समारभेत् । एवं विधानं कथितं पुरश्चर्याफलप्रदम्
गायत्र्याश्च पुरश्चर्या सर्वकामप्रदायिनी । कथिता तव देवर्षे! महापापविनाशिनी ॥
आदौ कुर्याद्व्रतं मन्त्री देहशोधनकारकम् । पुरश्चर्यांततःकुर्यात्समस्तफलभाग्भवेत्
इति ते कथितं गुह्यं पुरश्चर्याविधानकम् । एतत्परस्मै नोवाच्यंश्रुतिसारंयतःस्मृतम्

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामेकादशस्कन्धे नारायणनारदसम्वादे तप्तकृच्छ्रादिलक्षणवर्णनंनाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

# चतुर्विंशोऽध्यायः

## सदाचारनिरूपणम्

**नारद उवाच**

नारायणमहाभागगायत्र्यास्तुसमासतः । शान्त्यादिकान्प्रयोगांस्तुवदस्वकरुणानिधे

**नारायण उवाच**

अतिगुह्यमिदं पृष्टं त्वया ब्रह्मतनूद्भव !। न कस्याऽपि प्र वक्तव्यं दुष्टाय पिशुनाय च
अथशान्तिःपयोक्ताभिःसमिद्भिर्जुहुयाद्द्विजः शमीसमिद्भिःशाम्यन्ति नरोगग्रहादयः
आर्द्राभिःक्षीरवृक्षस्यसमिद्भिर्जुहुयाद्द्विजः । जुहुयाच्छकलैर्वाऽपिभूतरोगादिशान्तये
जलेनतर्पयेत्सूर्यंपाणिभ्यांशान्तिमाप्नुयात् । जानुदघ्नेजलेजप्त्वासर्वान्दोषाञ्छमंनयेत्
कण्ठदघ्ने जले जप्त्वा मुच्येत्प्राणान्तिकाद्भयात् ।
सर्वेभ्यः शान्तिकर्मभ्यो निमज्याऽप्सु जपः स्मृतः ॥ ६ ॥
सौवर्णेराजतेवाऽपिपात्रेताम्रमयेऽपि वा । क्षीरवृक्षमयेवाऽपिनिर्व्रणे मृण्मयेऽपि वा

सहस्रं पञ्चगव्येन हुत्वा सुज्वलितेऽनले। क्षीरवृक्षमयैः काष्ठैः शेषं सम्पादयेच्छनैः

प्रत्याहुति स्पृशञ्जप्त्वा सहस्रं पात्रसंस्थितम्।

तेन तं प्रोक्षयद्देशं कुशैर्मन्त्रमनुस्मरन्॥ ६॥

बलि किरंस्ततस्तस्मिन्ध्यायेत्त परदेवताम्। अभिचारसमुत्पन्ना कृत्यापापञ्चनश्यति देवभूतपिशाचाद्यान् यद्येवं कुरुते वशे। गृहं ग्रामं पुरं राष्ट्रं सर्वं तेभ्यो विमुच्यते निखने मुच्यतेतेभ्योलिखनेमध्यतोऽपि च। मण्डलेशूलमालिख्यपूर्वोक्तेचक्रमेऽपिवा अभिमन्त्र्य सहस्रं तन्निखनेत्सर्वशान्तये। सौवर्णं राजतंवाऽपिकुम्भं ताम्रमयंचवा मृण्मयं वानवंदिव्यं सूत्रवेष्टितमव्रणम्। स्थण्डिलेसैकतेस्थाप्यपूरयेन्मन्त्रविज्जलैः दिग्भ्य आहृत्य तीर्थानिचतसृभ्योद्विजोत्तमैः। एलाचन्दनकर्पूरजातीपाटलमल्लिकाः

बिल्वपत्रं तथा कान्तां देवींव्रीहियवांस्तिलान्।

सर्षपान्क्षीरवृक्षाणां प्रवालानि च निक्षिपेत्॥ १६॥

सर्वाण्यभिविधायैवं कुशकूर्चसमन्वितम्। स्नातःसमाहितोविप्रःसहस्रंमन्त्रयेद्बुधः दिक्षु सौरानधीयीरन्मन्त्रान्विप्रास्त्रयीविदः। प्रोक्षयेत्पाययेदेनं नीरंतेनाभिषिञ्चयेत् भूतरोगाभिचारेभ्यः स निर्मुक्तः सुखीभवेत्। अभिषेकेणमुच्येतमृत्योरास्यगतोनरः अवश्यं कारयेद्विद्वान्राजा दीर्घजिजीविषुः। गावो देयाश्चऋत्विग्भ्यअभिषेके शतंमुने! दक्षिणा येन वा तुष्टिर्यथा शक्त्याऽथवा भवेत्। जपेदश्वत्थमालभ्यमन्दवारेशतंद्विजः

भूतरोगाभिचारेभ्यो मुच्यते महतो भयात्।

गुडूच्याः पर्वविच्छिन्नाः पयोक्ता जुहुयाद्द्विजः॥ २२॥

एवं मृत्युञ्जयो होमः सर्वव्याधिविनाशनः। आम्रस्य जुहुयात्पत्रैः पयोक्तैर्ज्वरशान्तये वचाभिः पयसाक्ताभिः क्षयं हुत्वाविनाशयेत्। मधुत्रितयहोमेनराजयक्ष्माविनश्यति

निवेद्य भास्करायाऽन्नं पायसं होमपूर्वकम्।

राजयक्ष्माभिभूतञ्च प्राशयेच्छान्तिमाप्नुयात्॥ २५॥

लताः पर्वसु विच्छिद्यसोमस्यजुहुयाद्द्विजः। सोमेसूर्येणसंयुक्तेपयोक्ताःक्षयशान्तये कुसुमैः शंखवृक्षस्यहुत्वाकुष्ठंविनाशयेत्। अपस्मारविनाशःस्यादपामार्गस्यतण्डुलैः

क्षीरवृक्षसमिद्धोमादुन्मादोऽपि विनश्यति । औदुम्बरसमिद्धोमादतिमेहः क्षयंव्रजेत्
प्रमेहं शमयेद्धुत्वा मधुनेक्षुरसेन वा । मधुत्रितयहोमेन नयेच्छान्ति मसूरिकाम् ॥२६
कपिलासर्पिषा हुत्वानयेच्छान्तिमसूरिकाम् । उदुम्बरघटाऽश्वत्थैर्गांगजाभ्वामयंहरेत्
पिपीलिमधुवल्मीके गृहे जाते शतं शतम् । शमीसमिद्भिरन्नेन सर्पिषा जुहुयाद्द्विजः
तदुत्थं शान्तिमायाति शेषैस्तत्र बलिं हरेत् । अभ्रस्तनितभूकम्पालक्ष्यादौवनवेतसः
सप्ताहं जुहुयादेवं राष्ट्रे राज्यं सुखीभवेत् । यांदिशंशतजप्तेनलोष्ठेनाऽभिप्रताडयेत्
ततोऽग्निमारुतारिभ्यो भयं तस्य विनश्यति । मनसैवजपेदेनांबद्धोमुच्येतबन्धनात्

भूतरोगविषादिभ्यः स्पृशञ्जप्त्वा विमोचयेत् ।
भूतादिभ्यो विमुच्येत जलं पीत्वाऽभिमन्त्रितम् ॥ ३५ ॥

अभिमन्त्र्यशतंभस्मन्यसेद्भूतादिशान्तये । शिरसाधारयेद्भस्ममन्त्रयित्वातदित्यृचा

सर्वव्याधिविनिर्मुक्तः सुखी जीवेच्छतं समाः ।
अशक्तः कारयेच्छान्ति विप्रं दत्त्वा तु दक्षिणाम् ॥ ३७ ॥
अथ पुष्टिं श्रियं लक्ष्मीं पुष्पैर्हुत्वाऽऽप्नुयाद् द्विजः ।
श्रीकामो जुहुयात्पद्मै रक्तैः श्रियमवाप्नुयात् ॥ ३८ ॥

हुत्वाश्रियमवाप्नोतिजातीपुष्पैर्नवैःशुभैः । शालितण्डुलहोमेनश्रियमाप्नोतिपुष्कलाम्
समिद्भिर्बिल्ववृक्षस्यहुत्वाश्रियमवाप्नुयात् । बिल्वस्यशकलैर्हुत्वापत्रैःपुष्पैःफलैरपि
श्रियमाप्नोति परमां मूलस्यशकलैरपि । समिद्भिर्बिल्ववृक्षस्य पायसेन च सर्पिषा
शतं शतं च सप्ताहं हुत्वाश्रियमवाप्नुयात् । लाजैस्त्रिमधुरोपेतैर्होमेकन्यामवाप्नुयात्
अनेन विधिना कन्यावरमाप्नोतिवाञ्छितम् । रक्तोत्पलशतंहुत्वासप्ताहंहेमचाप्नुयात्

सूर्यबिम्बे जलं हुत्वा जलस्थं हेमचाऽऽप्नुयात् ।
अन्नं हुत्वाऽऽप्नुयादन्नं व्रीहीन्व्रीहिपतिर्भवेत् ॥ ४४ ॥

करीषचूर्णैर्वत्सस्य हुत्वा पशुमवाप्नुयात् । प्रियङ्गुपायसाज्यैश्चभवेद्धोमादिभिःप्रजा
निवेद्य भास्करायाऽन्नं पायसं होमपूर्वकम् । भोजयेत्तदृतुस्नातां पुत्रं परमवाप्नुयात्

सप्ररोहाभिरार्द्राभिराहुर्हुत्वा समाप्नुयात् ।

समिद्भिः क्षीरवृक्षस्य हुत्वाऽऽयुषमावाप्नुयात् ॥ ४७ ॥
सप्ररोहाभीरार्द्राभिरक्ताभिर्मधुरत्रयैः । व्रीहीणां च शतंहुत्वाहेमवाऽऽयुरवाप्नुयात्
सुवर्णकुड्मलं हुत्वा शतमायुरवाप्नुयात् । दूर्वाभिःपयसावाऽपिमधुनासर्पिषाऽपिवा
शतं शतं च सप्ताहमपमृत्युं व्यपोहति । शमीसमिद्भिरन्नेन पयसा वा च सर्पिषा ॥
शतं शतं च सप्ताहमपमृत्युं व्यपोहति । न्यग्रोधसमिधो हुत्वा पायसं होमयेत्ततः
शतं शतं चच सप्ताहमपमृत्युं व्यपोहति । क्षीराहारोजपेन्मृत्योःसप्ताहाद्विजयीभवेत्
अनश्नन्वाग्यतोजप्त्वात्रिरात्रंमुच्यतेयमात् । निमज्याप्सुजपेदेवंसद्योमृत्योर्विमुच्यते
जपेद्बिल्वं समाश्रित्य मासं राज्यमवाप्नुयात् ।
बिल्वं हुत्वाऽऽप्नुयाद्राज्यं समूलफलपल्लवम् ॥ ५४ ॥
हुत्वा पद्मशतं मासं राज्यमाप्नोत्यकण्टकम् ।
यवागूं ग्राममाप्नोति हुत्वा शालिसमन्वितम् ॥ ५५ ॥
अश्वत्थसमिधोहुत्वायुद्धादौजयमाप्नुयात् । अर्कस्यसमिधोहुत्वासर्वत्रविजयीभवेत
संयुक्तैः पयसा पत्रैः पुष्पैर्वा वेतसस्य च । पायसेन शतं हुत्वा सप्ताहंवृष्टिमाप्नुयात्
नाभिदघ्ने जले जप्त्वा सप्ताहंवृष्टिमाप्नुयात् । जलेभस्मशतंहुत्वामहावृष्टिंनिवारयेत्
पालाशाभिरवाप्नोति समिद्भिर्ब्रह्मवर्चसम् । पलाशकुसुमैर्हुत्वासर्वमिष्टमवाप्नुयात्
पयो हुत्वाऽऽप्नुयान्मेधामाज्यं बुद्धिमवाप्नुयात् ।
अभिमन्त्र्य पिबेद् ब्राह्मं रसं मेधामवाप्नुयात् ॥ ६० ॥
पुष्पहोमे भवेद्वासस्तन्तुभिस्तद्विधं पटम् । लवणं मधुसम्मिश्रं हुत्वेष्टं वशमानयेत्
नयेदिष्टं वशंहुत्वालक्ष्मीपुष्पैर्मधुप्लुतैः । नित्यमञ्जलिनाऽन्मानमभिपिञ्चेज्जलेस्थितः
मतिमारोग्यमायुष्यमग्र्यं स्वास्थ्यमवाप्नुयात् ।
कुर्याद्विप्रोऽन्यमुद्दिश्य सोऽपि पुष्टिमवाप्नुयात् ॥ ६३ ॥
अथ चारुविधिर्मासं सहस्रं प्रत्यहं जपेत् । आयुष्कामःशुचौदेशेप्राप्नुयादायुरुत्तमम्
आयुरारोग्यकामस्तु जपेन्मासद्वयं द्विजः । भवेदायुष्यमारोग्यंश्रियैमासत्रयं जपेत्
आयुःश्रीपुत्रदाराद्याश्चतुर्भिश्चयशोजपात् । पुत्रदाराऽऽयुरारोग्यश्रियंविद्याञ्च पञ्चभिः

एवमेवोत्तरान्कामान्मासैरेवोत्तरैर्व्रजेत् । एकपादोजपेदूर्ध्वबाहुः स्थित्वा निराश्रयः
मासं शतत्रयं विप्रःसर्वान्कामानवाप्नुयात् । एवं शतोत्तरंजप्त्वासहस्रंसर्वमाप्नुयात्
रुद्ध्वाप्राणमपानञ्च जपेन्मासं शतत्रयम् । यदिच्छेत्तदवाप्नोतिसहस्रात्परमाप्नुयात्
एकपादो जपेदूर्ध्वबाहू रुद्ध्वाऽनिलं वशः । मासंशतमाप्नोतियदिच्छेदितिकौशिकः
एवंशतत्रयंजप्त्वासहस्रंसर्वमाप्नुयात् । निमज्ज्याऽऽप्सुजपेन्मासंशतमिष्टमवाप्नुयात्
एवं शतत्रयं जप्त्वा सहस्रं सर्वमाप्नुयात् । एकपादो जपेदूर्ध्वबाहूरुद्ध्वा निराश्रयः
नक्तमश्नन्हविष्यान्नं वत्सराहृषितामियात् । गौरमोघा भवेदेवंजप्त्वासम्वत्सरद्वयम्
त्रिवत्सरं जपेदेवं भवेत्त्रैकालदर्शनम् । आयाति भगवान्देवश्चतुः सम्वत्सरं जपेत् ॥
पञ्चभिर्वत्सरैरेवमणिमादिगुणोभवेत् । एवंषड्वत्सरं जप्त्वाकामरूपित्वमाप्नुयात्
सप्तभिर्वत्सरैरेवममरत्वमवाप्नुयात् । मनुत्वं नवभिः सिद्धमिन्द्रत्वं दशभिर्भवेत् ॥

एकादशभिराप्नोति प्राजापत्यं सुवत्सरैः ।
ब्रह्मत्वं प्राप्नुयादेवं जप्त्वा द्वादशवत्सरान् ॥ ७७ ॥

एतेनैव जितालोकास्तपसा नारदादिभिः । शाकमन्ये परे मूलं फलमन्ये पयः परे ॥
घृतमन्ये परे सोममपरे चरुवृत्तयः । ऋषयः पक्षमश्नन्ति केचिद्भैक्ष्याशिनोऽहनि ॥
हविष्यमपरेऽश्नन्तः कुर्वन्त्येव परन्तपः । अथ शुद्ध्यै रहस्यानांत्रिसहस्रञ्जपेद्द्विजः

मासं शुद्धो भवेत्स्तेयात्सुवर्णस्य द्विजोत्तमः ।
जपेन्मासं त्रिसाहस्रं सुरापः शुद्धिमाप्नुयात् ॥ ८१ ॥

मासंजपेत्त्रिसाहस्रंशुचिःस्याद्गुरुतल्पगः । त्रिसहस्रंजपेन्मासंकुटींकृत्वावनेवसन्
ब्रह्महा मुच्यते पापादितिकौशिकभाषितम् । द्वादशाहंनिमज्ज्याप्सुसहस्रंप्रत्यहंजपेत्
मुच्येरन्नंहसः सर्वे महापातकिनोद्विजाः । त्रिसाहस्रञ्जपेन्मासम्प्राणानायम्यवाग्यतः
महापातकयुक्तो वा मुच्यते महतो भयात् । प्राणायामसहस्रेणब्रह्महाऽपिविशुध्यति
षट्कृत्वस्त्वभ्यसेदूर्ध्वं प्राणापनौसमाहितः । प्राणायामो भवेदेष सर्वपापप्रणाशनः
सहस्रमभ्यभसेन्मासंक्षितिपःशुचितामियात् । द्वादशाहंत्रिसाहस्रञ्जपेद्गोवधेद्विजः
अगम्याऽऽगमनस्तेयहननाभक्ष्यभक्षणे । दशसाहस्रमभ्यस्तागायत्री शोधयेद् द्विजम्

प्राणायामशतं कृत्वा मुच्यते सर्वकिल्बिषात् । सर्वेषामेव पापानां सङ्करे सतिशुद्धये
सहस्रमभ्यसेन्मासं नित्यजापी वने वसन् । उपवाससमं जप्यं त्रिसहस्रंतदित्यृचम्

चतुर्विंशतिसाहस्रमभ्यस्तात्कृच्छ्रसञ्ज्ञिता ।
चतुःषष्टि सहस्राणि चान्द्रायणसमानि तु ॥ ६१ ॥
शतकृत्वोऽभ्यसेन्नित्यं प्राणानायम्य सन्ध्ययोः ।
तदित्यृचमवाप्नोति सर्वपापक्षयं परम् ॥ ६३ ॥

निमज्ज्याऽप्सुजपेन्नित्यंशतकृत्वस्तदित्यृचम् । ध्यायन्देवींसूर्यरूपांसर्वपापैःप्रमुच्यते

इति ते सम्यगाख्याताः शान्तिशुद्ध्यादिकल्पनाः ।
रहस्यातिरहस्याश्च गोपनीयास्त्वया सदा ॥ ६४ ॥

इति सङ्क्षेपतः प्रोक्तःसदाचारस्यसङ्ग्रहः । विधिनाचरणादस्यमायादुर्गाप्रसीदति

नैमित्तिकञ्च नित्यञ्च काम्यं कर्म यथाविधि ।
आचरेन्मनुजः सोऽयं भुक्तिमुक्तिफलाप्तिभाक् ॥ ६६ ॥

आचारः प्रथमो धर्मो धर्मस्य प्रभुरीश्वरी । इत्युक्तःसर्वशास्त्रेषु सदाचारफलम्महत् ॥
आचारवान्सदापूतः सदैवाऽऽचारवान्सुखी । आचारवान्सदाधन्यःसत्यंसत्यञ्चनारद
देवीप्रसादजनकं सदाचारविधानकम् । यदपि शृणुयान्मर्त्योमहासम्पत्तिसौख्यभाक्
सदाचारेणसिद्धेश्चऐहिकामुष्मिकंसुखम् । तदेवतेमयाप्रोक्तं किमन्यच्छ्रोतुमिच्छसि

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायामेकादशस्कन्धे
सदाचारनिरूपणं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

एकादशस्कन्धः समाप्तः ॥ ११ ॥

---

॥ श्रीगणेशायनमः ॥

* श्रीमहालक्ष्म्यैनमः *

# देवीभागवतपुराणम्

## द्वादशःस्कन्धः

### प्रथमोऽध्यायः

#### गायत्रीविचारवर्णनम्

नारद उवाच

सदाचारविधिर्देव! भवता वर्णितःप्रभो !। तस्याऽप्यतुलमाहात्म्यंसर्वपापविनाशनम्

श्रुतं भवन्मुखाम्भोजच्युतं देवीकथाऽमृतम् ।

व्रतानि यानि चोक्तानि चान्द्रायणमुखानि ते ॥ २ ॥

दुःखसाध्यानि जानीमः कर्तुं साध्यानि तानि च ।

तदस्मात्साम्प्रतं यत्तु सुखसाध्यं शरीरिणाम् ॥ ३ ॥

देवीप्रसादजनकं सुखानुष्ठानसिद्धिदम् । तत्कर्म वदमेस्वामिन्कृपापूर्वं सुरेश्वर !॥ ४॥

सदाचारविधौ यश्च गायत्रीविधिरीरितः ।

तस्मिन्मुख्यतमं किं स्यात्किंवा पुण्याधिकप्रदम् ॥ ५ ॥

ये गायत्रीगता वर्णास्तत्त्वसङ्ख्यास्त्वयेरिताः ।
तेषां के ऋषयः प्रोक्ताः कानि च्छन्दांसि वै मुने ! ॥ ६ ॥
तेषां का देवताः प्रोक्ताः सर्वं कथय मे प्रभो ! । महत्कौतूहलं मे च मानसे परिवर्त्तते ॥

श्रीनारायण उवाच

कुर्यादन्यन्नवा कुर्यादनुष्ठानादिकं तथा । गायत्रीमात्रनिष्ठस्तु कृतकृत्यो भवेद्द्विजः
सन्ध्याऽसु चाऽर्घ्यदानञ्च गायत्रीजपमेव च । सहस्रत्रितयं कुर्वन्सुरैःपूज्योभवेन्मुने!
न्यासान्करोतु वा मा वा गायत्रीमेव चाऽभ्यसेत् ।
ध्यात्वा निर्व्याजया वृत्त्या सच्चिदानन्दरूपिणीम् ॥ १० ॥
यदक्षरैकसंसिद्धेः स्पर्धते ब्राह्मणोत्तमः । हरिशङ्करकञ्जोत्थसूर्यचन्द्रहुताशनैः ॥ ११
अथाऽतः श्रूयतां ब्रह्मन्वर्णऋष्यादिकास्तथा ।
छन्दांसि देवतास्तद्वत्क्रमात्तत्त्वानि चैव हि ॥ १२ ॥
वामदेवोऽत्रिर्वसिष्ठः शुक्रः कण्वः पराशरः ।
विश्वामित्रो महातेजाः कपिलः शौनको महान् ॥ १३ ॥
याज्ञवल्क्योभरद्वाजो जमदग्निस्तपोनिधिः । गौतमो मुद्गलश्चैव वेदव्यासश्च लोमशः
अगस्त्यः कौशिको वत्सःपुलस्त्यो माण्डुकस्तथा ।
दुर्वासास्तपसां श्रेष्ठो नारदः कश्यपस्तथा ॥ १५ ॥
इत्येते ऋषयः प्रोक्ता वर्णानां क्रमशो मुने ! । गायत्र्युष्णिगनुष्टुप्चबृहतीपङ्क्तिरेवच
त्रिष्टुभं जगती चैव तथाऽतिजगती मता ।
शक्वर्यतिशक्वरी च धृतिश्चाऽतिधृतिस्तथा ॥ १७ ॥
विराट्प्रस्तारपङ्क्तिश्चकृतिःप्रकृतिराकृतिः । विकृतिःसंकृतिश्चैवाक्षरपङ्क्तिस्तथैवच
भूर्भुवःस्वरितिच्छन्दस्तथा ज्योतिष्मती स्मृतम् ।
इत्येतानि च छन्दांसि कीर्तितानि महामुने ! ॥ १९ ॥
दैवतानि शृणु प्राज्ञ! तेषामेवानुपूर्वशः । आग्नेयं प्रथमं प्रोक्तं प्राजापत्यं द्वितीयकम्
तृतीयञ्च तथा सौम्यमीशानञ्च चतुर्थकम् । सावित्रं पञ्चमं प्रोक्तं षष्ठमादित्यदैवतम्

बार्हस्पत्यं सप्तमं तु मैत्रावरुणमष्टमम् । नवमं भगदैवत्यं दशमं चार्यमैश्वरम् ॥ २२ ॥
गणेशमेकादशकं त्वाष्ट्रं द्वादशकं स्मृतम् । पौष्णं त्रयोदशं प्रोक्तमैद्राग्नञ्च चतुर्दशम्
वायव्यं पञ्चदशकं वामदेव्यञ्च षोडशम् । मैत्रावरुणिदैवत्यं प्रोक्तं सप्तदशाक्षरम् ॥
अष्टादशं वैश्वदेवमूनविंशं तु मातृकम् । वैष्णवं विंशतितमं वसुदैवतमीरितम् ॥ २५
एकविंशतिसङ्ख्याकं द्वाविंशंरुद्रदैवतम् । त्रयोविंशञ्चकौबेरमाश्विनंतत्त्वसङ्ख्यकम्
चतुर्विंशतिवर्णानां देवतानाञ्च सङ्ग्रहः । कथितः परमश्रेष्ठो महापापैकशोधनः ॥
यदाकर्णनमात्रेण साङ्गं जाप्यफलं मुने !!

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां द्वादशस्कन्धे
गायत्रीविचारो नाम प्रथमोऽध्यायः ॥ १ ॥

---

# द्वितीयोऽध्यायः

## गायत्रीशक्त्यादिकथनम्

### श्रीनारायण उवाच

वर्णानांशक्तयःकाश्चताःशृणुष्वमहामुने !! वामदेवीप्रियासत्याविश्वाभद्राविलासिनी
प्रभावती जया शान्ता कान्ता दुर्गा सरस्वती ।
विद्रुमा च विशालेशा व्यापिनी विमला तथा ॥ २ ॥
तमोऽपहारिणीसूक्ष्मा विश्वयोनिर्जयावशा । पद्मालयापराशोभाभद्राचत्रिपदास्मृता
चतुर्विंशतिवर्णानां शक्तयः समुदाहृताः । अत परं वर्णवर्णान्व्याहरामि यथातथम्
चम्पका अतसीपुष्पसन्निभं विद्रुमं तथा । स्फटिकाकारकञ्चैव पद्मपुष्पसमप्रभम् ॥
तरुणादित्यसङ्काशं शङ्खकुन्देन्दुसन्निभम् । प्रवालपद्मपत्राभं पद्मरागसमप्रभम् ॥ ६ ॥
इन्द्रनीलमणिप्रख्यं मौक्तिकं कुङ्कुमप्रभम् । अञ्जनाभञ्च रक्तञ्च वैदूर्यं क्षौद्रसन्निभम्
हारिद्रकुन्ददुग्धाभं रविकान्तिसमप्रभम् । शुकपुच्छनिभं तद्वच्छतपत्रनिभं तथा ॥

केतकीपुष्पसङ्काशं मल्लिकाकुसुमप्रभम् । करवीरश्च इत्येते क्रमेण परिकीर्तिताः ॥ ६
वर्णाःप्रोक्ताश्च वर्णानां महापापविशोधनाः । पृथिव्यापस्तथातेजोवायुराकाशएवच
गन्धो रसश्च रूपश्च शब्दः स्पर्शस्तथैवच । उपस्थं पायुपादश्चपाणीवागपिचक्रमात्

प्राणं जिह्वा च चक्षुश्च त्वक्श्रोत्रश्च ततः परम् ।
प्राणोऽपानस्तथा व्यानः समानश्च ततः परम् ॥ १२ ॥

तत्त्वान्येतानि वर्णानां क्रमशः कीर्तितानि तु । अतः परं प्रवक्ष्यामिवर्णमुद्राःक्रमेणतु
सुमुखं सम्पुटञ्चैव विततं विस्तृतं तथा । द्विमुखं त्रिमुखञ्चैव चतुःपञ्चमुखं तथा
षण्मुखाऽधोमुखञ्चैव व्यापकाञ्जलिकं तथा । शकटं यमपाशञ्चग्रथितंसन्मुखोन्मुखम्

विलम्बम्मुष्टिकञ्चैव मत्स्यं कूर्मं वराहकम् ।
सिंहाक्रान्तं महाक्रान्तं मुद्गरं पल्लवं तथा ॥ १६ ॥

त्रिशूलयोनी सुरभिश्चाक्षमालाचलिङ्गकम् । अम्बुजञ्चमहामुद्रास्तुर्यरूपाःप्रकीर्तिताः
इत्येताः कीर्तिता मुद्रावर्णानां ते महामुने !। महापापक्षयकराःकीर्तिदा कान्तिदामुने!

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां द्वादशस्कन्धे गायत्रीशक्त्यादिप्रतिपादनंनामद्वितीयोऽध्यायः ॥ २ ॥

---

## तृतीयोऽध्यायः

### गायत्रीमन्त्रकवचवर्णनम्

नारद उवाच

स्वामिन्सर्वजगन्नाथ! संशयोऽस्ति ममप्रभो !। चतुःषष्टिकलाभिज्ञपातकाद्योगविद्वर
मुच्यतेकेन पुण्येन ब्रह्मरूपः कथं भवेत् । देहश्च देवतारूपो मन्त्ररूपो विशेषतः ॥ २॥

कर्म तच्छ्रोतुमिच्छामि न्यासञ्च विधिपूर्वकम् ।
ऋषिश्छन्दोऽधिदैवञ्च ध्यानञ्च विधिवत्प्रभो !॥ ३ ॥

श्रीनारायण उवाच

अस्त्येकं परमं गुह्यं गायत्रीकवचं तथा । पठनाद्धारणान्मर्त्यः सर्वपापैः प्रमुच्यते ॥
सर्वान्कामानवाप्नोति देवीरूपश्च जायते । गायत्रीकवचस्याऽस्य ब्रह्मविष्णुमहेश्वराः
ऋषयोऋग्यजुःसामाऽथर्वश्छन्दांसि नारद !। ब्रह्मरूपादेवतोक्ता गायत्री परमाकला
तद्बीजंभर्गइत्येषाशक्तिरुक्तामनीषिभिः । कीलकञ्चधियःप्रोक्तंमोक्षार्थेविनियोजनम्

चतुर्भिर्हृदयं प्रोक्तं त्रिभिर्वर्णैः शिरः स्मृतम् ।
चतुर्भिः स्याच्छिखा पश्चात्त्रिभिस्तु कवचं स्मृतम् ॥ ८ ॥

चतुर्भिर्नेत्रमुद्दिष्टं चतुर्भिः स्यात्तदस्त्रकम् । अथध्यानंप्रवक्ष्यामिसाधकाभीष्टदायकम्

मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणै-
र्युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम् ।
गायत्रीं वरदाभयाऽङ्कुशकशा शुभ्रं कपालंगुणं
शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥ १० ॥

गायत्री पूर्वतः पातु सावित्री पातु दक्षिणे । ब्रह्मसन्ध्यातु मेपश्चादुत्तरायांसरस्वती
पार्वतीमे मे दिशं रक्षेत्पावकीं जलशायिनी । यातुधानी दिशं रक्षेद्यातुधानभयङ्करी
पावमानीं दिशं रक्षेत्पवमानविलासिनी । दिशं रौद्रीं च मे पातुरुद्राणी रुद्ररूपिणी
ऊर्ध्वंब्रह्माणि (णी) मेरक्षेदधस्ताद्वैष्णवीतथा । एवं दशदिशोरक्षेत्सर्वाङ्गंभुवनेश्वरी
तत्पदं पातुमे पादौ जङ्घेमे सवितुः पदम् । वरेण्यं कटिदेशेतु नाभिं भर्गस्तथैव च
देवस्य मे तद्धृदयं धीमहीति च गल्लयोः । धियः पदञ्च मे नेत्रेयःपदंमे ललाटकम्
नः पातु मे पदं मूर्ध्नि शिखायांमेप्रचोदयात् । तत्पदंपातुमूर्धानंसकारःपातुभालकम्
चक्षुषी तु विकारार्णस्तुकारस्तु कपोलयोः । नासापुटं वकारार्णोरेकारस्तुमुखे तथा
णिकार ऊर्ध्वमोष्ठन्तुयकारस्त्वधरोष्ठकम् । आस्यमध्येभकारार्णोगोंकारश्चिबुकेतथा
देकारःकण्ठदेशेतु वकारःस्कन्धदेशकम् । स्यकारोदक्षिणंहस्तंधीकारोवामहस्तकम्

मकारो हृदयं रक्षेद्धिकार उदरे तथा ।
धिकारो नाभिदेशे तु योकारस्तु कटिं तथा ॥ २१ ॥

गुह्यं रक्षतु योकार ऊरू द्वौ नः पदाक्षरम् । प्रकारोजानुनीरक्षेच्चोकारोजङ्घदेशकम ॥
दकारं गुल्फदेशे तु यकारः पदयुग्मकम् । तकारव्यञ्जनश्चैव सर्वाङ्गम्मे सदाऽवतु ॥
इदं तु कवचं दिव्यं बाधाशतविनाशनम् । चतुः षष्टिकलाविद्यादायकं मोक्षकारकम्
मुच्यते सर्वपापेभ्यः परंब्रह्माऽधिगच्छति । पठनाच्छ्रवणाद्वाऽपिगोसहस्रफलं लभेत्

इति श्रीदेवीभागवतेमहापुराणेऽष्टादशसाहस्र्यां संहितायांद्वादशस्कन्धे
गायत्रीमन्त्रकवचं नाम तृतीयोऽध्यायः ॥ ३ ॥

---

# चतुर्थोऽध्यायः

## गायत्रीहृदयवर्णनम्

नारद उवाच

भगवन्देवदेवेश! भूतभव्यजगत्प्रभो !। कवचञ्च श्रुतं दिव्यं गायत्रीमन्त्रविग्रहम॥१॥
अधुनाश्रोतुमिच्छामि गायत्रीहृदयं परम् । यद्धारणाद्भवेत्पुण्यंगायत्रीजपतोऽखिलम्

श्रीनारायण उवाच

देव्याश्चहृदयं प्रोक्तंनारदाथर्वणेस्फुटम् । तदेवाऽहं प्रवक्ष्यामि रहस्याऽतिरहस्यकम्
विराड्रूपांमहादेवींगायत्रींवेदमातरम् । ध्यात्वातस्यास्त्वथाङ्गेषुध्यायेदेताश्चदेवताः
पिण्डब्रह्माण्डयोरैक्याद्भावयेत्स्वतनौ तथा । देवीरूपे निजे देहे तन्मयत्वायसाधकः
नादेवोऽभ्यर्चयेद्देवमिति वेदविदो विदुः । ततोऽभेदायकाये स्वेभावयेद्देवता इमाः ॥
अथ तत्सम्प्रवक्ष्यामि तन्मयत्वमथो भवेत् ।
गायत्रीहृदयस्याऽस्याऽप्यहमेव ऋषिः स्मृतः ॥ ७ ॥
गायत्रीच्छन्द उद्दिष्टं देवता परमेश्वरी । पूर्वोक्तेन प्रकारेण कुर्यादङ्गानि षट्क्रमात्
आसने विजने देशे ध्यायेदेकाग्रमानसः ॥ ८ ॥

अथाऽर्थन्यासः । द्यौर्मूर्ध्नि दैवतम् । दन्तपङ्क्तावश्विनौ । उभे सन्ध्ये चोष्ठौ । मुखमग्निः । जिह्वा सरस्वती । ग्रीवायां तु बृहस्पतिः । स्तनयोर्वसवोऽष्टौ । बाह्वोर्मरुतः । हृदये पर्जन्यः । आकाशमुदरम् । नाभावन्तरिक्षम् । कट्योरिन्द्राग्नी । जघने विज्ञानघनः प्रजापतिः । कैलाशमलये ऊरू । विश्वेदेवा जान्वोः । जङ्घायां कौशिकः । गुह्यमयने । ऊरू पितरः । पादौ पृथिवी । वनस्पतयोऽङ्गुलीषु । ऋषयो रोमाणि । नखानि मुहूर्तानि । अस्थिषु ग्रहाः । असृङ्मांसमृतवः । सम्वत्सरा वै निमिषम् । अहोरात्रावादित्यश्चन्द्रमाः । प्रवरां दिव्यां गायत्रीं सहस्रनेत्रां शरणमहं प्रपद्ये । ॐ तत्सवितुर्वरेण्याय नमः । ॐ तत्पूर्वाजयाय नमः । तत्प्रातरादित्याय नमः । तत्प्रातरादित्यप्रतिष्ठायैनमः । प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायमधीयानो दिवसकृतं पापं नाशयति । सायं प्रातरधीयानो अपापो भवति । सर्वतीर्थेषु स्नातो भवति । सर्वैर्देवैर्ज्ञातो भवति । अवाच्यवचनात्पूतो भवति । अभक्ष्यभक्षणात्पूतो भवति । अभोज्यभोजनात्पूतो भवति । अचोष्यचोषणात्पूतो भवति । आसाध्यसाधनात्पूतो भवति । दुष्प्रतिग्रहशतसहस्रात्पूतो भवति । सर्वप्रतिग्रहात्पूतोभवति । पङ्क्तिदूषणात्पूतो भवति । अनृतवचनात्पूतो भवति । अथाऽब्रह्मचारी ब्रह्मचारी भवति । अनेनहृदयेनाऽधीतेन क्रतुसहस्रेणेष्टं भवति । षष्टिशतसहस्रगायत्र्या जप्यानि फलानि भवन्ति । अष्टौ ब्राह्मणान्सम्यग्ग्राहयेत् । तस्य-सिद्धिर्भवति । य इदं नित्यमधीयानो ब्राह्मणः प्रातः शुचिः सर्वपापैः प्रमुच्यत इति । ब्रह्मलोके महीयते । इत्याह भगवान् श्रीनारायणः ।

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां द्वादशस्कन्धे गायत्रीहृदयं नाम चतुर्थोऽध्यायः ॥ ४ ॥

# पञ्चमोऽध्यायः

## श्रीगायत्रीस्तोत्रवर्णनम्

**नारद उवाच**

भक्तानुकम्पन्सर्वज्ञ! हृदयंपापनाशनम् । गायत्र्याःकथितंतस्माद्गायत्र्याःस्तोत्रमीरय

**श्रीनारायण उवाच**

आदिशक्तेजगन्मातर्भक्तानुग्रहकारिणि । सर्वत्रव्यापिकेऽनन्तेश्रीसन्ध्येतेनमोऽस्तुते

त्वमेवसन्ध्यागायत्रीसावित्रीचसरस्वती । ब्राह्मीचवैष्णवीरौद्रीरक्ताश्वेतासितेतरा

प्रातर्बालाच मध्याह्ने यौवनस्थाभवेत्पुनः । वृद्धा सायं भगवतीचिन्त्यतेमुनिभिःसदा

हंसस्थागरुडारूढा तथावृषभवाहिनी । ऋग्वेदाध्यायिनीभूमौ दृश्यते यातपस्विभिः

यजुर्वेदं पठन्तीच अन्तरिक्षे विराजते । सासामगाऽपि सर्वेषु भ्राम्यमाणा तथाभुवि

रुद्रलोकं गता त्वंहिविष्णुलोकनिवासिनी । त्वमेवब्रह्मणोलोकेऽमर्त्यानुग्रहकारिणी

सप्तर्षिप्रीतिजननीमाया बहुवरप्रदा । शिवयोः करनेत्रोत्था ह्यश्रुस्वेदसमुद्भवा ॥ ८ ॥

आनन्दजननीदुर्गादशधा परिपठ्यते । वरेण्या वरदाचैव वरिष्ठा वरवर्णिनी ॥ ९ ॥

गरिष्ठाचवराहीच वरारोहा च सप्तमी । नीलगङ्गातथा सन्ध्या सर्वदा भोगमोक्षदा

भागीरथी मर्त्यलोके पाताले भोगवत्यपि ।
त्रिलोकवाहिनी देवी स्थानत्रयनिवासिनी ॥ ११ ॥
भूर्लोकस्था त्वमेवाऽसि धरित्री शोकधारिणी ।
भुवो लोके वायुशक्तिः स्वर्लोके तेजसां निधिः ॥ १२ ॥

महर्लोके महासिद्धिर्जनलोके जनेत्यपि ।तपस्विनी तपोलोके सत्यलोकेतु सत्यवाक्

कमलाविष्णुलोके च गायत्री ब्रह्मलोकदा । रुद्रलोकेस्थितागौरीहरार्धाङ्गनिवासिनी

अहमो महतश्चैव प्रकृतिस्त्वं हि गीयसे । साम्यावस्थात्मिकात्वंहिशबलब्रह्मरूपिणी

ततः परा पराशक्तिः परमा त्वं हि गीयसे ।

इच्छाशक्तिः क्रियाशक्तिर्ज्ञानशक्तिस्त्रिशक्तिदा ॥ १६ ॥
गङ्गा च यमुना चैव विपाशा च सरस्वती । सरयूर्देविका सिन्धुर्नर्मदैरावती तथा ॥
गोदावरी शतद्रूश्च कावेरीदेवलोकगा । कौशिकीचन्द्रभागाचवितस्ता च सरस्वती
गण्डकी तापिनी तोया गोमती वेत्रवत्यपि । इडा च पिङ्गलाचैवसुषुम्नाचतृतीयका
गान्धारीहस्तिजिह्वा च पूषापूषातथैव च । अलम्बुसा कुहूश्चैव शङ्खिनीप्राणवाहिनी
नाडी च त्वं शरीरस्था गीयसे प्राक्तनैर्बुधैः ।
हृत्पद्मस्था प्राणशक्तिः कण्ठस्था स्वप्ननायिका ॥ २१ ॥
तालुस्था त्वं सदाधारा बिन्दुस्था बिन्दुमालिनी ।
मूले तु कुण्डलीशक्तिर्व्यापिनी केशमूलगा ॥ २२ ॥
शिखामध्यासनात्वंहिशिखाग्रेतुमनोन्मनी । किमन्यद्बहुनोक्तेनयत्किञ्चिज्जगतीत्रये
तत्सर्वंत्वंमहादेविश्रियैसन्ध्येनमोऽस्तुते । इतीदंकीर्तितंस्तोत्रंसन्ध्यायांबहुपुण्यदम्
महापापप्रशमनं महासिद्धिविधायकम् । यइदं कीर्तयेत्स्तोत्रं सन्ध्याकालेसमाहितः
अपुत्रः प्राप्नुयात्पुत्रं धनार्थी धनमाप्नुयात् । सर्वतीर्थतपोदानयज्ञयोगफलं लभेत ॥
भोगान्भुक्त्वा चिरंकालमन्ते मोक्षमवाप्नुयात ।
तपस्विभिः कृतं स्तोत्रं स्नानकाले तु यः पठेत् ॥ २७ ॥
यत्रकुत्रजलेमग्नःसन्ध्यामज्जनजंफलम् । लभते नात्रसन्देहःसन्देहः सत्यंसत्यंचनारद
शृणुयाद्योऽपितद्भक्त्यासतु पापात्प्रमुच्यते । पीयूषसदृशंवाक्यंसन्ध्योक्तं नारदेरितम्
इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां द्वादशस्कन्धे
श्रीगायत्रीस्तोत्रं नाम पञ्चमोऽध्यायः ॥ ५ ॥

# षष्ठोऽध्यायः

## गायत्रीसहस्रनामस्तोत्रवर्णनम्

नारद उवाच

भगवन्सर्वधर्मज्ञ! सर्वशास्त्रविशारद !। श्रुतिस्मृतिपुराणानां रहस्यं त्वन्मुखाच्छ्रुतम्

सर्वपापहरं देव येन विद्या प्रवर्तते । केन वा ब्रह्मविज्ञानं किं नु वा मोक्षसाधनम् ॥

ब्राह्मणानांगतिः केन केन वामृत्युनाशनम् । ऐहिकामुष्मिकफलं केन वा पद्मलोचन!॥

वक्तुमर्हस्यशेषेण सर्वं निखिलमादितः ।

श्रीनारायण उवाच

साधु साधु महाप्राज्ञ! सम्यक्पृष्टं त्वयाऽनघ !॥ ४ ॥

शृणु वक्ष्यामियत्नेनगायत्र्यष्टसहस्रकम् । नाम्नांशुभानां दिव्यानां सर्वपापविनाशनम्

सृष्ट्यादौ यद्भगवता पूर्वं प्रोक्तं ब्रवीमि ते । अष्टोत्तरसहस्रस्य ऋषिर्ब्रह्माप्रकीर्तितः ॥

छन्दोऽनुष्टुप्तथादेवीगायत्रीदेवतास्मृता ।हलोबीजनानितस्यैवस्वराःशक्तयईरिताः

अङ्गन्यासकरन्यासावुच्येते मातृकाक्षरैः । अथध्यानं प्रवक्ष्यामि साधकानाहितायवै

रक्तश्वेतहिरण्यनीलधवलैर्युक्तां त्रिनेत्रोज्ज्वलां

रक्तां रक्तनवस्रजं मणिगणैर्युक्तां कुमारीमिमाम् ।

गायत्रीं कमलासनां करतलव्यानद्धकुण्डाम्बुजां

पद्माक्षीञ्च वरस्रजञ्च दधतीं हंसाधिरूढा भजे ॥ १ ॥

अचिन्त्यलक्षणाऽव्यक्ताप्यर्थमातृमहेश्वरी । अमृतार्णवमध्यस्थाप्यजिताचापराजिता

अणिमादिगुणाधाराप्यर्कमण्डलसंस्थिता । अजराऽजाऽपराधर्मा अक्षसूत्रधराऽधरा

अकारादिक्षकारान्ताप्यरिषड्वर्गभेदिनी । अञ्जनाद्रिप्रतीकाशाऽप्यञ्जनाद्रिनिवासिनी

अदितिश्चाऽजपा विद्याप्यरविन्दनिभेक्षणा ।

अन्तर्बहिः स्थिता विद्या ध्वंसिनी चाऽन्तरात्मिका ॥ १२ ॥

अजाचाऽजमुखावासाऽप्यरविन्दनिभानना । अर्धमात्राऽर्थदानज्ञाऽप्यरिमण्डलमर्दिनी

असुरघ्नी ह्यमावास्याप्यलक्ष्मीघ्न्यन्त्यजार्चिता ।

आदिलक्ष्मीश्चाऽऽदिशक्तिराकृतिश्चायतानना ॥ १५ ॥

आदित्यपदवीचाराप्यादित्यपरिसेविता । आचार्यावर्तनाचाराप्यादिमूर्तिनिवासिनी

आग्नेयी चामरी चाऽऽद्या चाऽऽराध्या चाऽऽसनस्थिता ।

आधारनिलयाधारा चाकाशान्तनिवासिनी ॥ १७ ॥

आद्याक्षरसमायुक्ता चान्तराकाशरूपिणी । आदित्यमण्डलगताचान्तरध्वन्तनाशिनी

इन्दिरा चेष्टदा चेष्टा चेन्दीवरनिभेक्षणा । इरावती चेन्द्रपदा चेन्द्राणीचेन्दुरूपिणी

इक्षुकोदण्डसंयुक्ता चेषुसन्धानकारिणी । इन्द्रनीलसमाकारा चेडापिङ्गलरूपिणी ॥

इन्द्राक्षीचेश्वरी देवी चेहात्रयविवर्जिता । उमाचोषा ह्युडुनिभा उर्वारुकफलानना ॥

उडुप्रभाचोडुमता ह्युडुपाह्युडुमध्यगा । ऊर्ध्वा चाप्यूर्ध्वकेशीचाप्यूर्ध्वाधोगतिभेदिनी

ऊर्ध्वबाहुप्रिया चोर्मिमाला वाग्ग्रन्थदायिनी । ऋतञ्चर्षिर्ऋतुमतीऋषिदेवनमस्कृता

ऋग्वेदा ऋणहर्त्री च ऋषिमण्डलचारिणी । ऋद्धिदा ऋजुमार्गस्थाऋजुधर्माऋतुप्रदा

ऋग्वेदनिलया ऋज्वी लुप्तधर्मप्रवर्तिनी ।

लूतारिवरसम्भूता लूतादिविषहारिणी ॥ २५ ॥

एकाक्षरा चैकमात्रा चैका चैकैकनिष्ठता । ऐन्द्री ह्यैरावतारूढा चैहिकामुष्मिकप्रदा ॥

ओङ्काराह्योषधी चोता चोतप्रोतनिवासिनी । और्वाह्यौषधसम्पन्नाऔपासनफलप्रदा

अण्डमध्यस्थिता देवीचाःकारमनुरूपिणी ।

कात्यायनी कालरात्रिः कामाक्षी कामसुन्दरी ॥ २८ ॥

कमला कामिनी कान्ताकामदाकालकण्ठिनी । करिकुम्भस्तनभराकरवीरसुवासिनी

कल्याणी कुण्डलवती कुरुक्षेत्रनिवासिनी । कुरुविन्ददलाकारा कुण्डलीकुमुदालया

कालजिह्वा करालास्या कालिका कालरूपिणी ।

कमनीयगुणा कान्तिः कलाधारा कुमुद्वती ॥ ३१ ॥

कौशिकीकमलाकाराकामचारप्रभञ्जिनी । कौमारी करुणापाङ्गी ककुबन्ताकरिप्रिया

केसरी केशवनुता कदम्बकुसुमप्रिया । कालिन्दीकालिकाकाञ्चीकलशोद्भवसंस्तुता
काममाता क्रतुमती कामरूपा कृपावती । कुमारी कुण्डनिलया किरातीकीरवाहन
कैकेयी कोकिलालापा केतकी कुसुमप्रिया । कमण्डलुधराकालीकर्मनिर्मूलकारिणी
कलहंसगतिः कक्षा कृतकौतुकमङ्गला । कस्तूरीतिलकाकम्रा करीन्द्रगमना कुहूः ॥
कर्पूरलेपना कृष्णा कपिला कुहराश्रया । कूटस्थाकुधराकम्राकुक्षिस्थाऽखिलविष्टपा
खड्गखेटकरा खर्वाखेचरीखगवाहना । खट्वाङ्गधारिणी ख्याताखगराजोपरिस्थिता
खलघ्नी खण्डितजरा खण्डाख्यानप्रदायिनी । खण्डेन्दुतिलकागङ्गागणेशगुहपूजिता
गायत्रीगोमतीगीतागान्धारीगामलोलुपा । गौतमीगामिनीगाधागन्धर्वाप्सरसेविता
गोविन्दचरणाक्रान्ता गुणत्रयविभाजिता । गन्धर्वी गह्वरी गोत्रागिरीशा गहनागमी
गुहावासा गुणवती गुरुपापप्रणाशिनी । गुर्वी गुणवती गुह्या गोप्तव्यागुणदायिनी
गिरिजा गुह्यमातङ्गी गरुडध्वजवल्लभा । गर्वापहारिणी गोदा गोकुलस्थागदाधरा
गोकर्णनिलयासक्ता गुह्यमण्डलवर्तिनी । घर्मदा घनदा घण्टा घोरदानवमर्दिनी ॥४४
घृणिमन्त्रमयी घोषा घनसम्पातदायिनी । घण्टारवप्रिया घ्राणा घृणिसन्तुष्टकारिणी
घनारिमण्डलाघूर्णा घृताची घनवेगिनी । ज्ञानधातुमयी चर्चा चर्चिता चारुहासिनी
चटुला चण्डिका चित्राचित्रमाल्यविभूषिता । चतुर्भुजाचारुदन्ताचातुरीचरितप्रदा
चूलिकाचित्रवस्त्रान्ताचन्द्रमःकर्णकुण्डला । चन्द्रहासाचारुदात्रीचकोरीचन्द्रहासिनी

चन्द्रिका चन्द्रधात्री च चौरी चौरा च चण्डिका ।
चञ्चद्वाग्वादिनी चन्द्रचूडा चोरविनाशिनी ॥ ४६ ॥

चारुचन्दनलिप्ताङ्गी चञ्चच्चामरवीजिता । चारुमध्या चारुगतिश्चन्दिलाचन्द्ररूपिणी
चारुहोमप्रिया चार्वाचरिता चक्रबाहुका । चन्द्रमण्डलमध्यस्था चन्द्रमण्डलदर्पणा
चक्रवाकस्तनीचेष्टाचित्राचारुविलासिनी । चित्स्वरूपाचन्द्रवतीचन्द्रमाश्चन्दनप्रिया
चोदयित्री चिरप्रज्ञा चातका चारुहेतुकी । छत्रयाता छत्रधरा छाया छन्दःपरिच्छदा

छायादेवी च्छिद्रनखा छन्नेन्द्रियविसर्पिणी ।
छन्दोऽनष्टुप्प्रतिष्ठान्ता छिद्रोपद्रवभेदिनी ॥ ५४ ॥

छेदा छत्रेश्वरी छिन्ना छुरिका छेदनप्रिया। जननी जन्मरहिता जातवेदा जगन्मयी
जाह्नवी जटिला जेत्री जरामरणवर्जिता। जम्बूद्वीपवतीज्वाला जयन्तीजलशालिनी
जितेन्द्रिया जितक्रोधाजितामित्राजगत्प्रिया। जातरूपमयीजिह्वाजानकीजगतीजरा
जनित्री जह्नुतनया जगत्त्रयहितैषिणी। ज्वालामुखी जपवतीज्वरघ्नी जितविष्टपा

जिताक्रान्तमयी ज्वाला जाग्रती ज्वरदेवता।
ज्वलन्ती जलदा ज्येष्ठा ज्याघोषास्फोटदिङ्मुखी ॥ ५६ ॥
जम्भिनी जृम्भणा जृम्भा ज्वलन्माणिक्यकुण्डला।
झिंझिका झणनिर्घोषा झंझामारुतवेगिनी ॥ ६० ॥

झल्लरीवाद्यकुशला ञरूपा ञभुजा स्मृता। टङ्कबाणसमायुक्ता टङ्किनी टङ्कभेदिनी ॥
टङ्कीगणकृताघोषा टङ्कनीयमहोरसा। टङ्कारकारिणी देवी ठठशब्दनिनादिनी ॥६२॥
डामरी डाकिनी डिम्भा डुण्डमारैकनिर्जिता। डामरीतन्त्रमार्गस्था डमड्डमरुनादिनी
डिण्डी रवसहाडिम्भलसत्क्रीडापरायणा। ढुण्ढिविघ्नेशजननीढक्काहस्ताढिलिव्रजा
नित्यज्ञाना निरुपमा निर्गुणा नर्मदा नदी। त्रिगुणा त्रिपदा तन्त्रीतुलसीतरुणातरुः
त्रिविक्रमपदाक्रान्ता तुरीयपदगामिनी। तरुणादित्यसङ्काशा तामसी तुहिनातुरा ॥
त्रिकालज्ञानसम्पन्ना त्रिवली च त्रिलोचना। त्रिशक्तिस्त्रिपुरा तुङ्गा तुरङ्गवदना तथा
तिमिङ्गिलगिलातीव्रात्रिस्रोतातामसादिनी। तन्त्रमन्त्रविशेषज्ञातनुमध्यात्रिविष्टपा

त्रिसन्ध्या त्रिस्तनी तोषासंस्था तालप्रतापिनी।
ताटङ्किनी तुषाराभा तुहिनाचलवासिनी ॥ ६६ ॥

तन्तुजालसमायुक्ता तारहारावलिप्रिया। तिलहोमप्रिया तीर्था तमालकुसुमाकृतिः
तारका त्रियुता तन्वी त्रिशङ्कुपरिवारिता। तलोदरी तिलाभूषा ताटङ्कप्रियवाहिनी
त्रिजटा तित्तिरी तृष्णा त्रिविधा तरुणाकृतिः। तप्तकाञ्चनसंकाशातप्तकाञ्चनभूषणा
त्र्यम्बका त्रिवर्गा च त्रिकालज्ञानदायिनी। तर्पणा तृप्तिदा तृप्ता तामसीतुम्बुरुस्तुता

तार्क्ष्यस्था त्रिगुणाकारा त्रिभङ्गीतनुवल्लरिः।
थात्कारी थारवा थान्ता दोहिनी दीनवत्सला ॥ ७४ ॥

दानवान्तकरी दुर्गा दुर्गासुरनिबर्हिणी । देवरीतिर्दिवारात्रिर्द्रौपदी दुन्दुभिस्वना
देवयानी दुरावासा दारिद्र्योद्भेदिनी दिवा ।
दामोदरप्रिया दीप्ता दिग्वासा दिग्विमोहिनी ॥ ७६ ॥
दण्डकारण्यनिलया दण्डिनी देवपूजिता । देववन्द्या दिविषदा द्वेषिणीदानवाकृतिः
दीनानाथस्तुता दीक्षा दैवतादिस्वरूपिणी । धात्री धनुर्धरा धेनुर्धारिणी धर्मचारिणी
धुरंधरा धराधारा धनदा धान्यदोहिनी । धर्मशीला धनाध्यक्षा धर्मवेदविशारदा ॥
धृतिर्धन्या धृतपदा धर्मराजप्रिया ध्रुवा । धूमावती धूमकेशी धर्मशास्त्रप्रकाशिनी ॥
नन्दा नन्दप्रिया निद्रा नृनुता नन्दनात्मिका । नर्मदा नलिनी नीला नीलकण्ठसमाश्रया
नारायणप्रिया नित्या निर्मला निर्गुणा निधिः ।
निराधारा निरुपमा नित्यशुद्धा निरञ्जना ॥ ८२ ॥
नादबिन्दुकलातीता नादबिन्दुकलात्मिका । नृसिंहिनी नगधरा नृपनागविभूषिता
नरकक्लेशशमनी नारायणपदोद्भवा । निरवद्या निराकारा नारदप्रियकारिणी ॥ ८४ ॥
नानाज्योतिः समाख्याता निधिदा निर्मलात्मिका । नवसूत्रधरा नीतिर्निरुपद्रवकारिणी
नन्दजा नवरत्नाढ्या नैमिषारण्यवासिनी । नवनीतप्रिया नारी नीलजीमूतनिस्वना
निमेषिणी नदीरूपा नीलग्रीवा निशीश्वरी । नामावलिर्निशुम्भघ्नी नागलोकनिवासिनी
नवजाम्बूनदप्रख्या नागलोकाधिदेवता । नूपुराक्रान्तचरणा नरचित्तप्रमोदिनी ॥ ८८
निमग्ना रक्तनयना निर्घातसमनिस्वना । नन्दनोद्याननिलया निर्व्यूहोपरिचारिणी ॥
पार्वती परमोदारा परब्रह्मात्मिकापरा । पञ्चकोशविनिर्मुक्ता पञ्चपातकनाशिनी ॥
परचित्तविधानज्ञा पञ्चिका पञ्चरूपिणी । पूर्णिमा परमा प्रीतिः परतेजःप्रकाशिनी
पुराणी पौरुषी पुण्या पुण्डरीकनिभेक्षणा । पातालतलनिर्मग्ना प्रीता प्रीतिविवर्धिनी
पावनी पादसहिता पेशला पवनाशिनी । प्रजापतिःपरिश्रान्ता पर्वतस्तनमण्डला
पद्मप्रिया पद्मसंस्था पद्माक्षी पद्मसम्भवा । पद्मपत्रा पद्मपदा पद्मिनी प्रियभाषिणी
पशुपाशविनिर्मुक्ता पुरन्ध्री पुरवासिनी । पुष्कला पुरुषा पर्वा पारिजातसुमप्रिया ॥
पतिव्रता पवित्राङ्गी पुष्पहासपरायणा । प्रज्ञावतीसुता पौत्री पुत्रपूज्या पयस्विनी

पट्टिपाशधरा पङ्क्तिः पितृलोकप्रदायिनी । पुराणीपुण्यशीलाचप्रणतार्तिविनाशिनी
प्रद्युम्नजननी पुष्टा पितामहपरिग्रहा । पुण्डरीकपुरावासा पुण्डरीकसमानना ॥ ९८ ॥
पृथुजङ्घा पृथुभुजा पृथुपादा पृथूदरी । प्रवालशोभापिङ्गाक्षी पीतवासाः प्रचापला ॥
प्रसवा पुष्टिदा पुण्या प्रतिष्ठा प्रणवागतिः । पञ्चवर्णापञ्चवाणीपञ्चिका पञ्जरस्थिता
परमाया परज्योतिः परप्रीतिः परागतिः । पराकाष्ठा परेशानी पाविनी पावकद्युतिः
पुण्यभद्रा परिच्छेद्या पुष्पहासा पृथूदरी । पीताङ्गी पीतवसनापीतशय्या पिशाचिनी
पीतक्रिया पिशाचघ्नी पाटलाक्षी पटुक्रिया । पञ्चभक्षप्रियाचारा पूतना प्राणघातिनी
पुन्नागवनमध्यस्था पुण्यतीर्थनिषेविता । पञ्चाङ्गी च पराशक्तिःपरमाह्लादकारिणी

पुष्पकाण्डस्थिता पूषा पोषिताऽखिलविष्टपा ।
पानप्रिया पञ्चशिखा पन्नगोपरिशायिनी ॥ १०५ ॥

पञ्चमात्रात्मिका पृथ्वीपथिकापृथुदोहिनी । पुराणन्यायमीमांसापाटलीपुष्पगन्धिनी
पुण्यप्रजा पारदात्री परमार्गैकगोचरा । प्रवालशोभा पूर्णाशा प्रणवा पल्लवोदरी ॥

फलिनी फलदा फल्गुः फूत्कारी फलकाकृतिः ।
फणीन्द्रभोगशयना फणिमण्डलमण्डिता ॥ १०८ ॥

बालबाला बहुमता बालातपनिभांशुका । बलभद्रप्रिया वन्द्या बडवा बुद्धिसंस्तुता
बन्दीदेवी बिलवती बडिशघ्नी बलिप्रिया । बान्धवीबोधिताबुद्धिर्बन्धूककुसुमप्रिया
बालभानुप्रभाकारा ब्राह्मीब्राह्मणदेवता । बृहस्पतिस्तुता बृन्दा बृन्दावनविहारिणी
बालाकिनी बिलाहारा बिलवासा बहूदका । बहुनेत्रा बहुपदा बहुकर्णाऽवतंसिका ॥
बहुबाहुयुता बीजरूपिणी बहुरूपिणी । बिन्दुनादकलातीता बिन्दुनादस्वरूपिणी
बद्धगोधाङ्गुलित्राणा बदर्याश्रमवासिनी । बृन्दारका बृहत्स्कन्धा बृहतीबाणपातिनी
वृन्दाध्यक्षा बहुनुता वनिता बहुविक्रमा । बद्धपद्मासनासीना बिल्वपत्रतलस्थिता
बोधिद्रुमनिजावासा बडिस्था बिन्दुदर्पणा । बालाबाणासनवती बडवानलवेगिनी
ब्रह्माण्डबहिरन्तःस्था ब्रह्मकङ्कणसूत्रिणी । भवानी भीषणवती भाविनी भयहारिणी
भद्रकाली भुजङ्गाक्षी भारती भारताशया । भैरवी भीषणाकाराभूतिदाभूतिमालिनी

भामिनी भोगनिरता भद्रदा भूरिविक्रमा । भूतवासा भृगुलता भार्गवी भूसुरार्चिता
भागीरथी भोगवती भवनस्थाभिषग्वरा । भामिनीभोगिनीभाषाभवानीभूरिदक्षिणा
भर्गात्मिका भीमवती भवबन्धविमोचिनी । भजनीया भूतधात्री रञ्जिता भुवनेश्वरी
भुजङ्गवलया भीमा भेरुण्डा भागधेयिनी । माताभाया मधुमती मधुजिह्वा मधुप्रिया
महादेवी महाभागा मालिनी मीनलोचना । मायातीता मधुमती मधुमांसा मधुद्रवा
मानवी मधुसम्भूता मिथिलापुरवासिनी । मधुकैटभसंहर्त्री मेदिनी मेघमालिनी ॥
मन्दोदरी महामाया मैथिली मसृणप्रिया । महालक्ष्मीर्महाकाली महाकन्यामहेश्वरी
माहेन्द्री मेरुतनया मन्दारकुसुमार्चिता । मञ्जुमञ्जीरचरणा मोक्षदा मञ्जुभाषिणी
मधुरद्राविणी मुद्रा मलया मलयान्विता । मेधामरकतश्यामा मागधी मेनकात्मजा
महामारी महावीरा महाश्यामा मनुस्तुता । मातृका मिहिराभासामुकुन्दपदविक्रमा
मूलाधारस्थिता मुग्धा मणिपूरकवासिनी । मृगाक्षीमहिषाऽऽरूढामहिषासुरमर्दिनी
योगाऽऽसनायोगगम्यायोगायौवनकाश्रया । यौवनीयुद्धमध्यस्थायमुनायुगधारिणी
यक्षिणी योगयुक्ता च यक्षराजप्रसूतिनी । यात्रायानविधानज्ञा यदुवंशसमुद्भवा ॥
यकारादिहकारान्ता याजुषी यज्ञरूपिणी । यामिनी योगनिरता यातुधानभयङ्करी ॥
रुक्मिणी रमणी रामा रेवती रेणुका रतिः । रौद्रीरौद्रप्रियाकारा राममातारतिप्रिया
रोहिणी राज्यदा रेवा रमाराजीवलोचना । राकेशी रूपसम्पन्ना रत्नसिंहासनस्थिता
रक्तमाल्याम्बरधरा रक्तगन्धानुलेपना । राजहंससमाऽऽरूढा रम्भा रक्तबलिप्रिया ॥
रमणीययुगाधारा राजिताऽखिलभूतला । रुरुचर्मपरीधाना रथिनी रत्नमालिका ॥
रोगेशी रोगशमनी राविणी रोमहर्षिणी । रामचन्द्रपदाक्रान्ता रावणच्छेदकारिणी
रत्नवस्त्रपरिच्छन्नारथस्थारुक्मभूषणा । लज्जाधिदेवता लोला ललिता लिङ्गधारिणी

लक्ष्मीर्लोला लुप्तविषा लोकिनी लोकविश्रुता ।
लज्जा लम्बोदरी देवी ललना लोकधारिणी ॥ १३६ ॥

वरदा वन्दिता विद्यावैष्णवीविमलाकृतिः । वाराहीविरजावर्षावरलक्ष्मीर्विलासिनी

विनता व्योममध्यस्था वारिजासनसंस्थिता ।

वारुणी वेणुसम्भूता वीतिहोत्रा विरूपिणी ॥ १४१ ॥
वायुमण्डलमध्यस्था विष्णुरूपा विधिप्रिया ।
विष्णुपत्नी विष्णुमती विशालाक्षी वसुन्धरा ॥ १४२ ॥
वामदेवप्रिया वेला वज्रिणी वसुदोहिनी । वेदाक्षरपरीताङ्गी वाजपेयफलप्रदा ॥१४३
वास्मवी वामजननी वैकुण्ठनिलया वरा । व्यासप्रिया वर्मधरा वाल्मीकिपरिसेविता
शाकम्भरी शिवा शान्ता शारदाशरणागतिः । शातोदरीशुभाचाराशुम्भासुरविमर्दिनी
शोभावती शिवाकाराशङ्करार्धशरीरिणी । शोणाशुभाशयाशुभ्राशिरःसन्धानकारिणी
शरावती शरानन्दा शरज्ज्योत्स्ना शुभानना । शरभा शूलिनी शुद्धाशबरी शुकवाहना॥
श्रीमती श्रीधरानन्दा श्रवणानन्ददायिनी । शर्वाणीशर्वरीवन्द्या षड्भाषाषडृतुप्रिया
षडाधारस्थितादेवी षण्मुखप्रियकारिणी । षडङ्गरूपसुमति सुरासुरनमस्कृता ॥१४६
सरस्वती सदाधारासर्वमङ्गलकारिणी । सामगानप्रिया सूक्ष्मासावित्रासामसम्भवा
सर्वावासा सदानन्दा सुस्तनीसागराम्बरा । सर्वैश्वर्यप्रियासिद्धिःसाधुबन्धुपराक्रमा
सप्तर्षिमण्डलगता सोममण्डलवासिनी । सर्वज्ञा सान्द्रकरुणा समानाधिकवर्जिता
सर्वोत्तुङ्गा सङ्गहीना सद्गुणा सकलेष्टदा । सरघा सूर्यतनया सुकेशी सोमसंहतिः ॥
हिरण्यवर्णा हरिणी ह्रीङ्कारी हंसवाहिनी । क्षौमवस्त्रपरीताङ्गी क्षीराब्धितनयाक्षमा
गायत्री चैव सावित्री पार्वती च सरस्वती ।
वेदगर्भा वरारोहा श्रीगायत्री पराम्बिका ॥ १५५ ॥
इतिसाहस्रकं नाम्नां गायत्र्याश्चैव नारद । पुण्यदं सर्वपापघ्नं महासम्पत्तिदायकम्
एवं नामानिगायत्र्यास्तोषोत्पत्तिकराणि हि । अष्टम्यांचविशेषेणपठितव्यंद्विजैःसह
जपं कृत्वा होमपूजाध्यानंकृत्वाविशेषतः । यस्मैकस्मैनदातव्यंगायत्र्यास्तुविशेषतः
सुभक्ताय सुशिष्याय वक्तव्यं भूसुराय वै । भ्रष्टेभ्यः साधकेभ्यश्चबान्धवेभ्योनदर्शयेत्
यद्गृहे लिखितं शास्त्रं भयं तस्य न कस्यचित् ।
चञ्चलाऽपि स्थिरा भूत्वा कमला तत्र तिष्ठति ॥ १६० ॥
इदं रहस्यं परमं गुह्याद्गुह्यतरं महत् । पुण्यप्रदं मनुष्याणां दरिद्राणां निधिप्रदम्

मोक्षप्रदं मुमुक्षूणां कामिनां सर्वकामदम् । रोगाद्वै मुच्यतेरोगीबद्धो मुच्येतबन्धनात्
ब्रह्महत्यासुरापानसुवर्णस्तेयिनो नराः । गुरुतल्पगतो वाऽपिपातकान्मुच्यतेसकृत्
असत्प्रतिग्रहाच्चैवाऽभक्ष्यभक्षाद्विशेषतः । पाखण्डानृतमुख्येभ्यः पठनादेव मुच्यते
इदं रहस्यममलं मयोक्तं पद्मजोद्भव !। ब्रह्मसायुज्यदं नृणां सत्यं सत्यं न संशयः ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायांद्वादशस्कन्धे
गायत्रीसहस्रनामस्तोत्रकथनं नाम षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः

### दीक्षाविधिकथनम्

श्रीनारद उवाच

श्रुतं सहस्रनामाख्यं श्रीगायत्र्याः फलप्रदम् । स्तोत्रं महोन्नतिकरं महाभाग्य करंदरम्
अधुना श्रोतुमिच्छामिदीक्षालक्षणमुत्तमम् । विनायेननसिध्येतदेवीमन्त्रेऽधिकारिता
ब्राह्मणानां क्षत्रियाणां विशांस्त्रीणांतथैवच । सामान्यविधिनासर्वंविस्तरेणवदप्रभो

श्रीनारायण उवाच

शृणु दीक्षां प्रवक्ष्यामि शिष्याणां भावितात्मनाम् ।
देवाग्निगुरुपूजादावधिकारो यथा भवेत् ॥ ४ ॥

दिव्यं ज्ञानं हि या दद्यात्कुर्यात्पापक्षयंतुया । सैवदीक्षेतिसम्प्रोक्तावेदतन्त्रविशारदैः
अवश्यं सा तु कर्तव्या यतो बहुफलामता । गुरुशिष्यावुभावत्राप्यतिशुद्धावपेक्षितौ
गुरुस्तु विधिवत्प्रातः कृत्यं सर्वंविधायच । स्नानसन्ध्यादिकंसर्वंयथाविधिविधायच
कमण्डलुकरो मौनी गृहं यायात्सरित्तटात् । यागमण्डममासाद्य विशेत्तत्रासने वरे
आचम्य प्राणानायम्य गन्धपुष्पविमिश्रितम् । सप्तवारास्त्रमन्त्रेणजप्तंवारिसुसाधयेत्
वारिणा तेन मतिमानस्त्रमन्त्रं समुच्चरन् । प्रोक्षयेद्द्वारमखिलं ततः पूजां समाचरेत्

ऊर्ध्वोदुम्बरके देवं गणनाथं तथा श्रियम् । सरस्वतीं नाममन्त्रैः पूजयेद्गन्धपुष्पकैः
द्वारदक्षिणशाखायां गङ्गां विघ्नेशमर्चयेत् । द्वारस्य वामशाखायांक्षेत्रपालंचसूर्यजाम्
देहल्या पूजयेदस्त्रदेवतामस्त्रमन्त्रशः । सर्वं देवीमयं दृश्यमिति सञ्चिन्त्य सर्वतः १३
दिव्यानुत्सारयेद्विघ्नानस्त्रमन्त्रजपेन तु । अन्तरिक्षगतान्विघ्नान्पादघातैस्तु भूमिगान्

वामशाखां स्पृशन्पश्चात्प्रविशेद्दक्षिणाङ्घ्रिणा ।
प्रविश्य कुम्भं संस्थाप्य सामान्यार्घ्यं विधाय च ॥ १५ ॥
तेन चाऽर्घ्यजलेनाऽपि नैर्ऋत्यां दिशि पूजयेत् ।
वास्तुनाथं पद्मयोनिं गन्धपुष्पाक्षतादिभिः ॥ १६ ॥

ततः कुर्यात्पञ्चगव्यं तेन चाऽर्घ्योदकेन च । तोरणस्तम्भपर्यन्तं प्रोक्षयेन्मण्डपं गुरुः
सर्वं देवीमयं चेदं भावयेन्मनसा किल । मूलमन्त्रं जपन्भक्त्या प्रोक्षणंस्याच्छराणुना

शरमन्त्रं समुच्चार्य ताडयेन्मण्डपक्षमाम् ।
हुं मन्त्रं तु समुच्चार्य कुर्यादभ्युक्षणं ततः ॥ १९ ॥

धूपयेदन्तरं धूपैर्विकिरान्विकिरेत्ततः । मार्जयेत्तांस्तु मार्जन्या कुशनिर्मितया पुनः ॥
ईशानदिशि तत्पुञ्जं कृत्वासंस्थापयेन्मुने !। पुण्याहवाचनंकृत्वादीनानाथांश्चतोषयेत्

विशेन्मृद्वासने पश्चान्नमस्कृत्य गुरुं निजम् ।
प्राङ्मुखो विधिवद्ध्यात्वा देयमन्त्रस्य देवताम् ॥ २२ ॥

भूतशुद्ध्यादिकं कृत्वा पूर्वोक्तेनैव वर्त्मना । ऋष्यादिन्यासकंकुर्याद्देयमन्त्रस्यवैमुने!
न्यसेन्मुनिं तु शिरसि मुखे छन्दः समीरितम् । देवतांहृदयाम्भोजेगुह्येबीजंतुपादयोः

शक्तिं विन्यस्य पश्चात्तु तालत्रयरवात्ततः ।
दिग्बन्धं कारयेत्पश्चाच्छोटिकाभिस्त्रिभिर्नरः ॥ २५ ॥

प्राणायामंततः कृत्वामूलमन्त्रमनुस्मरन् । मातृकां विन्यसेद्देहे तत्प्रकारस्तथोच्यते
ॐ अं नम इति प्रोच्य न्यसेच्छिरसि मन्त्रवित् । एवमेवतुसर्वेषुन्यसेत्स्थानेषुवैमुने
मूलमन्त्रं षडङ्गं च न्यसेदङ्गेषु सत्तमः । अङ्गुष्ठादिष्वङ्गुलीषु हृदयादिषु च क्रमात् ॥
नमःस्वाहावषड्युक्तैर्हुं वौषट्फट्पदान्वितैः । प्रणवादियुतैर्मन्त्रैःषड्भिरेवंषडङ्गकम्

वर्णन्यासादिकं पश्चान्मूलमन्त्रस्य योजयेत् ।
स्थानेषु तत्तत्कल्पोक्तेष्विति न्यासविधिः स्मृतः ॥ ३० ॥

ततो निजे शरीरेऽस्मिंश्चिन्तयेदासनं शुभम् । दक्षांसे चन्यसेद्धर्मं वामांसेज्ञानमेवच
वामोरौ चाऽपि वैराग्यंदक्षोरावथ विन्यसेत् । ऐश्वर्यं मुखदेशे तुमुनेध्यायेदधर्मकम्
वामपार्श्वे नाभिदेशेदक्षपार्श्वे तथा पुनः । नञादींश्चापिज्ञानादीन्पूर्वोक्तानेवविन्यसेत्
पादाधर्मादयःप्रोक्ताः पीठस्यमुनिसत्तम ॥ अधर्माद्यास्तुगात्राणिस्मृतानिमुनिपुङ्गवैः
मध्येऽनन्तं हृदि स्थानेन्यसेन्मृद्वासनेस्थले । प्रपञ्चपद्मंविमलंतस्मिन्सूर्येन्दुपावकान्

न्यसेत्कलायुतान्मन्त्री सङ्क्षेपात्ता वदाम्यहम् ।
सूर्यस्य द्वादश कलास्ता इन्दोः षोडश स्मृताः ॥ ३६ ॥
दश वह्नेः कलाः प्रोक्तास्ताभिर्युक्तान्तु तान्स्मरेत् ।
सत्त्वं रजस्तमश्चैव न्यसेत्तेषामथोपरि ॥ ३७ ॥

आत्मानमन्तरात्मानं परमात्मानमेव च । ज्ञानात्मानं न्यसेद्विद्वानित्थ पीठस्यकल्पना
अमुकासनाय नमइतिमन्त्रेणसाधकः । आसनंपूजयित्वातुतस्मिन्ध्यायेत्पराम्बिकाम्
कल्पोक्तविधिना मन्त्री देवमन्त्रस्य देवताम् । मानसैरुपचारैश्च पूजयेत्तां यथाविधि

मुद्राः प्रदर्शयेद्विद्वान्कल्पोक्ता मोदकारिकाः ।
याभिर्विरचिताभिस्तु मोदो देव्यास्तु जायते ॥ ४१ ॥

नारायण उवाच

ततः स्वावमभागाग्रेषट्कोणोपरिवर्तुलम् । चतुरस्रयुतंतस्यद्भमध्येमण्डलमालिखेत्
मध्ये त्रिकोणं संलिख्यशङ्खमुद्रांप्रदर्शयेत् । षडङ्गानिचषट्कोणेष्वर्चयेत्कुसुमादिभिः
अग्न्यादिषु तु कोणेषु षडङ्गार्चनमाचरेत् । आधारपात्रमादाय शङ्खस्य मुनिसत्तम!॥
अस्त्रमन्त्रेण सम्प्रोक्ष्य स्थापयेत्तत्रमण्डले । मंवह्निमण्डलायोक्त्वाततोदशकलात्मने
अमुकदेव्याअर्घ्यपात्रस्थानायनमइत्यपि । मन्त्रोऽयमुक्तःशङ्खस्याप्याधारस्थापनेबुधैः
आधारे पूर्वमारभ्य प्रदक्षिणक्रमेण तु । दश वह्निकलाः पूज्या वह्निमण्डलसंस्थिताः
ततो वै मूलमन्त्रेण प्रोक्षितं शङ्खमुत्तमम् । स्थापयेत्तत्र चाधारे मूलमन्त्रमनुस्मरन्

अं सूर्यमण्डलायोक्त्वा द्वादशान्ते कलात्मने। अमुकदेव्यर्घ्यपात्राय नम इत्युच्चरेत्ततः
शं शङ्खाय पदं प्रोच्य नम इत्येतदुच्चरेत्। प्रोक्षयेत्तेन तं शङ्खं तस्मिन्द्वादश पूजयेत्

सूर्यस्य द्वादशकलास्तपिन्याद्या यथाक्रमम्।
विलोममातृकां प्रोच्य मूलमन्त्रं विलोमकम ॥ ५१ ॥

जलैरापूरयेच्छङ्खं तत्रचेन्दोःकलांन्यसेत्। उं सोममण्डलायोक्त्वान्तेषोडशकलात्मने
अमुकार्घ्यामृतायेति हृन्मन्त्रान्तो मनुः स्मृतः। पूजयेन्मनुना तेन जलंतुसृणिमुद्रया
तीर्थान्यावाह्य तत्रैवाप्यष्टकृत्वोजपेन्मनुम्। षडङ्गानि जलेन्यस्य हृदासम्पूजयेदपः
अष्टकृत्वो जपेन्मूलं छादयेन्मत्स्यमुद्रया। ततोदक्षिणदिग्भागेशङ्खस्यप्रोक्षणींन्यसेत्
शङ्खाम्बु किञ्चिन्निक्षिप्य प्रोक्षयेत्तेन सर्वतः। पूजाद्रव्यंनिजात्मानंविशुद्धंभावयेत्ततः

नारायण उवाच

ततः स्वपुरतो वेद्यांसर्वतोभद्रमण्डलम्। संलिख्यकर्णिकामध्यंपूरयेच्छालितण्डुलैः
आस्तीर्य दर्भांस्तत्रैव न्यसेत्कूर्चसलक्षणम। आधारशक्तिमारभ्यपीठमन्वन्तमर्चयेत्
निर्व्रणं कुम्भमादायाप्यस्त्राद्भिः क्षालितान्तरम्। तन्तुना वेष्टयेत्तन्तुत्रिगुणेनारुणेन च
नवरत्नोदरं कूर्चयुतं गन्धादिपूजितम्। स्थापयेत्तत्र पीठे तु तारमन्त्रेण देशिकः॥
ऐक्यं कुम्भस्य पीठस्य भावयेत्पूरयेत्ततः। मातृका प्रतिलोमेन जपंस्तीर्थोदकैर्मुने
मूलमन्त्रं च सञ्जप्य पूरयेद्देवताधिया। अश्वत्थपनसाम्राणां कोमलैर्नवपल्लवैः॥ ६२ ॥
छादयेत्कुम्भवदनंचपकं सफलाक्षतम्। संस्थापयेत मतिमान्वस्त्रयुग्मेन वेष्टयेत्॥
प्राणस्थापनमन्त्रेण प्राणस्थापनमाचरेत्। आवाहनादिमुद्राभिर्मोदयेद्देवतां पराम्
ध्यायेत्तां परमेशानीं कल्पोक्तेन प्रकारतः। स्वागतं कुशलप्रश्नं देव्या अग्रे समुच्चरेत्
पाद्यं दद्यात्ततोऽप्यर्घ्यं ततश्चाचमनीयकम्। मधुपर्कं चसाभ्यङ्गं देव्यै स्नानंनिवेदयेत्
वाससी च ततो दद्याद्रक्तक्षौमेसुनिर्मले। नानामणिगणाकीर्णानाकल्पान्कल्पयेत्ततः
मनुना पुटितैर्वर्णैर्मातृकाया विधानतः। देव्या अङ्गेषु विन्यस्य चन्दनाद्यैः समर्चयेत
गन्धः कालागरुभवः कर्पूरेण समन्वितः। काश्मीरं चन्दनं चापिकस्तूरीसहितंमुने
कुन्दपुष्पादिपुष्पाणि परदेव्यै समर्पयेत्। धूपोऽगुरुपुरुव्रातोशीरचन्दनशर्कराः ७०

मधुमिश्राः स्मृता देव्याः प्रिया धूपात्मना सदा ।
दीपाननेकान्दत्त्वाऽथ नैवेद्यं दर्शयेत्सुधीः ॥ ७१ ॥

प्रतिद्रव्यं जलं दद्यात्प्रोक्षणीस्थं न चान्यथा । ततःकुर्यादङ्गपूजांकल्पोक्तावरणानिच साङ्गां देवीमथाभ्यर्च्यवैश्वदेवं ततश्चरेत् । दक्षिणेस्थण्डिलंकृत्वातत्राधायहुताशनम्

मूर्तिस्थां देवतां तत्राऽऽवाह्य सम्पूज्य च क्रमात् ।
तारव्याहृतिभिर्हुत्वा मूलमन्त्रेण वै ततः ॥ ७४ ॥

पञ्चविंशतिवारं तु पायसेन सर्पिषा । हुनेत्पश्चाद्व्याहृतिभिः पुनश्च जुहुयान्मुने !॥

गन्धाद्यैरर्चयित्वा च देवीं पीठे तु योजयेत् ।
वह्निं विसृज्य हविषा परितो विकिरेद् बलिम् ॥ ७६ ॥

देवतायाः पार्षदेभ्यो गन्धपुष्पादिसंयुतान् ॥ पञ्चोपचारान्दत्त्वाथ ताम्बूलं छत्रचामरे दद्याद्देव्यै ततो मन्त्रंसहस्रावृत्तितोजपेत् । जपंसमर्प्यचैशान्यांविकिरेदिदिशिसंस्थिते कर्करीं स्थापयेत्तस्यां दुर्गामावाह्य पूजयेत् । रक्षरक्षेतिचोच्चार्यनालमुक्तेनवारिणा अस्त्रमन्त्रं जपन्देशं सेचयेत्तु प्रदक्षिणम् । कर्करीं स्थापयेत्स्थानेपूजयेच्चास्त्रदेवताम् पश्चाद्गुरुस्तु शिष्येणसहभुञ्जीतवाग्यतः । तस्यांरात्रौतुतद्वेद्यांनिद्रांकुर्यात्प्रयत्नतः

नारायण उवाच

ततः कुण्डस्य संस्कारं स्थण्डिलस्य च वा मुने !।
प्रवक्ष्यामि समासेन यथाविधि विधानतः ॥ ८२ ॥

मूलमन्त्रं समुच्चार्य वीक्षयेदस्त्रमन्त्रतः । प्रोक्षयेत्ताडनं कुर्यात्तेनैव कवचेन तु ॥८३॥ अभ्युक्षणं समुद्दिष्टं तिस्रस्तिस्रस्ततःपरम् । प्रागग्राउदगग्राश्चलिखेल्लेखाःसमन्ततः प्रणवेन समभ्युक्ष्य पीठं देव्याः समर्चयेत् । आधारशक्तिमारभ्यपीठमन्त्रावसानकम् तस्मिन्पीठे समावाह्य शिवौ परमकारणौ । गन्धाद्यैरुपचारैश्च पूजयेत्तौसमाहितः॥

देवीं ध्यायेदृतुस्नातां संसक्तां शङ्करेण तु ।
कामातुरां तयोः क्रीडां किञ्चित्कालं विभावयेत् ॥ ८७ ॥

अथवह्निं समादाय पात्रेणपुरतोन्यसेत् । क्रव्यादांशं परित्यज्यपूर्वोक्तैर्वीक्षणादिभिः

संस्कृत्य वह्निरम्बीजमुच्चार्य तदनन्तरम् । चैतन्यं योजयेत्तस्मिन्प्रणवेनाभिमन्त्रयेत्
सप्तवारं ततोधेनुमुद्रां संदर्शयेद् गुरुः । शरेण रक्षितं कृत्वा तनुत्रेणावगुण्ठयेत् ॥
अर्चितं त्रिः परिभ्राम्य प्रादक्षिण्येन सत्तमः । कुण्डोपरि जपंस्तारंजानुस्पृष्टमहीतलः
शिवबीजधिया देव्यायोनौवह्निंविनिक्षिपेत् । आचामयेत्ततोदेवंदेवींचजगदम्बिकाम्
चित्पिङ्गलहनदहपचयुग्मं ततः परम् । सर्वज्ञाज्ञापयस्वाहा मन्त्रोऽयं वह्निदीपने ॥
अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् । सुवर्णवर्णममलं समिद्धं विश्वतोमुखम्
मन्त्रेणानेन तं वह्निं स्तुवीत परमादरात् । ततोन्यसेद्वह्निमन्त्रं षडङ्गं देशिकोत्तमः
सहस्रार्चिः स्वस्तिपूर्णउत्तिष्ठपुरुषः स्मृतः । धूमव्यापी सप्तजिह्वो धनुर्धरइतिक्रमात्

जातियुक्ताः षडङ्गाःस्युः पूर्वस्थानेषु विन्यसेत् ।
ध्यायेद्वह्निं हेमवर्णं त्रिनेत्रं पद्मसंस्थितम् ॥ ९७ ॥

इष्टशक्तिस्वस्तिकाभीर्धारकं मङ्गलं परम् । परिषिञ्चेत्ततःकुण्डं मेखलोपरिमन्त्रवित्
दर्भैः परिस्तरेत्पश्चात्परिधीन्विन्यसेदथ । त्रिकोणवृत्तषट्कोणसाष्टपत्रं सभूपुरम् ॥
यन्त्रं विभावयेद्वह्नेः पूर्वंवा संलिखेदथ । तन्मध्ये पूजयेद्वह्निं मन्त्रेणाऽनेन वै मुने !
वैश्वानर ततोजातवेदः पश्चादिहावह । लोहिताक्षपदं प्रोक्त्वा सर्वकर्माणि साधय

वह्निजायान्तको मन्त्रस्तेन वह्निं तु पूजयेत् ।
मध्ये षट्स्वपि कोणेषु हिरण्या गगना तथा ॥ १०२ ॥

रक्ता कृष्णा सुप्रभा च बहुरूपाऽतिरक्तिका । पूजयेत्सप्तजिह्वास्ताकेशरेष्वङ्गपूजनम्
दलेषु पूजयेन्मूर्तीः शक्तिस्वस्तिकधारिणीः जातवेदाःसप्तजिह्वो हव्यवाहन एव च
अश्वोदरजसञ्ज्ञोऽन्यः पुनर्वैश्वानराह्वयः । कौमारतेजाः स्याद्विश्वमुखोदेवमुखः स्मृतः
ताराग्नये पदाद्याः स्युर्नत्यन्तावह्निमूर्तयः । लोकपालांश्चतुर्दिक्षु वज्राद्यायुधसंयुतान्

नारायण उवाच

ततःस्रुक्स्रुवसंस्कारावाज्यसंस्कारएवच । कृत्वाहोमंततःकुर्यात्स्रुवेणाऽऽदायवैघृतम्
दक्षिणाद्घृतभागात्तु वह्नेर्दक्षिणलोचने । जुहुयादग्नये स्वाहेत्येवं वै वामतोऽन्यतः

सोमाय स्वाहेति मध्याद् घृतमादाय सत्तम ।

अग्नीषोमाभ्यां स्वाहेति मध्यनेत्रे हुनेत्ततः ॥ १०६ ॥
पुनर्दक्षिणभागात्तु घृतमादाय वै मुखे । अग्नयेस्विष्टकृत्स्वाहेत्यनेनैव हुनेत्ततः ॥
सताराभिर्व्याहृतिभिर्जुहुयादथ साधकः । जुहुयादग्निमन्त्रेण त्रिवारंतु ततः परम्
ततस्तु प्रणवेनैवाऽप्यष्टावष्टौ घृताहुतीः । गर्भाधानादिसंस्कारकृते तु जुहुयान्मुने !
गर्भाधानं पुंसवनं सीमन्तोन्नयनं ततः । जातकर्मनामकर्माण्युपनिष्क्रमणं तथा ॥
अन्नाशनं तथाचूडा व्रतबन्धस्तथैव च । महानाम्न्यं व्रतं पश्चात्तथौपनिषदं व्रतम्
गोदानोद्वाहकौ प्रोक्ताः संस्काराः श्रुतिचोदिताः ।
ततः शिवं पार्वतीं च पूजयित्वा विसर्जयेत् ॥ ११५ ॥
जुहुयात्पञ्चसमिधो वह्निमुद्दिश्य साधकः । पश्चादावरणानां चाप्येकैकामाहुतिंहुनेत्
घृतं स्रुचिसमादाय चतुर्वारं स्रुवेण च । पिधाय तांतुतेनैव मुने! तिष्ठन्निजाऽऽसने
वौषडंतेन मनुना वह्नेस्तु जुहुयात्ततः । महागणेशमन्त्रेण जुहुयादाहुतीर्दश ॥ ११८ ॥
वह्नौ पीठं समभ्यर्च्य देयमन्त्रस्य देवताम् ।
वह्नौ ध्यात्वा तु तद्वक्त्रे पञ्चविंशति सङ्ख्यया ॥ ११६ ॥
मूलमन्त्रेणजुहुयाद्वक्त्रैकीकरणाय च । वह्निदेवतयोरैक्यं भावयन्नात्मना सह ॥
एकीभूतं भावयेत्तु ततस्तु साधकोत्तमः । षडङ्ग देवतानाञ्च जुहुयादाहुतीः पृथक् ॥
एकादशैवजुहुयादाहुतीर्मुनिसत्तम !। एतेननाडीसन्धानं वह्निदेवतयोर्मुने !॥ १२२ ॥
एकैकक्रमयोगेनाप्यावृत्तीनां तथैव च । एकैकक्रमयोगेन घृतेन जुहुयान्मुने !॥१२३॥
ततः कल्पोक्तद्रव्यैस्तु जुहुयादथ वा तिलैः । देवतामूलमन्त्रेण गजान्तकसहस्रकम्
एवं हुत्वा ततोदेवीं सन्तुष्टां भावयेन्मुने !।
तथैवाऽवृतिदेवीश्च वह्न्याद्या देवता अपि ॥ १२५ ॥
ततः शिष्य च सुस्नातंकृतसन्ध्यादिकक्रियम् । वस्त्रद्वययुतंस्वर्णाभरणेनसमन्वितम्
कमण्डलुकरं शुद्धं कुण्डस्यान्तिकमानयेत् । नमःस्कृत्यततःशिष्योगुरूनथसभासदः
कुलदेवं नमस्कृत्य विशेत्तत्राऽथ विष्टरे । गुरुस्ततस्तुतंशिष्यंकृपादृष्ट्याविलोकयेत्
तच्चैतन्यं निजेदेहे भावयेत्सङ्गतं त्विति । ततःशिष्यतनुस्थानामध्वनांपरिशोधनम्

कुर्यात्तुहोमतोविद्वान्दिव्यदृष्ट्यवलोकनात् । येनजायेतशुद्धात्मायोग्योदेवाद्यनुग्रहे

नारायण उवाच

तनौ ध्यायेत्तुशिष्यस्यषडध्वनःक्रमेणतु । पादयोस्तुकलाध्वानमन्धौतत्त्वाध्वकंपुनः
नाभौ तु भुवनाध्वानं वर्णाध्वानं तथा हृदि । पदाध्वानंतथाभालेमन्त्राध्वानंतुमूर्धनि
शिष्यं स्पृशंस्तुकूर्चेन तिलैराज्यपरिप्लुतैः । शोधयाम्यमुमध्वानंस्वाहेतिमनुमुच्चरन्

तारादयं जुहुयादष्टवारं प्रत्यध्वमेव हि ।
षडध्वनस्ततस्तांस्तु लीनान्ब्रह्मणि भावयेत् ॥ १३४ ॥

पुनरुत्पादयेत्तस्मात्सृष्टिमार्गेण वै गुरुः । आत्मस्थितंतच्चैतन्यंपुनःशिष्येतुयोजयेत्
पूर्णाहुतिं ततो हुत्वा देवतां कलशे नयेत् । पुनर्व्याहृतिभिर्हुत्वा वह्नेरङ्गाहुतिस्तथा
एकैकशो गुरुर्दत्त्वा विसृजेद्वह्निमात्मनि । ततः शिष्यस्य नेत्रेतु बध्नीयाद्वाससागुरुः

नेत्रमन्त्रेण तं शिष्यं कुण्डतो मण्डलं नयेत् ।
पुष्पाञ्जलिं मुख्यदेव्यां कारयेच्छिष्यहस्ततः ॥ १३८ ॥

नेत्रबन्धं निराकृत्य वेशयेत्कुशविष्टरे । भूतशुद्धिं शिष्यदेहे कुर्यात् प्रोक्तेन वर्त्मना ॥

मन्त्रोदितांस्तथा न्यासान्कृत्वा शिष्यतनौ ततः ।
मण्डले वेशयेच्छिष्यमन्यस्मिन्कुम्भसंस्थितान् ॥ १४० ॥
पल्लवाञ्छिष्यशिरसि विन्यसेन्मातृकां जपेत् ।
कलशस्थजलैः शिष्यं स्नापयेद्देवतात्मकैः ॥ १४१ ॥

वर्धनीजलसेकश्च कुर्याद्रक्षार्थमञ्जसा । ततः शिष्यः समुत्थाय वाससी परिधाय च
कृतभस्मावलेपश्च सन्निवेशद्गुरुसन्निधौ । ततोगुरुःस्वकायात्तुहृदयान्निर्गतांशिवाम्
प्रविष्टां शिष्यहृदये भावयेत्करुणानिधिः । पूजयेद्गन्धपुष्पाद्यैरैक्यं वैभावयंस्तयोः

ततस्त्रिशो दक्षकर्णे शिष्यस्योपदिशेद् गुरुः ।
महामन्त्रं महादेव्याः स्वहस्तं शिरसि न्यसन् ॥ १४५ ॥

अष्टोत्तरशतं मन्त्रं शिष्योऽपि प्रजपेन्मुने ॥ दण्डवत्प्रणमेद्भूमौ तं गुरुंदेवतात्मकम्

सर्वस्वमर्पयेत्तस्मै यावज्जीवमनन्यधीः ।

ऋत्विग्भ्यो दक्षिणां दत्त्वा ब्राह्मणांश्चाऽपि भोजयेत् ॥ १४७ ॥

सुवासिनीः कुमारीश्च बटुकांश्चैवसर्वशः । दीनानाथान्दरिद्रांश्चवित्तशाठ्यविवर्जितः

कृतार्थतां स्वस्य बुद्ध्वा नित्यमाराधयेन्मनुम् ।

इति ते कथितः सम्यग्दीक्षाविधिरनुत्तमः ॥ १४६ ॥

विमृश्यैतदशेषेण भज देवीपदाम्बुजम् । नान्यस्तु परमो धर्मोब्राह्मणस्याऽत्र विद्यते

वैदिकः स्वस्वगृह्योक्तक्रमेणोपदिशेन्मनुम् ।

तान्त्रिकस्तत्र रीत्या तु स्थितिरेषा सनातनी ॥ १५१ ॥

तत्तदुक्तप्रयोगांस्ते ते ते कुर्युर्न चान्यथा ।

नारायण उवाच

इति सर्वं मयाऽऽख्यातं यत्पृष्टं नारद ! त्वया ॥ १५२ ॥

अतः परं पराम्बाया भज नित्यं पदाम्बुजम् । नित्यमाराध्यतश्चाहं निर्वृतिपरमांगत-

व्यास उवाच

इति राजन्नारदाय प्रोक्त्वासर्वमनुत्तमम् । समाधिर्मीलिताक्षस्तुदध्यौदेवीपदाम्बुजम्

नारायणस्तु भगवान्मुनिवर्यशिखामणिः । नारदोऽपि ततो नत्वा गुरुनारायणं परम्

जगाम सद्यस्तपसे देवीदर्शनलालसः ॥ १५५ ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यांसंहितायां द्वादशस्कन्धे

मन्त्रदीक्षाविधिकथनंनाम सप्तमोऽध्यायः ॥ ७ ॥

———

# अष्टमोऽध्यायः

## पराशक्त्याविर्भाववर्णनम्

### जनमेजय उवाच

भगवन्सर्वधर्मज्ञ सर्वशास्त्रवताम्वर !। द्विजातीनां तु सर्वेषांशक्त्युपास्तिः श्रुतीरिता

सन्ध्याकालत्रयेऽन्यस्मिन्काले नित्यतया विभो !।

तां विहाय द्विजाः कस्माद् गृह्णीयुश्चाऽन्यदेवताः ॥ २ ॥

दृश्यन्ते वैष्णवाःकेचिद्गाणपत्यास्तथापरे । कापालिकाश्चीनमार्गरतावल्कलधारिणः

दिगम्बरास्तथा बौद्धाश्चार्वाका एवमादयः । दृश्यन्ते बहवोलोकेवेदश्रद्धाविवर्जिताः

किमत्र कारणं ब्रह्मंस्तद्भवान्वक्तुमर्हति । बुद्धिमन्तः पण्डिताश्च नानातर्कविचक्षणाः

अपिसन्त्येववेदेषुश्रद्धयातुविवर्जिताः । नहिकश्चित्स्वकल्याणंबुद्ध्याहातुमिहेच्छति

किमत्र कारणं तस्माद्वद वेदविदाम्वर !। मणिद्वीपस्य महिमा वर्णितो भवता पुरा

कीदृक्तदस्ति यद्देव्याः परं स्थानंमहत्तरम् । तच्चाऽपिवदभक्तायश्रद्दधानायमेऽनघ

प्रसन्नास्तु वदन्त्येव गुरवो गुह्यमप्युत ।

### सूत उवाच

इति राज्ञो वचः श्रुत्वा भगवान्बादरायणः ॥ ६ ॥

निजगाद ततः सर्वं क्रमेणैव मुनीश्वराः !। यच्छ्रुत्वा तु द्विजातीनां वेदश्रद्धाविवर्धते

### व्यास उवाच

सम्यक्पृष्टं त्वया राजन्समये समयोचितम् । बुद्धिमानसि वेदेषु श्रद्धावांश्चैवलक्ष्यसे

पूर्वं मदोद्धता दैत्या देवैर्युद्धं तु चक्रिरे । शतवर्षं महाराज! महाविस्मयकारकम् ॥

नानाशस्त्रप्रहरणं नानामायाविचित्रितम् । जगत्क्षयकरं नूनं तेषां युद्धमभून्नृप ! ॥

पराशक्तिकृपावेशाद्देवैर्दैत्या जिता युधि । भुवं स्वर्गंपरित्यज्यगताःपातालवेश्मनि

ततः प्रहर्षिता देवाः स्वपराक्रमवर्णनम् । चक्रुः परस्परं मोहात्साभिमाना समन्ततः

जयोऽस्माकं कुतोनस्यादस्माकंमहिमायतः । सर्वोत्तराःकुत्रदैत्याःपमरानिष्पराक्रमाः
सृष्टिस्थितिक्षयकरा वयं सर्वे यशस्विनः । अस्मदग्रेपामराणांदैत्यान चैवकाकथा
पराशक्तिप्रभावं ते न ज्ञात्वा मोहमागताः । तेषामनुग्रहं कर्तुं तदैव जगदम्बिका ॥१८
प्रादुरासीत्कृपापूर्णा यक्षरूपेण भूमिप !। कोटिसूर्यप्रतीकाशं चन्द्रकोटिसुशीतलम्॥
विद्युत्कोटिसमानाभं हस्तपादादिवर्जितम् । अदृष्टपूर्वं तद्दृष्ट्वा तेजः परमसुन्दरम्

सविस्मयास्तदा प्रोचुः किमिदं किमिदं त्विति ।
दैत्यानां चेष्टितं किं वा माया काऽपि महीयसी ॥ २१ ॥

केनचिन्निर्मिता वाऽथ देवानां स्मयकारिणी । सम्भूय तेतदासर्वेविचारंचक्रुरुत्तमम्
यक्षस्य निकटे गत्वाप्रष्टव्यंकस्त्वमित्यपि । बलाबलं ततोज्ञात्वाकर्तव्यातुप्रतिक्रिया
ततो वह्निं समाहूयप्रोवाचेन्द्रःसुराधिपः । गच्छवह्नेत्वमस्माकंयतोऽसिमुखमुत्तमम्

ततो गत्वा तु जानीहि किमिदं यक्षमित्यपि ।
सहस्राक्षवचः श्रुत्वा स्वपराक्रमगर्वितः ( गर्भितम् ) ॥ २५ ॥
वेगात्स निर्गतो वह्निर्ययौ यक्षस्य सन्निधौ ।
तदा प्रोवाच यक्षस्तं त्वं कोऽसीति हुताशनम् ॥ २६ ॥

वीर्यंचत्वयिकिंयत्तद्वदसर्वंममाग्रतः । अग्निरस्मितथाजातवेदाअस्मीति सोऽब्रवीत्
सर्वस्य दहने शक्तिर्मयि विश्वस्य तिष्ठति । तदा यक्षं परं तेजस्तदग्रे निदधौ तृणम्
दहैनं यदि ते शक्तिर्विश्वस्य दहनेऽस्तिहि । तदा सर्वबलेनैवाऽकरोद्यत्नं हुताशनः
न शशाक तृणं दग्धुं लज्जितोऽगात्सुरान्प्रति । पृष्टे देवैस्तुवृत्तान्तेसर्वप्रोवाचहव्यभुक्
वृथाऽभिमानोह्यस्माकं सर्वेशत्वादिके सुराः । ततस्तु वृत्रहा वायुं समाहूयेदमब्रवीत्
त्वयि प्रोतंजगत्सर्वंत्वच्चेष्टाभिस्तुचेष्टितम् । त्वंप्राणरूपःसर्वेषांसर्वशक्तिविधारकः
त्वमेवगत्वाजानीहिकिमिदंयक्षमित्यपि । नान्यःकोऽपिसमर्थोऽस्तिज्ञातुंयक्षंपरंमहः
सहस्राक्षवचः श्रुत्वागुणगौरवगुम्फितम् । साभिमानोजगामाऽऽशु यत्रयक्षंविराजते
यक्षं दृष्ट्वा ततो वायुं प्रोवाच मृदुभाषया । कोऽसित्वंत्वयिकाशक्तिर्वदसर्वंममाग्रतः
ततो यक्षवचः श्रुत्वागर्वेणमरुदब्रवीत् । मातरिश्वाऽहमस्मीतिवायुरस्मीतिचाब्रवीत्

वीर्यं तु मयि सर्वस्य चालने ग्रहणेऽस्ति हि । मच्चेष्टया जगत्सर्वं सर्वव्यापारवद्भवेत्
इति श्रुत्वा वायुवाणीं निजगाद परं महः । तृणमेतच्चऽवाग्रे यत्तच्चालय यथेप्सितम्

नो चेद्गर्वं विहायैनं लज्जितो गच्छ वासवम् ।
श्रुत्वा यक्षवचो वायुः सर्वशक्तिसमन्वितः ॥ ३६ ॥

उद्योगमकरोत्तच्च स्वस्थानान्नचचालह । लज्जितोऽगाद्देवपार्श्वंहित्वागर्वंसचानिलः
वृत्तान्तमवदत्सर्वंगर्वनिर्वापकारणम् । नैतज्ज्ञातुं समर्थाः स्ममिथ्यागर्वाभिमानिनः
अलौकिकं भाति यक्षं तेजः परमदारुणम् । ततः सर्वे सुरगणाः सहस्राक्षं समूचिरे
देवराडसि यस्मात्त्वं यक्षं जानीहि तत्त्वतः । तत इन्द्रोमहागर्वात्तद्यक्षं समुपाद्रवत्
प्राद्रवच्च परं तेजो यक्षरूप परात्परम् । अन्तर्धानं ततः प्राप तद्यक्षं वासवाऽग्रतः
अतीव लज्जितो जातो वासवो देवराडपि । यक्षसम्भाषणाभावाल्लघुत्वं प्राप चेतसि
अतः परं न गन्तव्यं मया तु सुरसंसदि । किं मया तत्र वक्तव्यंस्वलघुत्वं सुरान्प्रति

देहत्यागो वरस्तस्मान्मानो हि महतां धनम् ।
माने नष्टे जीवितं तु मृतितुल्यं न संशयः ॥ ४७ ॥

इति निश्चित्य तत्रैव गर्वं हित्वा सुरेश्वरः । चरित्रमीदृशं यस्य तमेव शरणं गतः
तस्मिन्नेव क्षणे जाता व्योमवाणी नभस्तले । मायाबीजं सहस्राक्ष जपतेनसुखीभव
ततो जजाप परमं मायाबीज परात्परम् । लक्षवर्षं निराहारो ध्यानमीलितलोचनः ॥
अकस्माच्चैत्रमासीयनवम्या मध्यगेरवौ । तदेवाऽऽविरभूत्तेजस्तस्मिन्नेवस्थलेपुनः
तेजोमण्डलमध्ये तु कुमारींनवयौवनाम् । भास्वज्जपाप्रसूनाभांबालकोटिरविप्रभाम्
बालशीतांशुमुकुटां वस्त्रान्तर्व्यञ्जितस्तनीम् । चतुर्भिर्वरहस्तैस्तु वरपाशाङ्कुशाभयान्
दधानां रमणीयाङ्गींकोमलाङ्गलतांशिवाम् । भक्तकल्पद्रुमामम्बांनानाभूषणभूषिताम्
त्रिनेत्रांमल्लिकामालाकबरीजूटशोभिताम् । चतुर्दिक्षुचतुर्वेदैर्मूर्तिमद्भिरभिष्टुताम् ॥
दन्तच्छटाभिरभितः पद्मरागीकृतक्षमाम् । प्रसन्नस्मेरवदनां कोटिकन्दर्पसुन्दराम् ॥
रक्ताम्बरपरीधानां रक्तचन्दनचर्चिताम् । उमाभिधानां पुरतो देवीं हैमवतीं शिवाम्
निर्व्याजकरुणामूर्त्तिं सर्वकारणकारणाम् । ददर्श वासवस्तत्र प्रेमगद्गदितान्तरः ॥

प्रेमाऽश्रुपूर्णनयनो रोमाञ्चिततनुस्ततः । दण्डवत्प्रणनामाऽथ पादयोर्जगदीशितुः ॥
तुष्टावविविधैः स्तोत्रैर्भक्तिसन्नतकन्धरः । उवाचपरमप्रीतः किमिदं यक्षमित्यपि
प्रादुर्भूतं च कस्मात्तद्वद सर्वं सुशोभने !। इति तस्यवचःश्रुत्वा प्रोवाचकरुणार्णवा
रूपं मदीयं ब्रह्मैतत्सर्वकारणकारणम् । मायाधिष्ठानभूतं तु सर्वसाक्षिनिरामयम् ॥

सर्वे वेदा यत्पदमामनंति तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीमि ॥ ६३ ॥

ओमित्येकाक्षरं ब्रह्म तदेवाऽऽहुश्च ह्रींमयम् । द्वे बीजेममन्त्रौस्तोमुख्यत्वेनसुरोत्तम
भागद्वयवती यस्मात्सृजामि सकलं जगत् । तत्रैकभागःसम्प्रोक्त सच्चिदानन्दनामकः
माया प्रकृतिसञ्ज्ञस्तु द्वितीयोभाग ईरितः । साचमायापराशक्तिःशक्तिमत्यहमीश्वरी
चन्द्रस्य चन्द्रिकेवेयं ममाभिन्नत्वमागता । साम्यावस्थात्मिकाचैषामायाममसुरोत्तम
प्रलये सर्वजगतो मदभिन्नैव तिष्ठति । प्राणिकर्मपरीपाकवशतः पुनरेव हि ॥ ६८ ॥
रूपं तदेवमव्यक्तं व्यक्तीभावमुपैति च । अन्तर्मुखा तु याऽवस्था सामायेत्यभिधीयते
बहिर्मुखा तु या माया तमःशब्देनसोच्यते । बहिर्मुखात्तमोरूपाज्जायतेसत्त्वसम्भवः
रजोगुणस्तदैव स्यात्सर्गादौ सुरसत्तम !। गुणत्रयात्मकाः प्रोक्ताब्रह्मविष्णुमहेश्वराः

रजोगुणाधिको ब्रह्मा विष्णुःसत्त्वाधिको भवेत् ।
तमोगुणाधिको रुद्रः सर्वकारणरूपधृक् ॥ ७२ ॥

स्थूलदेहो भवेद्ब्रह्मा लिङ्गदेहो हरिःस्मृतः । रुद्रस्तुकारणो देहस्तुरीयात्वहमेव हि

साम्यावस्था तु या प्रोक्ता सर्वान्तर्यामिरूपिणी ।
अत ऊर्ध्वं परं ब्रह्म मद्रूपं रूपवर्जितम् ॥ ७४ ॥

निर्गुणं सगुणं चेतिद्विधामद्रूपमुच्यते । निर्गुणं माययाहीनं सगुणं माययायुतम्
साऽहं सर्वं जगत्सृष्ट्वा तदन्तः सम्प्रविश्य च । प्रेरयाम्यनिशंजीवंयथाकर्मयथाश्रुतम्
सृष्टिस्थितितिरोधाने प्रेरयाम्यहमेव हि । ब्रह्माणं च तथाविष्णुं रुद्रंवैकारणात्मकम्

मद्भयाद्वाति पवनो भीत्या सूर्यश्च गच्छति ।
इन्द्राऽग्निमृत्यवस्तद्वत्साऽहं सर्वोत्तमा स्मृता ॥ ७८ ॥

मत्प्रसादाद्भवद्भिस्तु जयो लब्धोऽस्ति सर्वथा । युष्मानहं नर्तयामि काष्ठपुत्तलिकोपमान्

कदाचिद् देवविजयं दैत्यानां विजयं क्वचित् ।

स्वतन्त्रा स्वेच्छया सर्वं कुर्वे कर्मानुरोधतः ॥ ८० ॥

तां मां सर्वात्मिकां यूयं विस्मृत्य निजगर्वतः ।

अहङ्कारावृतात्मानो मोहमाप्ता दुरन्तकम् ॥ ८१ ॥

अनुग्रहं ततः कर्तुं युष्मद्देहादनुत्तमम् । निःसृतं सहसा तेजो मदीयं यक्षमित्यपि ॥

अतः परं सर्वभावैर्हित्वा गर्वं तु देहजम् । मामेव शरणं यात सच्चिदानन्दरूपिणीम्

व्यास उवाच

इत्युक्त्वा च महादेवी मूलप्रकृतिरीश्वरी । अन्तर्धानं गता सद्यो भक्त्या देवैरभिष्टुता

ततः सर्वे स्वगर्वं तु विहाय पदपङ्कजम् । सम्यगाराधयामासुर्भगवत्याः परात्परम् ॥

त्रिसन्ध्यं सर्वदा सर्वे गायत्रीजपतत्पराः । यज्ञभागादिभिः सर्वे देवीं नित्यं सिषेविरे

एवं सत्ययुगे सर्वे गायत्रीजपतत्पराः । तारहृल्लेखयोश्चाऽपि जपे निष्णातमानसाः

न विष्णूपासना नित्या वेदेनोक्ता तु कुत्रचित् ।

न विष्णुदीक्षा नित्याऽस्ति शिवस्याऽपि तथैव च ॥ ८८ ॥

गायत्र्युपासना नित्या सर्ववेदैः समीरिता ।

यया विना त्वधः पातो ब्राह्मणस्याऽस्ति सर्वथा ॥ ८९ ॥

तावता कृतकृत्यत्वं नान्यापेक्षा द्विजस्य हि ।

गायत्रीमात्रनिष्णातो द्विजो मोक्षमवाप्नुयात् ॥ ९० ॥

कुर्यादन्यन्न वा कुर्यादिति प्राह मनुः स्वयम् ।

विहाय तां तु गायत्रीं विष्णूपास्तिपरायणः ॥ ९१ ॥

शिवोपास्तिरतो विप्रो नरकं याति सर्वथा । तस्मादाद्ययुगे राजन्गायत्रीजपतत्पराः

देवीपदाम्बुजरता आसन्सर्वे द्विजोत्तमाः ॥ ९२ ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां द्वादशस्कन्धे

पराशक्तेराविर्भाववर्णनं नामाऽष्टमोऽध्यायः ॥ ८ ॥

## नवमोऽध्यायः

### ब्राह्मणादीनां गायत्रीभिन्नान्यदेवोपासनाश्रद्धाहेतुनिरूपणम्

व्यास उवाच

कदाचिदथ काले तु दशपञ्चसमा विभो! । प्राणिनां कर्मवशतो न ववर्ष शतक्रतुः ॥
अनावृष्ट्याऽतिदुर्भिक्षमभवत्क्षयकारकम् । गृहे गृहे शवानांतुसङ्ख्याकर्तुं न शक्यते
केचिदश्वान्वराहान्वा भक्षयन्ति क्षुधार्दिताः । शवानि चमनुष्याणांभक्षयन्त्यपरेजनाः
बालकं बालजननी स्त्रियं पुरुष एव च । भक्षितुं चलिताः सर्वेक्षुधयापीडिता नराः
ब्राह्मणा बहवस्तत्र विचारं चक्रुरुत्तमम् । तपोधनो गौतमोऽस्तिसनःखेदंहरिष्यतिः
सर्वैर्मिलित्वा गन्तव्यं गौतमस्याश्रमेऽधुना । गायत्रीजपसंसक्तगौतमस्याश्रमेऽधुना
सुभिक्षं श्रूयते तत्र प्राणिनोबहवो गताः । एवंविमृश्यभूदेवाःसाग्निहोत्राःकुटुम्बिनः

सगोधनाः सदासाश्च गौतमस्याऽऽश्रमं ययुः ।
पूर्वदेशाद्ययुः केचित्केचिद्दक्षिणदेशतः ॥ ८ ॥

पाश्चात्या औत्तराहाश्च नानादिग्भ्यःसमाययुः । दृष्ट्वासमाजंविप्राणांप्रणनामसगौतमः
आसनाद्युपचारैश्च पूजयामास वाडवान् । चकार कुशलप्रश्नं ततश्चागमकारणम् ॥

ते सर्वे स्वस्ववृत्तान्तं कथयामासुरुत्स्मयाः ।
दृष्ट्वा तान्दुःखितान्विप्रानभयं दत्तवान्मुनिः ॥ ११ ॥

युष्माकमेतत्सदनं भवद्दासोऽस्मि सर्वथा । काचिन्ताभवतांविप्रामयिदासेविराजति
धन्योऽहमस्मिन्समये यूयं सर्वे तपोधनाः । येषां दर्शनमात्रेण दुष्कृतं सुकृतायते ॥
ते सर्वे पादरजसा पावयन्ति गृहं मम । को मदन्यो भवेद्धन्यो भवतां समनुग्रहात्

स्थेयं सर्वैः सुखेनैव सन्ध्याजपपरायणैः ।

व्यास उवाच

इति सर्वान्समाश्वास्य गौतमो मुनिराट् ततः ॥ १५ ॥

गायत्रीं प्रार्थयामास भक्तिसन्नतकन्धरः । नमो देवि महाविद्ये वेदमातः परात्परे ॥
व्याहृत्यादिमहामन्त्ररूपे प्रणवरूपिणि । साम्यावस्थात्मिके मातर्नमो ह्रीङ्काररूपिणि

स्वाहास्वधास्वरूपे त्वां नमामि सकलार्थदाम् ।

भक्तकल्पलतां देवीमवस्थात्रयसाक्षिणीम् ॥ १८ ॥

तुर्यातीतस्वरूपाञ्च सच्चिदानन्दरूपणिम् । सर्ववेदान्तसम्वेद्यां सूर्यमण्डलवासिनीम्
प्रातर्बालां रक्तवर्णां मध्याह्नयुवतींपराम् । सायाह्ने कृष्णवर्णांतांवृद्धांनित्यंनमाम्यहम्
सर्वभूतारणे देवि ! क्षमस्व परमेश्वरि ! । इति स्तुता जगन्माता प्रत्यक्षं दर्शनं ददौ
पूर्णपात्रं ददौ तस्मैयेनस्यात्सर्वपोषणम् । उवाचमुनिमस्मात्माग्यंयकामंत्वमिच्छसि
तस्य पूर्तिकरं पात्रं मया दत्तंभविष्यति । इत्युक्त्वाऽन्तर्दधे देवी गायत्रीपरमाकला
अन्नानांराशयस्तस्माम्निर्गताःपर्वतोपमाः । षड्रसाविविधाराजंस्तृणानिविविधानिच

भूषणानि च दिव्यानि क्षौमानि वसनानि च ।

यज्ञानां च समारम्भाः पात्राणि विविधानि च ॥ २५ ॥

यद्यदिष्टमभूद्राजन्मुनेस्तस्य महात्मनः । तत्सर्वं निर्गतं तस्माद्गायत्रीपूर्णपात्रतः २६
अथाऽऽहूयमुनीन्सर्वान्मुनिराड्गौतमस्तदा । धनं धान्यं भूषणानि वसनानिददौ मुदा
गोमहिष्यादिपशवो निर्गताःपूर्णपात्रतः । निर्गतान्यज्ञसम्भारान्स्रुक्स्रुवप्रभृतीन् ददौ
ते सर्वे मिलितायज्ञांश्चक्रिरे मुनिवाक्यतः । स्थानं तदेवभूयिष्ठमभवत्स्वर्गसन्निभम्
यत्किञ्चित्त्रिषु लोकेषु सुन्दरं वस्तु दृश्यते । तत्सर्वं तत्र निष्पन्नंगायत्रीदत्तपात्रतः
देवाङ्गनासमा दाराः शोभन्ते भूषणादिभिः । मुनयो देवसदृशा वस्त्रचन्दनभूषणैः ३१
नित्योत्सवः प्रववृते मुनेराश्रममण्डले । न रोगादिभयं किञ्चिन्न च दैत्यभयं क्वचित्
स मुनेराश्रमो जातः समन्ताच्छतयोजनः । अन्येचप्राणिनोयेऽपितेऽपितत्रसमागताः

तांश्च सर्वान्पुपोषाऽयं दत्त्वाऽभयमथाऽऽत्मवान् ।

नानाविधैर्महायज्ञैर्विधिवत्कल्पितैः सुराः ॥ ३४ ॥

सन्तोषं परमं प्रापुर्मुनेश्चैव जगुर्यशः । सभायां वृत्रहा भूयो जगौ लोकं महायशाः ॥
अहो अयं नः किल कल्पपादपो मनोरथान्पूरयति प्रतिष्ठितः ।

नोचेदकाण्डे क हविर्वपा वां सुदुर्लभा यत्र तु जीवनाशा ॥ ३६ ॥
इत्थं द्वादशवर्षाणि पुपोष मुनिपुङ्गवान् । पुत्रवन्मुनिराड्गर्वगन्धेन परिवर्जितः ॥३७
गायत्र्याः परमं स्थानं चकार मुनिसत्तमः । यत्र सर्वैर्मुनिवरैः पूज्यते जगदम्बिका
त्रिकालं परया भक्त्या पुरश्चरणकर्मभिः । अद्यापि तत्र देवी सा प्रातर्बाला तु दृश्यते
मध्याह्ने युवती वृद्धा सायङ्काले तु दृश्यते । तत्रैकदा समायातो नारदो मुनिसत्तमः
रणयन्महतींगायन्गायत्र्याःपरमान्गुणान् । निषसादसभामध्येमुनीनांभावितात्मनाम्
गौतमादिभिरत्युच्चैः पूजितः शान्तमानसः । कथाश्चकारविविधायशसोगौतमस्यच
ब्रह्मर्षे देवसदसि देवराट् तव यद्यशः । जगौ बहुविधं स्वच्छं मुनिपोषणजं परम् ॥
श्रुत्वा शचीपतेर्वाणीं त्वां द्रष्टुमहमागतः । धन्योऽसि त्वंमुनिश्रेष्ठजगदम्बाप्रसादतः
इत्युक्त्वा मुनिवीर्यं तं गायत्रीसद्मनं ययौ । ददर्श जगदम्बां तां प्रेमोत्फुल्लविलोचनः
तुष्टाव विधिवद्देवीं जगाम त्रिदिवं पुनः ।
अथ तत्र स्थिता ये ते ब्राह्मणा मुनिपोषिताः ॥ ४६ ॥
उत्कर्षं तु मुनेः श्रुत्वाऽसूयया खेदमागताः । यथाऽस्य नयशो भूयात्कर्तव्यंसर्वथैवहि
काले समागतेपश्चादिति सर्वैस्तुनिश्चितम् । ततःकालेनकियताऽप्यभूद्वृष्टिर्धरातले
सुभिक्षमभवत्सर्वं देशेषु नृपसत्तम ॥ श्रुत्वा वार्तां सुभिक्षस्य मिलिताः सर्ववाडवाः
गौतमं शप्तुमुद्योगं हाहा राजन्प्रचक्रिरे । धन्यौ तेषां च पितरौ ययोरुत्पत्तिरीदृशी
कालस्य महिमा राजन्वक्तुं केन हि शक्यते । गौर्निर्मिता माययैका मुमूर्षुर्जरतीनृप
जगाम सा चशालायांहोमकालेमुनेस्तदा । हुंहुंशब्दैर्वारितासाप्राणांस्तत्याजतत्क्षणे
गौर्हताऽनेनदुष्टेनेत्येवं ते चुक्रुशुर्द्विजाः । होमं समाप्य मुनिराड्विस्मयं परमं गतः
समाधिमीलिताक्षः संश्चिन्तयामास कारणम् । कृतंसर्वैर्द्विजैरेतदितिज्ञात्वातदैवसः
दधार कोपं परमं प्रलये रुद्रकोपवत् । शशाप च ऋषीन्सर्वान्कोपसंरक्तलोचनः ॥५५
वेदमातरि गायत्र्यां तद्ध्याने तन्मनोऽपि । भवताऽनुन्मुखा यूयं सर्वथा ब्राह्मणाधमाः
वेदे वेदोक्तयज्ञेषु तद्वार्तासु तथैव च । भवताऽनुन्मुखा यूयं सर्वथा ब्राह्मणाधमाः ॥
शिवे शिवस्य मन्त्रे च शिवशास्त्रे तथैव च । भवताऽनुन्मुखायूयंसर्वदाब्राह्मणाधमाः

मूलप्रकृत्याः श्रीदेव्यां तद्ध्याने तत्कथासु च।
भवताऽनुन्मुखा यूयं सर्वदा ब्राह्मणाधमाः ॥ ५६ ॥

देवीमन्त्रे तथा देव्याः स्थानेऽनुष्ठानकर्मणि। भवताऽनुन्मुखायूयंसर्वदाब्राह्मणाधमाः
देव्युत्सवदिदृक्षायां देवीनामानुकीर्तने। भवताऽनुन्मुखा यूयं सर्वदा ब्राह्मणाधमाः
देवीभक्तस्य सान्निध्ये देवीभक्तार्चने तथा। भवताऽनुन्मुखा यूयं सर्वदाब्राह्मणाधमाः
शिवोत्सवदिदृक्षायां शिवभक्तस्य पूजने। भवताऽनुन्मुखा यूयं सर्वदा ब्राह्मणाधमाः
रुद्राक्षेबिल्वपत्रे च तथा शुद्धे च भस्मनि। भवताऽनुन्मुखा यूयंसर्वदा ब्राह्मणाधमाः
श्रौतस्मार्तसदाचारेज्ञानमार्गे तथैव च। भवताऽनुन्मुखा यूयं सर्वदा ब्राह्मणाधमाः॥
अद्वैतज्ञाननिष्ठायां शान्तिदान्त्यादिसाधने। भवताऽनुन्मुखायूयं सर्वदाब्राह्मणाधमाः
नित्यकर्माद्यनुष्ठानेऽप्यग्निहोत्रादिसाधने। भवताऽनुन्मुखा यूयं सर्वदा ब्राह्मणाधमाः
स्वाध्यायाध्ययनेश्चैव तथा प्रवचनेन च। भवताऽनुन्मुखा यूयं सर्वदा ब्राह्मणाधमः
गोदानादिषु दानेषु पितृश्राद्धेषु चव हि। भवताऽनुन्मुखा यूयं सर्वदा ब्राह्मणाधमाः
कृच्छ्रचान्द्रायणे चैव प्रायश्चित्ते तथैव च। भवताऽनुन्मुखा यूयं सर्वदा ब्राह्मणाधमाः
श्रीदेवीभिन्नदेवेषु श्रद्धाभक्तिसमन्विताः। शङ्खचक्राद्यङ्किताश्च भवत ब्राह्मणाधमाः

कापालिकमतासक्ता बौद्धशास्त्ररताः सदा।
पाषण्डाचारनिरता भवत ब्राह्मणाधमाः ॥ ७२ ॥

पितृमातृसुताभ्रातृकन्याविक्रयिणस्तथा। भार्याविक्रयिणस्तद्वद्भवत ब्राह्मणाधमाः
वेदविक्रयिणस्तद्वत्तीर्थविक्रयिणस्तथा। धर्मविक्रयिणस्तद्वद्भवत ब्राह्मणाधमाः
पाञ्चरात्रे कामशास्त्रे तथा कापालिके मते। बौद्धे श्रद्धायुता यूयं भवत ब्राह्मणाधमाः
मातृकन्यागामिनश्च भगिनीगामिनस्तथा। परस्त्रीलम्पटाः सर्वे भवत ब्राह्मणाधमाः

युष्माकं वंशजाताश्च स्त्रियश्च पुरुषास्तथा।
मद्दत्तशापदग्धास्ते भविष्यन्ति भवत्समा. ॥ ७७ ॥

किं मया बहुनोक्तेन मूलप्रकृतिरीश्वरी। गायत्री परमा भूयाद्युष्मासु खलु कोपिता

अन्धकूपादिकुण्डेषु युष्माकं स्यात्सदा स्थितिः।

व्यास उवाच

वाग्दण्डमीदृशं कृत्वाऽप्युपस्पृश्य जलं ततः ॥ ७९ ॥

जगाम दर्शनार्थं च गायत्र्याः परमोत्सुकः । प्रणनाम मह देवीं साऽपि देवी परात्परा

ब्राह्मणानां कृतिं दृष्ट्वा स्मयं चित्ते चकार ह । अद्याऽपि तस्या वदनं स्मययुक्तं च दृश्यते

उवाच मुनिवर्यं तं स्मयमानमुखाम्बुजा । भुजङ्गायार्पितं दुग्धं विषायैवोपजायते ॥

शान्तिं कुरु महाभाग ! कर्मणो गतिरीदृशी ।

इति देवीं प्रणम्याऽथ ततोऽगात्स्वाऽऽश्रमं प्रति ॥ ८३ ॥

ततो विप्रैः शापदग्धैर्विस्मृता वेदराशयः । गायत्रीविस्मृताम्वैस्तदद्भुतमिवाऽभवत्

ते सर्वेऽथ मिलित्वा तु पश्चात्तापयुतास्तथा । प्रणेमुर्मुनिवर्यं तं दण्डवत्पतिता भुवि

नोचुः किञ्चन वाक्यं तु लज्जयाऽधोमुखाः स्थिताः ।

प्रसीदेति प्रसीदेति प्रसीदेति पुनः पुनः ॥ ८६ ॥

प्रार्थयामासुरभितः परिवार्य मुनीश्वरम् । करुणापूर्णहृदयो मुनिस्तान्समुवाच ह ॥

कृष्णावतारपर्यन्तं कुम्भीपाकेभवेत्स्थितिः । न मे वाक्यं मृषा भूयादिति जानीथ सर्वथा

ततः परं कलियुगे भुवि जन्म भवेद्धि वाम् । मदुक्तं सर्वमेतत्तु भवेदेव न चाऽन्यथा

मच्छापस्य विमोक्षार्थं युष्माकं स्याद्यदीच्छया । तर्हि सेव्यं सदा मनवगायत्रीपदपङ्कजम्

व्यास उवाच

इतिसर्वान्विसृज्याऽथगौतमोमुनिसत्तमः । प्रारब्धमितिमत्वातुचित्तेशान्तिंजगामह

एतस्मात्कारणाद्राजन्गते कृष्णे तु धीमति । कलौयुगेप्रवृत्तेतुकुम्भीपाकात्तुनिर्गताः

भुविजाता ब्राह्मणाश्च शापदग्धाःपुरातुये । सन्ध्यात्रयविहीनाश्चगायत्रीभक्तिवर्जिताः

वेदभक्तिविहीनाश्च पाषण्डमतगामिनः । अग्निहोत्रादिसत्कर्मस्वधास्वाहाविवर्जिताः

मूलप्रकृतिमव्यक्तां नैव जानन्ति कर्हिचित् । तप्तमुद्राङ्किताः केचित्कामाचाररताःपरे

कापालिकाः कौलिकाश्च बौद्धाजैनास्तथापरे । पण्डिताअपितेसर्वेदुराचारप्रवर्तकाः

लम्पटाः परदारेषु दुराचारपरायणाः । कुम्भीपाके पुनः सर्वे यास्यन्तिनिजकर्मभिः

तस्मात्सर्वात्मनाराजन्संसेव्या परमेश्वरी ।

न विष्णूपासना नित्या न शिवोपासना तथा ॥ ६८ ॥
नित्याचोपासना शक्तेर्या विना तु पतत्यधः । सर्वमुक्तंसमासेन यत्पृष्टं तत्त्वयाऽनघ!
अतः परं मणिद्वीपवर्णनं श्रृणु सुन्दरम् । यत्परस्थानमाद्याया भुवनेश्या भवारणेः ॥

इती श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायांद्वादशस्कन्धे ब्राह्मणादीना गायत्रीभिन्नान्यदेवोपासनाश्रद्धाहेतुनिरूपणंनाम नवमोऽध्यायः ॥ ९ ॥

---

## दशमोऽध्यायः

### मणिद्वीपवर्णनम्

व्यास उवाच

ब्रह्मलोकादूर्ध्वभागेसर्वलोकोऽस्तियःश्रुतः । मणिद्वीपःसएवाऽस्तियत्रदेवीविराजते
सर्वस्मादधिकोयस्मात्सर्वलोकस्ततःस्मृतः । पुरापराम्बयैवायंकल्पितोमनसेच्छया
सर्वादौ निजवासार्थं प्रकृत्या मूलभूतया । कैलाशादधिकोलोकोवैकुण्ठादपिचोत्तमः
गोलोकादपि सर्वस्मात्सर्वलोकोऽधिकः स्मृतः ।
न तत्समं त्रिलोक्यां तु सुन्दरं विद्यते क्वचित् ॥ ४ ॥
छत्रीभूतं त्रिजगतो भवसन्तापनाशकम् । छायाभूतंतदेवाऽस्तिब्रह्माण्डानांतुसत्तम!
बहुयोजनविस्तीर्णो गम्भीरस्तावदेव हि । मणिद्वीपस्यपरितोवर्तते सुधोदधिः ॥
मरुत्सङ्घट्टनोत्कीर्णतरङ्गशतसङ्कुलः । रत्नाच्छवालुकायुक्तो झषशङ्खसमाकुलः ॥ ७
वीचिसङ्घर्षसञ्जातलहरीकणशीतलः । नानाध्वजसमायुक्तनानापोतगतागतैः ॥ ८ ॥
विराजमानः परितस्तीररत्नद्रुमोमहान् । तदुत्तरमयो धातुर्निर्मितो गगने ततः ॥
सप्तयोजनविस्तीर्णः प्राकारो वर्तते महान् । नानाशस्त्रप्रहरणा नानायुद्धविशारदाः
रक्षका निवसन्त्यत्र मोदमानाः समन्ततः । चतुर्द्वारसमायुक्तो द्वारपालशतान्वितः

नानागणैःपरिवृतो देवीभक्तियुतैर्नृप । दर्शनार्थं समायान्तिये देवा जगदीशितुः
तेषां गणा वसन्त्यत्र वाहनानि च तत्र हि । विमानशतसङ्घर्षघण्टास्वनसमाकुलः ॥
हयहेषाखुराघातबधिरीकृतदिङ्मुखः । गणैः किलकिलारावैर्वेत्रहस्तैश्च ताडिताः ॥
सेवका देवसङ्घानांभ्राजन्तेतत्रभूमिप !। तस्मिन्कोलाहलेराजन्नशब्दः केनचित्क्वचित्
कस्यचिच्छ्रूयतेऽत्यन्तंनानाध्वनिसमाकुले । पदे पदे मिष्टवारिपरिपूर्णसरांसि च
वाटिका विविधा राजन् रत्नद्रुमविराजिताः । तदुत्तरं महासारधातुनिर्मितमण्डलः
सालोऽपरो महानस्ति गगनस्पर्शियच्छिरः । तेजसा स्याच्छतगुणःपूर्वसालादयंपरः
गोपुरद्वारसहितो बहुवृक्षसमन्वितः । यावृक्षजातयः सन्ति सर्वास्तास्तत्रसन्ति च
निरन्तरं पुष्पयुताःसदा फलसमन्विताः । नवपल्लवसंयुक्ताः परसौरभसङ्कुलाः ॥ २०
पनसा बकुला लोध्राः कर्णिकाराश्च शिंशपाः । देवदारुकाञ्चनारा आम्राश्चैव सुमेरवः
लिकुचाहिङ्गुलाश्चैलालवङ्गाःकट्फलास्तथा । पाटलामुचुकुन्दाश्चफलिन्योजघनेफलाः

नालास्तमालाः सालाश्च कङ्कोला नागभद्रकाः ।
पुन्नागाः पीलवः साल्वका वै कर्पूरशाखिनः ॥ २३ ॥
अश्वकर्णा हस्तिकर्णास्तालपर्णाश्च दाडिमाः ।
गणिका बन्धुजीवाश्च जम्बीराश्च कुरण्डकाः ॥ २४ ॥

चाम्पेया बन्धुजीवाश्च तथा वै कनकद्रुमाः । कालागुरुद्रुमाश्चैव तथा चन्दनपादपाः
खर्जूरायूथिकास्तालपर्ण्यश्चैव तथेक्षवः । क्षीरवृक्षाश्च खदिराश्चिचाभल्लातकास्तथा
रुचकाः कुटजा वृक्षा बिल्ववृक्षास्तथैव च । तुलसीनां वनान्येवं मल्लिकानां तथैव च
इत्यादितरुजातीनां वनान्युपवनानि च । नानावापीशतैर्युक्तान्येवं सन्ति धराधिप !॥

कोकिलारावसंयुक्ता गुञ्जद्भ्रमरभूषिताः ।
निर्यासस्राविणः सर्वे स्निग्धच्छायास्तरूत्तमाः ॥ २९ ॥

नानाऋतुभवा वृक्षा नानापक्षिसमाकुलाः । नानारसस्राविणीभिर्नदीभिरतिशोभिताः
पारावतशुकव्रातसारिकापक्षमारुतैः । हंसपक्षसमुद्भूता वातव्रातैश्चलद्द्रुमम् ॥ ३१॥
सुगन्धग्राहिपवनपूरितं तद्वनोत्तमम् । सहितं हरिणीयूथैर्धावमानैरितस्ततः ॥ ३२॥

नृत्यद्बर्हिकदम्बस्य केकारावैः सुखप्रदैः । नादितं तद्वनं दिव्यं मधुस्राविं समन्ततः॥
कांस्यसालादुत्तरे तु ताम्रसालः प्रकीर्तितः । चतुरस्रसमाकार उन्नत्या सप्तयोजनः

द्वयोस्तु सालयोर्मध्ये सम्प्रोक्ता कल्पवाटिका ।
येषां तरूणां पुष्पाणि काञ्चनाभानि भूमिप !॥ ३५ ॥

पत्राणि काञ्चनाभानि रत्नबीजफलानि च । दशयोजनगन्धो हि प्रसर्पति समन्ततः॥
तद्वनं रक्षितं राजन्वसन्तेनर्तुनाऽनिशम् । पुष्पसिंहासनासीनः पुष्पच्छत्रविराजितः
पुष्पभूषाभूषितश्च पुष्पासवविघूर्णितः । मधुश्रीर्माधवश्रीश्च द्वेभार्ये तस्य सम्मते ॥
क्रीडतः स्मेरवदने सुमस्तवककन्दुकैः । अतीव रम्यं विपिनं मधुस्रावि समन्ततः ॥
दशयोजनपर्यन्तं कुसुमामोदवायुना । पूरितं दिव्यगन्धर्वैः साङ्गनैर्गानलोलुपैः ॥४०॥
शोभितं तद्वनं दिव्यं मत्तकोकिलनादितम् । वसन्तलक्ष्मीसंयुक्तं कामिकामप्रवर्धनम्

ताम्रसालादुत्तरत्र सीससालः प्रकीर्तितः ।
समुच्छ्रायः स्मृतोऽप्यस्य सप्तयोजनसङ्ख्यया ॥ ४२ ॥

सन्तानवाटिकामध्ये सालयोस्तु द्वयोर्नृप !। दशयोजनगन्धस्तु प्रसूनाना समन्ततः
हिरण्याभानि कुसुमान्युत्फुल्लानि निरन्तरम् । अमृतद्रवसंयुक्तफलानि मधुराणि च
ग्रीष्मर्तुर्नायकस्तस्या वाटिकायानृपोत्तम !। शुक्रश्रीश्चशुचिश्रीश्चद्वेभार्येतस्यसम्मते
सन्तापत्रस्तलोकास्तु वृक्षमूलेषु संस्थिताः । नानासिद्धैःपरिवृतोनानादेवैःसमन्वितः
विलासिनीनां वृन्दैस्तु चन्दनद्रवपङ्किलैः । पुष्पमालाभूषितैस्तु तालवृन्तकराम्बुजैः
प्राकारः शोभितोराजञ्छीतलाम्बुनिषेविभिः । सीससालादुत्तरत्राप्यारकूटमयःशुभः
प्राकारो वर्तते राजन्मुनियोजनदैर्घ्यवान् । हरिचन्दनवृक्षाणां वाटीमध्येतयोःस्मृता
सालयोरधिनाथस्तु वर्षर्तुर्मेघवाहनः । विद्युत्पिङ्गलनेत्रश्च जीमूतकवचः स्मृतः ५०
वज्रनिर्घोषमुखरश्चेन्द्रधन्वा समन्ततः । सहस्रशो वारिधारामुञ्चन्नास्ते गणाग्रतः ५१

नभःश्रीश्च नभस्यश्रीः स्वरस्यारस्यमालिनी ।
अम्बा दुलानिरत्निश्चाऽभ्रमन्ती मेघयन्तिका ॥ ५२ ॥

वर्षयन्ती चिपुणिका वारिधारा च सम्मताः । वर्षर्तोर्द्वादशप्रोक्ताःशक्तयोमदविह्वलाः

नवपल्लववृक्षाश्च नवीनलतिकान्विताः। हरितानि तृणान्येव वेष्टिता यैर्धराऽखिला ॥
नदीनदप्रवाहाश्च प्रवहन्ति च वेगतः। सरांसि कलुषाम्बूनि रागिचित्तसमानि च ॥
वसन्ति देवाः सिद्धाश्च ये देवीकर्मकारिणः। वापीकूपतडागाश्च येदेव्यर्थंसमर्पिताः
ते गणा निवसन्त्यत्र सविलासाश्च साङ्गनाः। आरकूटमयादग्रे सप्तयोजनदैर्घ्यवान्
पञ्चलोहात्मकः सालो मध्येमन्दारवाटिका। नानापुष्पलताकीर्णानानापल्लवशोभिता
अधिष्ठाताऽत्र सम्प्रोक्तः शरदृतुरनामयः। इषलक्ष्मीरूर्जलक्ष्मीर्द्वे भार्ये तस्य सम्मते
नानासिद्धा वसन्त्यत्र साङ्गनाः सपरिच्छदाः। पञ्चलोहमयादग्रे सप्तयोजनदैर्घ्यवान्
दीप्यमानो महाशृङ्गैर्वर्तते रौप्यसालकः। पारिजाताटवीमध्ये प्रसूनस्तबकान्विता
दशयोजनगन्धीनि कुसुमानि समन्ततः। मोदयन्ति गणान्सर्वान्ये देवीकर्मकारिणः

तत्राऽधिनाथः सम्प्रोक्तो हेमन्तर्तुर्महोज्ज्वलः।
सगणः सायुधः सर्वान् रागिणो रञ्जयन्नृप !॥ ६३ ॥

सहश्रीश्च सहस्यश्रीर्द्वे भार्ये तस्य सम्मते। वसन्ति तत्रसिद्धाश्चयेदेवीव्रतकारिणः
रौप्यसालमयादग्रे सप्तयोजनदैर्घ्यवान्। सौवर्णसालः सम्प्रोक्तस्तप्तहाटककल्पितः
मध्ये कदम्बवाटी तु पुष्पपल्लवशोभिता। कदम्बमदिराधाराः प्रवर्तन्ते सहस्रशः ६६
याभिर्निपीतपीताभिर्निजानन्दोऽनुभूयते। तत्राधिनाथः सम्प्रोक्तः शैशिरर्तुर्महोदयः
तपःश्रीश्च तपस्यश्रीर्द्वेभार्ये तस्य सम्मते। मोदमानः सहैताभ्यांवर्तते शिशिराकृतिः
नानाविलाससंयुक्तो नानागणसमावृतः। निवसन्ति महासिद्धा ये देवीदानकारिणः
नानाभोगसमुत्पन्नमहानन्दसमन्विताः। साङ्गनाः परिवारैस्तु सङ्घशः परिवारिता ॥
स्वर्णसालमयादग्रे मुनियोजनदैर्घ्यवान्। पुष्परागमयः सालः कुङ्कुमारुणविग्रहः ७१
पुष्परागमयी भूमिर्वनान्युपवनानि च। रत्नवृक्षालवालाश्च पुष्परागमयाः स्मृताः ॥
प्राकारो यस्य रत्नस्य तद्रत्नरचिता द्रुमाः। वनभूः पक्षिणश्चैव रत्नवर्णजलानि च ॥

मण्डपा मण्डपस्तम्भाः सरांसि कमलानि च।
प्राकारे तत्र यद्यत्स्यात्तत्सर्वं तत्समं भवेत् ॥ ७४ ॥

परिभाषेयमुद्दिष्टा रत्नसालादिषु प्रभो। तेजसा स्याल्लक्षगुणः पूर्वसालात्परो नृप!॥

दिक्पाला निवसन्त्यत्र प्रतिब्रह्माण्डवर्तिनाम् ।
दिक्पालानां समष्ट्यात्मरूपाः स्फूर्जद्वरायुधाः ॥ ७६ ॥
पूर्वाशायां समुत्तुङ्गाश्टङ्गा पूरमरावती । नानोपवनसंयुक्तो महेन्द्रस्तत्र राजते ॥७७
स्वर्गशोभा च या स्वर्गे यावती स्यात्ततोऽधिका ।
समष्टिशतनेत्रस्य सहस्रगुणतः स्मृता ॥ ७८ ॥
ऐरावतसमारूढो वज्रहस्तः प्रतापवान् । देवसेनापरिवृतो राजतेऽत्र शतक्रतुः ॥७९॥
देवाङ्गनागणयुता शची तत्र विराजते । वह्निकोणे वह्निपुरी वह्निपूः सदृशी नृप ८०
स्वाहास्वधासमायुक्तो वह्निस्तत्र विराजते । निजवाहनभूषाढ्यो निजदेवगणैर्वृतः
याम्याशायां यमपुरी तत्र दण्डधरो महान् । स्वभटैर्वेष्टितो राजन्चित्रगुप्तपुरोगमैः
निजशक्तियुतो भास्वत्तनयोऽस्ति यमो महान् ।
नैर्ऋत्यां दिशि राक्षस्या राक्षसैः परिवारितः ॥ ८३ ॥
खड्गधारा स्फुरन्नास्ते निर्ऋतिर्निजशक्तियुक् ।
वारुण्यां वरुणो राजा पाशधारी प्रतापवान् ॥ ८४ ॥
महाझषसमारूढो वारुणीमधुविह्वलः । निजशक्तिसमायुक्तो निजयादोगणान्वितः
समास्ते वारुणेलोकेवरुणानीरताकुलः । वायुकोणेवायुलोकोवायुस्तत्राऽधितिष्ठति
वायुसाधनसंसिद्धयोगिभिःपरिवारितः । ध्वजहस्तोविशालाक्षोमृगवाहनसंस्थितः
मरुद्गणैःपरिवृतोनिजशक्तिसमन्वितः । उत्तरस्यांदिशिमहान्यक्षलोकोऽस्तिभूमिप!
यक्षाधिराजस्तत्राऽऽस्ते वृद्धिऋद्ध्यादिशक्तिभिः ।
नवभिर्निधिभिर्युक्तस्तुन्दिलो धननायकः ॥ ८६ ॥
मणिभद्रः पूर्णभद्रो मणिमान्मणिकन्धरः । मणिभूषोमणिस्रग्वी मणिकार्मुकधारकः
इत्यादियक्षसेनानीसहितो निजशक्तियुक् । ईशानकोणे सम्प्रोक्तो रुद्रलोको महत्तरः
अनर्घ्यरत्नखचितो यत्र रुद्रोऽधिदैवतम् । मन्युमान्दीप्तनयनो बद्धपृष्ठमहेषुधिः
स्फूर्जद्धनुर्वामहस्तोऽधिज्यधन्वभिरावृतः । स्वसमानैरसङ्ख्यातरुद्रैः शूलवरायुधैः
विकृतास्यैः करालास्यैर्वमद्वह्निभिरास्यतः । दशहस्तैः शतकरैः सहस्रभुजसंयुतैः

दशपादैर्दशग्रीवैस्त्रिनेत्रैरुग्रमूर्तिभिः । अन्तरिक्षचरा ये च ये च भूमिचराः स्मृताः
रुद्राध्यायेस्मृतारुद्रास्तैःसर्वैश्चसमावृतः । रुद्राणीकोटिसहितोभद्रकाल्यादिमातृभिः
नानाशक्तिसमाविष्टडामर्यादिगणावृतः । वीरभद्रादिसहितो रुद्रो राजन्विराजते
मुण्डमालाधरो नागवलयो नागकन्धरः । व्याघ्रचर्मपरीधानो गजचर्मोत्तरीयकः ।
चिताभस्माङ्गलिप्ताङ्गः प्रमथादिगणावृतः । निनदड्डमरुध्वानैर्बधिरीकृतदिङ्मुखः ॥
अट्टहासास्फोटशब्दैः सन्त्रासितनभस्तलः । भूतसङ्घसमाविष्टो भूतावासो महेश्वरः
ईशानदिक्पतिःसोऽथ नाम्ना चेशान एव च ।

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायांद्वादशस्कन्धे
मणिद्वीपवर्णनंनाम दशमोऽध्यायः ॥ १० ॥

---

## एकादशोऽध्यायः

### पद्मरागादिमणिनिर्मितप्राकारवर्णनम्

व्यास उवाच

पुष्परागमयादग्रे कुङ्कुमारुणविग्रहः । पद्मरागमयः सालो मध्ये भूश्चैव तादृशी ॥१॥
दशयोजनवान्दैर्घ्ये गोपुरद्वारसंयुतः । तन्मणिस्तंभसंयुक्ता मण्डपाः शतशो नृप
मध्ये भुवि समासीनाश्चतुःषष्टिमिताः कलाः । नानायुधधरा वीरा रत्नभूषणभूषिताः

प्रत्येकलोकस्तासां तु तत्तल्लोकस्य नायकाः ।
समन्तात्पद्मरागस्य परिवार्य स्थिताः सदा ॥ ४ ॥
स्वस्वलोकजनैर्जुष्टाः स्वस्ववाहनहेतिभिः ।
तासां नामानि वक्ष्यामि शृणु त्वं जनमेजय ॥ ५ ॥
पिङ्गलाक्षी विशालाक्षी समृद्धिर्वृद्धिरेव च ।
श्रद्धा स्वाहा स्वधाऽभिख्या माया सञ्ज्ञा वसुन्धरा ॥ ६ ॥

त्रिलोकधात्रीसावित्रीगायत्रीत्रिदशेश्वरी । सुरूपाबहुरूपाचस्कन्दमाताऽच्युतप्रिया
विमला चाऽमला तद्वदरुणीपुनरारुणी । प्रकृतिर्विकृतिः सृष्टिः स्थितिःसंहृतिरेव च
सन्ध्या मातासती हंसीमर्दिका वज्रिकापरा । देवमाता भगवती देवकी कमलासना
त्रिमुखी सप्तमुख्यन्या सुरासुरविमर्दिनी । लम्बोष्ठी चोर्ध्वकेशी च बहुशीर्षा वृकोदरी
रथरेखाह्वया पश्चाच्छशिरेखा तथाऽपरा । गगनवेगा पवनवेगा चैव ततः परम् ॥११॥
अग्रे भुवनपाला स्यात्तत्पश्चान्मदनातुरा । अनङ्गाऽनङ्गमथना तथैवाऽनङ्गमेखला ॥१२
अनङ्गकुसुमा पश्चाद्विश्वरूपा सुरादिका । क्षयङ्करी भवेच्छक्तिरक्षोभ्या च ततः परम्

सत्यवादिन्यथ प्रोक्ता बहुरूपा शुचिव्रता ।
उदाराख्या च वागीशी चतुष्षष्टिमिताः स्मृताः ॥ १४ ॥
ज्वलज्जिह्वाननाः सर्वा वमन्त्यो वह्निमुल्बणम् ।
जलं पिबामः सकलं संहरामो विभावसुम् ॥ १५ ॥

पवनंस्तम्भयामोऽद्यभक्षयामोऽखिलं जगत् । इति वाचं गिरन्ते क्रोधसंरक्तलोचनाः
चापबाणधराः सर्वा युद्धायैवोत्सुकाः सदा । दंष्ट्राकटकटारावैर्बधिरीकृतदिङ्मुखाः

पिङ्गोर्ध्वकेश्यः सम्प्रोक्ताश्चापबाणकराः सदा ।
शताक्षौहिणिका सेनाप्येकैकस्याः प्रकीर्तिता ॥ १८ ॥

एकैकशक्तेः सामर्थ्यं लक्षब्रह्माण्डनाशने । शताक्षौहिणिका सेना तादृशी नृपसत्तम

किं न कुर्याज्जगत्यस्मिन्न शक्यं वक्तुमेव तत् ।
सर्वाऽपि युद्धसामग्री तस्मिन्साले स्थिता मुने ! ॥ २० ॥

रथानां गणना नास्ति हयानां करिणां तथा । शस्त्राणां गणनातद्वद्गणानां गणनातथा
पद्मरागमयादग्रे गोमेदमणिनिर्मितः । दशयोजनदैर्घ्येण प्राकारो वर्तते महान् ॥ २२ ॥
भास्वज्जपप्रसूनाभो मध्यभूस्तस्यतादृशी । गोमेदकल्पितान्येव तद्वासिसदनानि च
पक्षिणःस्तम्भवर्याश्चवृक्षावाप्यः सरांसि च । गोमेदकल्पिताएव कुङ्कुमारुणविग्रहाः
तन्मध्यस्था महादेव्योद्वात्रिंशच्छक्तयःस्मृताः । नानाशस्त्रप्रहरणागोमेदमणिभूषिताः
प्रत्येकलोकवासिन्यः परिवार्य समन्ततः । गोमेदसाले सन्नद्धा पिशाचवदना नृप ॥

स्वर्लोकवासिभिर्नित्यंपूजिताश्चक्रबाहवः। क्रोधरक्तेक्षणाभिन्धिपचच्छिन्धिदहेतिच वदन्ति सततं वाचं युद्धोत्सुकहृदन्तराः। एकैकस्या महाशक्तेर्दशाक्षौहिणिकामता सेना तत्राऽप्येकशक्तिर्लक्षब्रह्माण्डनाशिनी। तादृशीनां महासेना वर्णनीया कथंनृप! रथानां नैवगणना वाहनानां तथैव च। सर्वयुद्धसमारम्भस्तत्र देव्या विराजते॥

तासां नामानि वक्ष्यामि पापनाशकराणि च।

विद्याह्रीपुष्टयः प्रज्ञा सिनीवाली कुहूस्तथा॥ ३१॥

रुद्रावीर्या प्रभा नन्दापोषिणी ऋद्धिदा शुभा। कालरात्रिर्महारात्रिर्भद्रकालीकपर्दिनी

विकृतिर्दण्डिमुण्डिन्यौ सेन्दुखण्डा शिखण्डिनी।

निशुम्भशुम्भमथिनी महिषासुरमर्दिनी॥ ३३॥

इन्द्राणी चैव रुद्राणी शङ्करार्धशरीरिणी। नारीनारायणी चैवत्रिशूलिन्यपिपालिनी

अम्बिका ह्लादिनी पश्चादित्येवं शक्तयः स्मृताः।

यद्येताः कुपितादेव्यस्तदा ब्रह्माण्डनाशनम्॥ ३५॥

पराजयो न चैतासां कदाचित्क्वचिदस्ति हि। गोमेदकमयादग्रे सद्वज्रमणिनिर्मितः दशयोजनतुङ्गोऽसौ गोपुरद्वारसंयुतः। कपाटशृङ्खलाबद्धो नववृक्षसमुज्ज्वलः॥ ३७

सालस्तन्मध्यभूम्यादि सर्वं हरिमयं स्मृतम्।

गृहाणि वीथयो रथ्या महामार्गाङ्गणानि च॥ ३८॥

वृक्षाऽऽलवालतरवः सारङ्गाअपितादृशाः। दीर्घिकाश्रेणयोवाप्यस्तडागाःकूपसंयुताः तत्र श्रीभुवनेश्वर्या वसन्ति परिचारिकाः। एकैकालक्षदासीभिः सेवितामदगर्विताः

तालवृन्तधराः काश्चिच्चषकाढ्यकराम्बुजाः।

काश्चित्ताम्बूलपात्राणि धारयन्त्योऽतिगर्विताः॥ ४१॥

काश्चित्तु छत्रधारिण्यश्चामराणां विधारिकाः।

नानावस्त्रधराः काश्चित् काश्चित्पुष्पकराम्बुजाः॥ ४२॥

नानादर्शकराः काश्चित्काश्चित्कुङ्कुमलेपनम्। धारयन्त्यः कज्जलंचसिन्दूरचषकंपराः काश्चिच्चित्रकनिर्मात्र्यःपादसंवाहनेरताः। काश्चित्तुभूषाकारिण्योनानाभूषाधराःपराः

पुष्पभूषणनिर्मात्र्यः पुष्पशृङ्गारकारिकाः । नानाविलासचतुरा बह्व्य एवं [illegible]
निबद्धपरिधानीया युवतयः सकला अपि । देवीकृपालेशवशात्तुच्छीकृतजगत्त्रयाः
एता दूत्यः स्मृता देव्यः शृङ्गारमदगर्विताः । तासांनामानिवक्ष्यामिशृणुमेनृपसत्तम
अनङ्गरूपा प्रथमाऽप्यनङ्गमदनापरा । तृतीया तु ततः प्रोक्ता सुन्दरी मदनातुरा ॥ ४८
ततो भुवनवेगा स्यात्तथा भुवनपालिका । स्यात्सर्वशिशिराऽनङ्गवेदनाऽनङ्गमेखला
विद्युद्दामसमानाङ्ग्यः क्वणत्काञ्चीगुणान्विताः । रणन्मञ्जीरचरणाबहिरन्तारितस्ततः
धावमानास्तु शोभन्ते सर्वा विद्युल्लतोपमाः । कुशलाःसर्वकार्येषुवेत्रहस्ताःसमन्ततः
अष्टदिक्षु तथैतासां प्राकाराद्बहिरेव च । सदनानि विराजन्ते नानावाहनहेतिभिः ॥
वज्रसालादग्रभागे सालोवैदूर्यनिर्मितः । दशयोजनतुङ्गोऽसौ गोपुरद्वारभूषितः ॥५३॥

वैदूर्यभूमिः सर्वाऽपि गृहाणि विविधानि च ।
वीथ्यो रथ्या महामार्गाः सर्वे वैदूर्यनिर्मिताः ॥ ५४ ॥

वापीकूपतडागाश्च स्रवन्तीनां तटानि च ।। वालुकाचैवसर्वाऽपिवैदूर्यमणिनिर्मिता
तत्राऽष्टदिक्षुपरितो ब्राह्म्यादीनां च मण्डलम् । निजैर्गणैःपरिवृतंभ्राजते नृपसत्तम!
प्रतिब्रह्माण्डमातॄणां ताः समष्टयः ईरिताः । ब्राह्मी माहेश्वरीचैवकौमारीवैष्णवीतथा
वाराही च तथेन्द्राणीचामुण्डाःसप्तमातरः । अष्टमीतुमहालक्ष्मीर्नाम्नाप्रोक्तास्तुमातरः

ब्रह्मरुद्रादिदेवानां समाकारास्तु ताः स्मृताः ।
जगत्कल्याणकारिण्यः स्वस्वसेनासमावृताः ॥ ५६ ॥

तत्सालस्य चतुर्द्वार्षु वाहनानिमहेशितुः । सज्जानिनृपतेसन्तिसालङ्काराणिनित्यशः

दन्तिनः कोटिशो वाहाः कोटिशः शिबिकास्तथा ।
हंसाः सिंहाश्च गरुडा मयूरा वृषभास्तथा ॥ ६१ ॥
तैर्युक्ताः स्यन्दनास्तद्वत्कोटिशो नृपनन्दन !।
पार्ष्णिग्राहसमायुक्ता ध्वजैराकाशचुम्बिनः ॥ ६२ ॥

कोटिशस्तुविमानानि नानाचिह्नान्वितानिच । नानावादित्रयुक्तानिमहाध्वजयुतानिच
वैदूर्यमणिसालस्याऽप्यग्रेसालःपरःस्मृतः । दशयोजनतुङ्गोऽसाविन्द्रनीलाश्मनिर्मितः

तन्मध्यभूस्तथावीथ्यो महामार्गागृहाणिच । वापीकूपतडागाश्चसर्वेतन्मणिनिर्मिताः
तत्र पद्मं तु सम्प्रोक्तं बहुयोजनविस्तृतम् । षोडशारं दीप्यमानं सुदर्शनमिवापरम् ॥
तत्र षोडशशक्तीनां स्थानानिविविधानिच । सर्वोपस्करयुक्तानिसमृद्धानिवसन्तिहि ॥
तासां नामानि वक्ष्यामि शृणु मे नृपसत्तम ! । करालीविकरालीचतथोमाचसरस्वती

श्रीदुर्गोषा तथा लक्ष्मीः श्रुतिश्चैव स्मृतिर्धृतिः ।
श्रद्धा मेधा मतिः कान्तिरार्या षोडशशक्तयः ॥ ६६ ॥

नीलजीमूतसङ्काशाः करवालकराम्बुजाः । समाखेटकधारिण्यो युद्धोपक्रान्तमानसाः

सेनान्यः सकला एताः श्रीदेव्या जगदीशितुः ।
प्रतिब्रह्माण्डसंस्थानां शक्तीनां नायिकाः स्मृताः ॥ ७१ ॥

ब्रह्माण्डक्षोभकारिण्योदेवीशक्त्युपबृंहिताः । नानारथसमारूढानानाशक्तिभिरन्विताः
एतत्पराक्रमं वक्तुं सहस्रास्योऽपि नक्षमः । इन्द्रनीलमहासालादग्रेतु बहुविस्तृतः
मुक्ताप्राकार उदितोदशयोजनदैर्घ्यवान् । मध्यभूःपूर्ववत्प्रोक्ता तन्मध्येऽष्टदलाम्बुजम्
मुक्तामणिगणाकीर्णं विस्तृतं तु सकेसरम् । तत्रदेवी समाकारा देव्यायुधधराःसदा

सम्प्रोक्ता अष्टमन्त्रिण्यो जगद्वार्ताप्रबोधिकाः ।
देवीसमानभोगास्ता इङ्गितज्ञास्तु पण्डिताः ॥ ७६ ॥

कुशलाः सर्वकार्येषु स्वामिकार्यपरायणाः । देव्यभिप्रायबोध्यस्ताश्चतुराअतिसुन्दराः

नानाशक्तिसमायुक्ताः प्रतिब्रह्माण्डवर्तिनाम् ।
प्राणिनां ताः समाचारं ज्ञानशक्त्या विदन्ति च ॥ ७८ ॥

तासां नामानि वक्ष्यामि मत्तः शृणु नृपोत्तम ! । अनङ्गकुसुमाप्रोक्ताप्यनङ्गकुसुमातुरा
अनङ्गमदना तद्वदनङ्गमदनाऽऽतुरा । भुवनपाला गगनवेगा चैव ततः परम् ॥ ८० ॥
शशिरेखा च गगनरेखा चैव ततः परम् । पाशाङ्कुशवराभीतिधरा अरुणविग्रहाः ॥
विश्वसम्बन्धिनीं वार्तां बोधयन्ति प्रतिक्षणम् । मुक्तासालादग्रभागेमहामारकतोपरः
सालोत्तमःसमुद्दिष्टोदशयोजनदैर्घ्यवान् । नानासौभाग्यसंयुक्तोनानाभोगसमन्वितः

मध्यभूस्तादृशी प्रोक्ता सदनानि तथैव च ।

षट्कोणमत्रविस्तीर्णं कोणस्था देवताः शृणु ॥ ८४ ॥

पूर्वकोणे चतुर्वक्त्रोगायत्रीसहितोविधिः । कुण्डिकाक्षगुणाभीतिदण्डायुधधरःपरः तदायुधधरा देवी गायत्रीपरदेवता । वेदाः सर्वे मूर्तिमन्तः शास्त्राणि विविधानि च स्मृतयश्च पुराणानि मूर्तिमन्तिवसन्ति हि । ये ब्रह्मविग्रहाःसन्तिगायत्रीविग्रहाश्चये व्याहृतीनां विग्रहाश्च ते नित्यं तत्रसन्ति हि । रक्षःकोणेशङ्खचक्रगदाम्बुजकराम्बुजा

सावित्री वर्तते तत्र महाविष्णुश्च तादृशः ।

ये विष्णुविग्रहाः सन्ति मत्स्यकूर्मादयोऽखिलाः ॥ ८६ ॥

सावित्रीविग्रहा ये च ते सर्वे तत्र सन्ति हि । वायुकोणेपरश्वक्षमालाभयवरान्वितः महारुद्रो वर्ततेऽत्र सरस्वत्यपि तादृशी । ये ये तु रुद्रभेदाःस्युर्दक्षिणास्यादयो नृप

गौरीभेदाश्च ये सर्वे ते तत्र निवसन्ति हि ।

चतुःषष्ट्यागमा ये च ये चान्येऽप्यागमाः स्मृताः ॥ ९२ ॥

ते सर्वे मूर्तिमन्तश्च तत्र वै निवसन्ति हि ।

अग्निकोणे रत्नकुम्भं तथा मणिकरण्डकम् ॥ ९३ ॥

दधानो निजहस्ताभ्यां कुबेरो धनदायकः ।

नानावीथीसमायुक्तो महालक्ष्मीसमन्वितः ॥ ९४ ॥

देव्यानिधिपतिस्त्वास्ते स्वगणैः परिवेष्टितः । वारुणे तुमहाकोणे मदनोरतिसंयुतः पाशाङ्कुशधनुर्बाणधरो नित्यं विराजते । शृङ्गारामूर्तिमन्तस्तुतत्र सन्निहिताः सदा ईशानकोणे विघ्नेशो नित्यं पुष्टिसमन्वितः । पाशाङ्कुशधरोवीरो विघ्नहर्ताविराजते विभूतयो गणेशस्य याया सन्तिनृपोत्तम ।। ताःसर्वानिवसन्त्यत्रमहैश्वर्यसमन्विताः प्रतिब्रह्माण्डसंस्थाना ब्रह्मादीनां समष्टयः । एतेब्रह्मादयःप्रोक्ताःसेवन्तेजगदीश्वरीम् महामारकतस्याग्रे शतयोजनदैर्घ्यवान् । प्रवालशालोऽस्त्यपरः कुङ्कुमारुणविग्रहः मध्यभूस्तादृशीप्रोक्ता सदनानिचपूर्ववत् । तन्मध्येपञ्चभूतानांस्वामिन्यःपञ्चसन्तिच हृल्लेखा गगना रक्ता चतुर्थी तु करालिका । महोच्छुष्मापञ्चमीचपञ्चभूतसमप्रभाः॥ पाशाङ्कुशवराभीतिधारिण्योऽमितभूषणाः । देवीसमानवेषाढ्या नवयौवनगर्विताः ॥

प्रवालशालादग्रे तु नवरत्नविनिर्मितः। बहुयोजनविस्तीर्णो महाशालोऽस्ति भूमिप!
तत्रचाम्नायदेवीनां सदनानि बहून्यपि। नवरत्नमयान्येव तडागाश्च सरांसि च॥
श्रीदेव्या येऽवताराः स्युस्ते तत्र निवसन्ति हि।
महाविद्या महाभेदाः सन्ति तत्रैव भूमिप!॥ १०६॥
निजावरणदेवीभिर्निजभूषणवाहनैः। सर्वदेव्यो विराजन्ते कोटिसूर्यसमप्रभाः॥
सप्तकोटिमहामन्त्रदेवताः सन्ति तत्र हि। नवरत्नमयादग्रे चिन्तामणिगृहं महत्॥
तत्रत्यंवस्तुमात्रंतुचिन्तामणिविनिर्मितम्। सूर्योद्गारोपलैस्तद्वच्चन्द्रोद्गारोपलैस्तथा
विद्युत्प्रभोपलैः स्तम्भाः कल्पितास्तु सहस्रशः।
येषां प्रभाभिरन्तस्थं वस्तु किञ्चिन्न दृश्यते॥ ११०॥
इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायांद्वादशस्कन्धे
पद्मरागादिमणिनिर्मितप्राकारवर्णनंनामैकादशोऽध्यायः॥ ११॥

---

## द्वादशोऽध्यायः

### मणिद्वीपवर्णनम्

**व्यास उवाच**

तदेव देवीसदनं मध्यभागे विराजते। सहस्रस्तम्भसंयुक्ताश्चत्वारस्तेषु मण्डपाः॥
शृङ्गारमण्डपश्चैको मुक्तिमण्डप एव च। ज्ञानमण्डपसञ्ज्ञस्तु तृतीयः परिकीर्तितः
एकान्तमण्डपश्चैव चतुर्थः परिकीर्तितः। नानावितानसंयुक्ता नानाधूपस्तु धूपिताः
कोटिसूर्यसमाः कान्त्या भ्राजन्ते मण्डपाः शुभाः।
तन्मण्डपानां परितः काश्मीरवनिका स्मृता॥ ४॥
मल्लिकाकुन्दवनिका यत्र पुष्कलकाः स्थिताः।
असङ्ख्याता मृगमदैः पूरितास्तत्स्रवा नृप!॥ ५॥

महापद्माटवी तद्वद्रत्नसोपाननिर्मिता । सुधारसेन सम्पूर्णा गुञ्जन्मत्तमधुव्रता ॥ १६ ॥
हंसकारण्डवाकीर्णागन्धपूरितदिक्तटा । वनिकानांसुगन्धैस्तुमणिद्वीपंसुवासितम्
शृङ्गारमण्डपेदेव्योगायन्तिविविधैःस्वरैः । सभासदोदेववरा मध्ये श्रीजगदम्बिका
मुक्तिमण्डपमध्ये तु मोचयत्यनिशं शिवा ॥ ज्ञानोपदेशं कुरुते तृतीये नृप मण्डपे
चतुर्थमण्डपे चैव जगद्रक्षाविचिन्तनम् । मन्त्रिणीसहिता नित्यं करोतिजगदम्बिका
चिंतामणिगृहेराजञ्छक्तितत्त्वात्मकैःपरैः । सोपानैर्दशभिर्युक्तो मञ्चकोऽप्यधिराजते
ब्रह्माविष्णुश्चरुद्रश्चईश्वरश्चसदाशिवः । एते मञ्चखुराः प्रोक्ताः फलकस्तु सदाशिवः
तस्योपरि महादेवो भुवनेशो विराजते । या देवी निजलीलार्थं द्विधाभूता बभूव ह
सृष्ट्यादौ तु स एवाऽयं तदर्धाङ्गोमहेश्वरः । कन्दर्पदर्पनाशोद्यत्कोटिकन्दर्पसुन्दरः ॥
पञ्चवक्त्रस्त्रिनेत्रश्च मणिभूषणभूषितः । हरिणाऽभीतिपरशून्वरं च निजबाहुभिः ॥
दधानःषोडशाब्दोऽसौदेवः सर्वेश्वरोमहान् । कोटिसूर्यप्रतीकाशश्चन्द्रकोटिसुशीतलः

शुद्धस्फटिकसंकाशस्त्रिनेत्रः शीतलद्युतिः ।
वामाङ्के सन्निषण्णाऽस्य देवी श्रीभुवनेश्वरी ॥ १७ ॥

नवरत्नगणाकीर्णकाञ्चीदामविराजिता । तप्तकाञ्चनसन्नद्धवैदूर्याङ्गदभूषणा ॥ १८ ॥
कणच्छ्रीचक्रताटङ्कविटङ्कवदनाम्बुजा । ललाटकान्तिविभवविजितार्धसुधाकरा ॥
बिम्बकान्तितिरस्कारिरदच्छदविराजिता । लसत्कुङ्कुमकस्तुरीतिलकोद्भासितानना
दिव्यचूडामणिस्फारचञ्चच्चन्द्रकसूर्यका । उद्यत्कविसमस्वच्छनासाभरणभासुरा ॥
चिन्ताकलम्बितस्वच्छमुक्तागुच्छविराजिता । पाटीरपङ्ककर्पूरकुङ्कुमालङ्कृतस्तनी

विचित्रविविधाकल्पा कम्बुसङ्काशकन्धरा ।
दाडिमीफलबीजाभदन्तपङ्क्तिविराजिता ॥ २३ ॥

अनर्घ्यरत्नघटितमुकुटाञ्चितमस्तका । मत्तालिमालाविलसदलकाढ्यमुखाम्बुजा ॥
कलङ्ककार्श्यनिर्मुक्तशरच्चन्द्रनिभानना । जाह्नवीसलिलावर्तशोभिनाभिविभूषिता ॥
माणिक्यशकलाबद्धमुद्रिकाङ्गुलिभूषिता । पुण्डरीकदलाकारनयनत्रयसुन्दरी ॥ २६ ॥
कल्पिताच्छमहारागपद्मरागोज्ज्वलप्रभा । रत्नकिङ्किणिकायुक्तरत्नकङ्कणशोभिता ॥

मणिमुक्तासरापारलसत्पदकसन्ततिः । रत्नाङ्गुलिप्रवितत‌प्रभाजाललसत्करा ॥ २८॥
कञ्चुकीगुम्फितापारनानारत्नततिद्युतिः । मल्लिकामोदिधम्मिल्लमल्लिकालिसरावृता
सुवृत्तनिबिडोत्तुङ्गकुचभारालसा शिवा । वरपाशांकुशाभीतिलसद्बाहुचतुष्टया ॥३०
सर्वशृङ्गारवेषाढ्या सुकुमाराङ्गवल्लरी । सौन्दर्यधारा सर्वस्वा निर्व्याजकरुणामयी ॥

निजसंलापमाधुर्यविनिर्भर्त्सितकच्छपी ।
कोटिकोटिरवीन्दूनां कान्तिं या बिभ्रती परा ॥ ३२ ॥
नानासखीभिर्दासीभिस्तथा देवाङ्गनादिभिः ।
सर्वाभिर्देवताभिस्तु समन्तात्परिवेष्टिता ॥ ३३ ॥
इच्छाशक्त्या ज्ञानशक्त्या क्रियाशक्त्या समन्विता
लज्जा तुष्टिस्तथा पुष्टिः कीर्तिः क्षमा दया ॥ ३४ ॥
बुद्धिर्मेधा स्मृतिर्लक्ष्मीर्मूर्तिमत्योऽङ्गनाः स्मृताः ।
जया च विजया चैवाऽप्यजिता चाऽपराजिता ॥ ३५ ॥
नित्या विलासिनी दोग्ध्री त्वघोरा मङ्गला नवा ।
पीठशक्तय एतास्तु सेवन्ते यां पराम्बिकाम् ॥ ३६ ॥

यस्यास्तुपार्श्वभागे स्तो निधीतौ शङ्खपद्मकौ । नवरत्नवहानद्यस्तथावैकांचनस्रवाः

सप्तधातुवहा नद्यो निधिभ्यां तु विनिर्गताः ।
सुधासिन्ध्वन्तगामिन्यस्ताः सर्वा नृपसत्तम !॥ ३८ ॥

सा देवी भुवनेशानी तद्वामाङ्के विराजते । सर्वेशत्वं महेशस्य यत्सङ्गादेव नान्यथा
चिन्तामणिगृहस्याऽस्य प्रमाणंशृणुभूमिप !। सहस्रयोजनायामं महान्तस्तत्प्रचक्षते
तदुत्तरेमहाशालाःपूर्वस्माद्द्विगुणाः स्मृताः । अन्तरिक्षगतंत्वेतन्निराधारं विराजते
सङ्कोचश्च विकाशश्च जायतेऽस्य निरन्तरम् । पटवत्कार्यवशतः प्रलये सर्जने तथा
शालानांचैव सर्वेषां सवकान्तिपरावधि । चिन्तामणिगृहं प्रोक्तं यत्र देवी महोमयी
ये ये उपासकाः सन्ति प्रतिब्रह्माण्डवर्तिनः । देवेषु नागलोकेषु मनुष्येष्वितरेषु च
श्रीदेव्यास्ते च सर्वेऽपिव्रजन्त्यत्रैवभूमिप !। देवीक्षेत्रे ये त्यजन्तिप्राणान्देव्यर्चनेरता

ते सर्वे यान्ति तत्रैवयत्र देवी महोत्सवा। घृतकुल्या दुग्धकुल्यादधिकुल्यामधुस्रवाः

स्यन्दन्ति सरितः सर्वास्तथाऽमृतवहाः पराः।

द्राक्षारसवहाः काश्चिज्जम्बूरसवहाः पराः॥ ४७॥

आम्रेक्षुरसवाहिन्यो नद्यस्तास्तुसहस्रशः। मनोरथफला वृक्षावाप्यः कूपास्तथैव च

यथेष्टपानफलदा न न्यूनं किञ्चिदस्ति हि। नरोगपलितंवाऽपि जरावाऽपिकदाचन

न चिन्तानचमात्सर्यंकामक्रोधादिकं तथा। सर्वे युवानःसस्त्रीकाःसहस्रादित्यवर्चसः

भजन्ति सततं देवीं तत्र श्रीभुवनेश्वरीम्।

केचित्सलोकतापन्नाः केचित्सामीप्यतां गताः॥ ५१॥

सरूपतां गताः केचित्सार्ष्टितां च परे गताः।

या यास्तु देवतास्तत्र प्रतिब्रह्माण्डवर्तिनाम्॥ ५२॥

समष्टयःस्थितास्तास्तुसेवन्तेजगदीश्वरीम। सप्तकोटिमहामन्त्रा मूर्तिमन्तउपासते

महाविद्याश्च सकलाः साम्यावस्थात्मिकां शिवाम्।

कारणब्रह्मरूपां तां मायाशबलविग्रहाम॥ ५४॥

इत्थंराजन्मयाप्रोक्तंमणिद्वीपंमहत्तरम्। न सूर्यचन्द्रौ नोविद्युत्कोटयोऽग्निस्तथैव च

एतस्य भासा कोट्यंशकोट्यंशेनाऽपि ते समाः।

क्वचिद्विद्रुमसंकाशं क्वचिन्मरकतच्छवि॥ ५६॥

विद्युद्भानुसमच्छायंमध्यसूर्यसमंक्वचित्। विद्युत्कोटिमहाधारासारकान्तिततंक्वचित्

क्वचित्सिन्दूरनीलेन्द्रंमाणिक्यसदृशच्छवि। हीरसारमहागर्भधगद्धगितदिक्तटम्॥

कान्त्या दावानलसमं तप्तकाञ्चनसन्निभम्। क्वचिच्चन्द्रोपलोद्गारंसूर्योद्गारंच कुत्रचित्

रत्नशृङ्गिसमायुक्तं रत्नप्रकारगोपुरम्। रत्नपत्रै रत्नफलैर्वृक्षैश्च परिमण्डितम्॥

नृत्यन्मयूरसंघैश्चकपोतरणितोज्ज्वलम्। कोकिलाकाकलीलापैःशुकलापैश्चशोभितम्

सुरम्यरमणीयाम्बुलक्षावधिसरोवृतम्। तन्मध्यभागविलसद्विकचद्रत्नपङ्कजैः॥६२

सुगन्धिभिः समन्तात् वासितं शतयोजनम्। मन्दमारुतसम्भिन्नचलद्द्रुमसमाकुलम्

चिन्तामणिसमूहानां ज्योतिषावितताम्बरम्।

रत्नप्रभाभिरभितो धगद्धगितदिक्तटम् ॥ ६४ ॥

वृक्षव्रातमहागन्धवातव्रातसुपूरितम् । धूपधूपायितं राजन्मणिद्वीपायुतोज्ज्वलम् ॥

मणिजालकसच्छिद्रतरलोदरकान्तिभिः । दिङ्मोहजनकं चैतद्दर्पणोदरसंयुतम् ॥

ऐश्वर्यस्य समग्रस्य शृङ्गारस्याऽखिलस्य च ।

सर्वज्ञतायाः सर्वायास्तेजसश्चाऽखिलस्य च ॥ ६७ ॥

पराक्रमस्य सर्वस्य सर्वोत्तमगुणस्य च । सकलाया दयायाश्च समाप्तिरिह भूपते !॥

राज्ञआनन्दमारभ्यब्रह्मलोकान्तभूमिषु । आनन्दायेस्थिताःसर्वे तेऽत्रैवान्तर्भवन्ति हि

इति तेवर्णितंराजन्मणिद्वीपं महत्तरम् । महादेव्याः परं स्थानं सर्वलोकोत्तमोत्तमम्

एतस्यस्मरणात्सद्यःसर्वपापंविनश्यति ।'प्राणोत्क्रमणसन्धौतुस्मृत्वातत्रैवगच्छति

अध्यायपञ्चकं त्वेतत्पठेन्नित्यं समाहितः । भूतप्रेतपिशाचादिबाधा तत्र भवेन्नहि ॥

नवीनगृहनिर्माणे वास्तुयागे तथैव च । पठितव्यं प्रयत्नेन कल्याणं तेन जायते ॥

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायांद्वादशस्कन्धे मणिद्वीपवर्णनंनाम द्वादशोऽध्यायः ॥ १२ ॥

---

## त्रयोदशोऽध्यायः

### जनमेजयद्वाराभागवतश्रवणाम्बामखपूर्वकंस्वपित्रुद्धारकरणम्

**व्यास उवाच**

इति ते कथितं भूपः यद्यत्पृष्टं त्वयाऽनघ !। नारायणेन यत्प्रोक्तं नारदाय महात्मने ॥

श्रुत्वैतत्तुमहादेव्याःपुराणंपरमाद्भुतम् । कृतकृत्यो भवेन्मर्त्यो देव्याः प्रियतमो हिसः

कुरु चाऽम्बामखं राजन्स्वपित्रुद्धरणाय वै ।

खिन्नोऽसि येन राजेन्द्र! पितुर्ज्ञात्वा तु दुर्गतिम् ॥ ३ ॥

गृहाण त्वं महादेव्या मन्त्रं सर्वोत्तमोत्तमम् ।

यथाविधि विधानेन जन्मसाफल्यदायककम् ॥ ४ ॥

सूत उवाच

तच्छ्रुत्वा नृपशार्दूल! प्रार्थयित्वा मुनीश्वरम् । तस्मादेव महामन्त्रं देवीप्रणवसञ्ज्ञकम्
दीक्षाविधिविधानेन जग्राह नृपसत्तमः । तत आहूय धौम्यादीन्नवरात्रसमागमे ॥
अम्बायज्ञं चकाराऽऽशुवित्तशाठ्यविवर्जितः । ब्राह्मणैःपाठयामासपुराणन्त्वेतदुत्तमम्

श्रीदेव्यम्बेऽबिकाप्रीत्यै देवीभागवतं परम् ।
ब्राह्मणान्भोजयामासाऽप्यसङ्ख्यातान्सुवासिनीः ॥ ८ ॥
कुमारीर्वटुकादींश्च दीनानाथांस्तथैव च ।
द्रव्यप्रदानैस्तान्सर्वान्सन्तोष्य वसुधाधिपः ॥ ९ ॥

समाप्य यज्ञं संस्थानेसंस्थितोयावदेव हि । तावदेव हि चाकाशान्नारदःसमवातरत्
रणयन्महतीं वीणांज्वलदग्निशिखोपमः । ससम्भ्रमः समुत्थाय दृष्ट्वा तं नारदंमुनिम्
आसनाद्युपचारैश्च पूजयामास भूमिपः । कृत्वा तु कुशलप्रश्नं पप्रच्छागमकारणम्

राजोवाच

कुत आगमनंसाधोब्रूहि किंकरवाणि ते । सनाथोऽहं कृतार्थोऽहं त्वदागमनकारणात्
इति राज्ञो वचः श्रुत्वा प्रोवाच मुनिसत्तमः । अद्याऽऽश्चर्यं मया दृष्टंदेवलोकेनृपोत्तम!
तन्निवेदयितुंप्राप्तस्त्वत्सकाशेसुविस्मितः । पिता ते दुर्गतिंप्राप्तोनिजकर्मविपर्ययात्
स एवाऽयं दिव्यरूपवपुर्भूत्वाऽधुनैव हि । देवदेवैःस्तुतःसम्यगप्सरोभिः समन्ततः
विमान वरमारुह्य मणिद्वीपं गतोऽभवत् । देवीभागवतस्याऽस्य श्रवणोत्थफलेनव

अम्बामखफलेनाऽपि पिता ते सुगतिं गतः ।
धन्योऽसि कृतकृत्योऽसि जीवितं सफलं तव ॥ १८ ॥

नरकादुद्धृतस्तातस्त्वयातु कुलभूषण !। देवलोकेस्फीतकीर्तिस्तवाऽद्यविपुलाऽभवत्

सूत उवाच

नारदोक्तं समाकर्ण्य प्रेमगद्गदितान्तरः । पपात पादम्बुजयोर्व्यासस्याद्भुतकर्मणः ॥
तवाऽनुग्रहतो देव कृतार्थोऽहं महामुने !। किम्मया प्रतिकर्तव्यं नमस्कारादृते तव

अनुग्राह्यः सदैवाऽहमेवमेवत्वया मुने !। इति राज्ञो वचः श्रुत्वाप्याशीर्भिरभिनन्द्य च उवाच वचनं श्लक्ष्णं भगवान्बादरायणः । राजन्सर्वंपरित्यज्य भज देवीपदाम्बुजम् देवीभागवतं चैव पठ नित्यं समाहितः । अम्बामखं सदाभक्त्याकुरु नित्यमतन्द्रितः, अनायासेन तेन त्वं मोक्ष्यसे भवबन्धनात् । सन्त्यन्यानि पुराणानि हरिरुद्रमुखानिच देवीभागवतस्याऽस्य कलां नार्हंति षोडशीम् । सारमेतत्पुराणानांवेदानांचैव सर्वशः मूलप्रकृतिरेवैषा यत्र तु प्रतिपाद्यते । समं तेन पुराणं स्यात्कथमन्यन्नृपोत्तम ॥ पाठे वेदसमं पुण्यं यस्य स्याज्जनमेजय !। पठितव्यं प्रयत्नेन तदेव विबुधोत्तमैः इत्युक्त्वा नृपवर्यंतंजगाममुनिराट् ततः । जग्मुश्चैवयथास्थानंधौम्यादिमुनयोऽमलाः देवीभागवतस्यैव प्रशंसां चक्रुरुत्तमाम् । राजा शशास धरणीं ततः सन्तुष्टमानसः

देवीभागवतं चैव पठञ्छृण्वन्निरन्तरम्

इति श्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायांद्वादशस्कन्धे श्रीजनमेजयेनाम्बामखकरणदेवीभागवतश्रवणपूर्वकंस्वपितृउद्धारवर्णनंनाम त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्दशोऽध्यायः

### श्रीमद्देवीभागवतपुराणफलवर्णनम्

सूत उवाच

अर्धश्लोकात्मकंयत्तु देवीवक्त्राब्जनिर्गतम । श्रीमद्भागवतं नाम वेदसिद्धान्तबोधकम् उपदिष्टं विष्णवे यद्वटपत्रनिवासिने । शतकोटिप्रविस्तीर्णं तत्कृत ब्रह्मणा पुरा तत्सारमेकतः कृत्वा व्यासेन शुकहेतवे । अष्टादशसहस्रं तु द्वादशस्कन्धसंयुतम् देवीभागवतं नाम पुराणं ग्रथित पुरा । अद्याऽपि देवलोकेतद्बहुविस्तीर्णमस्ति हि नानेन सादृश पुण्यं पवित्रं पापनाशनम् । पदे पदेऽश्वमेधस्य फलमाप्नोति मानवः ॥

पौराणिकं पूजयित्वा वस्त्राद्याभरणादिभिः ।

व्यासबुद्ध्या तन्मुखात्तु श्रुत्वैतत्समुपोषितः ॥ ६ ॥

लिखित्वा निजहस्तेन लेखकेनाऽथवा मुने !।
प्रौष्ठपद्यां पौर्णमास्यां हेमसिंहसमन्वितम् ॥ ७ ॥
दद्यात्पौराणिकायाऽथ दक्षिणाञ्च पयस्विनीम् ।
सालङ्कृतां सवत्साञ्च कपिलां हेममालिनीम् ॥ ८ ॥
भोजयेद् ब्राह्मणानन्तेऽप्यध्यायपरिसम्मितान् ।
सुवासिनीस्तावतीश्च कुमारीबटुकैः सह ॥ ६ ॥

देवीबुद्ध्यापूजयेत्तान्वसनाभरणादिभिः । पायसान्नवरेणाऽपिगन्धस्रक्कुसुमादिभिः
पुराणदानेनैतेन भूदानस्यफलं लभेत् । इहलोके सुखीभूत्वाऽप्यन्ते देवीपुरं व्रजेत् ॥

नित्यं यः शृणुयाद्भक्त्या देवीभागवतं परम् ।
न तस्य दुर्लभं किञ्चित्कदाचित्क्वचिदस्ति हि ॥ १२ ॥

अपुत्रो लभतेपुत्रान्धनार्थीधनमाप्नुयात् । विद्यार्थीप्राप्नुयाद्विद्यांकीर्तिमण्डितभूतलः
वन्ध्या वा काकवन्ध्यावामृतवन्ध्या च याङ्गना । श्रवणादस्यतद्दोषान्निवर्तेतनसंशयः
यद्गेहे पुस्तकं चैतत्पूजितं यदि तिष्ठति । तद्गेहं न त्यजेन्नित्यं रमाचैव सरस्वती
नेक्षन्ते तत्रवेतालडाकिनीराक्षसादयः । ज्वरितं तु नरंस्पृष्ट्वा पठेदेतत्समाहितः ॥
मण्डलान्नाशमाप्नोतिज्वरोदाहसमन्वितः ।शतावृत्त्याऽस्यपठनात्क्षयरोगोविनश्यति
प्रतिसन्ध्यंपठेद्यस्तुसन्ध्यांकृत्वासमाहितः । एकैकमस्यचाध्यायंसनरोज्ञानवान्भवेत्
शकुनांश्चैव वीक्षेत कार्याकार्येषु चैव हि । तत्प्रकारः पुरस्तात्तकथितोऽस्तिमयामुने

नवरात्रे पठेन्नित्यं शारदीयेऽतिभक्तितः ।
तस्याऽम्बिका तु सन्तुष्टा ददातीच्छाधिकं फलम् ॥ २० ॥

वैष्णवैश्चैव शैवैश्च रमोमाप्रीतये सदा । सौरैश्चगाणपत्यैश्च स्वेष्टशक्तेश्च तुष्टये ॥
पठितव्यं प्रयत्नेन नवरात्रचतुष्टये । वैदिकैर्निजगायत्रीप्रीतयेनित्यशो मुने !॥ २२ ॥
पठितव्यं प्रयत्नेनविरोधोनाऽत्रकस्यचित् । उपासनातुसर्वेषांशक्तियुक्ताऽस्तिसर्वदा
तच्छक्तेरेव तोषार्थं पठितव्यंसदा द्विजैः । स्त्रीशूद्रो न पठेदेतत्कदापि च विमोहितः

शृणुयाद् द्विजवक्त्रात्तु नित्यमेवेति च स्थितिः ।

किम्पुनर्बहुनोक्तेन सारं वक्ष्यामि तत्त्वतः ॥ २५ ॥
दसारमिदं पुण्यं पुराणं द्विजसत्तमाः ।। वेदपाठसमं पाठे श्रवणे च तथैव हि ॥२६
सच्चिदानन्दरूपांतांगायत्रीप्रतिपादिताम् । नमामिह्रींमयींदेवींधियोयोनःप्रचोदयात्
ति सूतवचःश्रुत्वानैमिषीयास्तपोधनाः । पूजयामासुरत्युच्चैःसूतंपौराणिकोत्तमम्
प्रसन्नहृदयाः सर्वे देवीपादाम्बुजार्चकाः । निर्वृत्तिं परमां प्राप्ताःपुराणस्यप्रभावतः
नमश्चक्रुः पुनः सूतंक्षमाप्य च मुहुर्मुहुः । संसारवारिधेस्तात! प्लवोऽस्माकंत्वमेवहि
इति स मुनिवराणामग्रतः श्रावयित्वा सकलनिगमगुह्यं देविमेतत्पुराणम् ।
नतमथमुनिसङ्घं वर्धयित्वाऽऽशिषाम्बाचरणकमलभृङ्गो निर्जगामाऽथ सूतः ॥ ३१ ॥
इतिश्रीदेवीभागवते महापुराणेऽष्टादशसाहस्र्यां संहितायांद्वादशस्कन्धे
श्रीमद्देवीभागवतपुराणफलवर्णनंनाम चतुर्दशोऽध्यायः ॥ १४ ॥

॥ स्वस्ति ॐ ॥

नमस्त्रिभुवनेश्वर्यै

श्रीमातृचरणार्पणमस्तु

समाप्तमिदंश्रीमद्देवीभागवतंमहापुराणम्

श्रीरस्तु

——:*:——